पारयन्ति, किन्तु भक्तानां समनस्कहृषीकाणां स्वयमेव विषयो भवति हृषीकेषः समर्थयेते चैतच्छ्रीमद् भागवतमानसे । तद्ययथा कृतभगवत्सक्षात्कारो ध्रुवः प्राह—

**योऽन्तः प्रविश्य ममवाचमिमां प्रसुप्ताम् ।**
**संजीवयत्यखिलशक्तिधरस्वधाम्ना ।**
**अन्यांश्च हस्तचरणश्रवणत्वगादीन् ।**
**प्राणान् नमो भगवते पुरुषाय तुभ्यम् ।।**

(श्रीमद्भागवत ४/९/५)

एवं मानसेऽपि योगिराजजनकः श्रीरामं प्रति प्राह—

**नयन विषय मोकहुं भयउ सो समस्त सुखमूल ।**
**सबद लाभ जग जीव कहँ भये ईश अनुकूल ।।**

(मानस १/३४१)

तस्मादिदं सुस्पष्टं यत् समनस्केन्द्रियाणां परे ब्रह्मणि प्रसराभावेऽपि भक्तिकृपावशंवदः परमेश्वरश्चेन् निजाचिन्त्यशक्तिबलेन साधकस्य चक्षुरादिविषयः सम्पद्यतां, तदा भगवत्साक्षात्कारे न श्रुतिविरोधः । अतो मुण्डकश्रुतिरपि प्राह **यमे वैस वृणुते तेन लभ्यस्तस्यै ईष आत्मा विवृणुते तनुं स्वाम्** । यथा, येन प्रकारेण अनुशिष्यात्, शिष्यमनुशास्त्वाचार्यः, यद्वा अनुशिष्यादिति **व्यत्ययोबहुलम्** पा.अ. ३-१-८५ इत्यनेन उत्तमपुरुषबहुवचनार्थे प्रथमपुरुषैकवचन प्रयोगः, अनुशिष्याम् इति प्रयोक्तव्ये अनुशिष्यादिति प्रायुङ्क्त । एतत्, इमं प्रकारं न विद्मः, केन प्रकारेण विशिष्टाद्वैतं ब्रह्म शिष्यमुपदिशेम इति न बुद्ध्यामहे । कथमित्याह—न विजानीमः, यतो हि तस्य ब्रह्मणो निःशेषेण वक्तुमशक्यत्वात्, यदि वयमेव नैव विशेषेण जानीमः तदा कथमुपदिशेम सामान्यतयाजानन्तो नान्यमुपदेष्टुमधिकृताः वयमिति ध्वन्यते ।।श्रीः।।

एवमात्मनि ब्रह्मणो विशिष्टज्ञानाभावमाकल्य्य यत्किञ्चित् ज्ञानाधारेण शिष्यं प्रति ब्रह्मणि सर्वथैव वक्तुमशक्यत्वसन्देहनिराचिकीर्षया प्राह– यद्यपि पूर्णतया ब्रह्म कोऽपि ज्ञातुं न प्रभवति । किन्तु तत्कृपया प्रयत्नवान् यत्किंञ्चित् ज्ञातुं यत्किञ्चित् वक्तुं च क्षमत एव, अन्यथा समस्तोऽप्युपनिषद्भाग एव मोघारम्भः स्यात् ।

**अन्यदेव तद्विदितादथो आविदितादधि ।**
**इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ।।४।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् विदितात् अन्यत् एव, अथो (तत्) अविदितात् अधि इति पूर्वेषाम् (सकाशात्) शुश्रुम (वयम् इति शेषः) ये नः तत् व्याचचक्षिरे, इत्यन्वयः।

यद्यपि ब्रह्म प्रत्यक्षानुमानोपमानार्थापत्यनुपलब्धिचैष्टिंकादिप्रमाणागोचरतया अत्यन्तमुपदेशानर्हं तथापि त्वया न भेतव्यम् । भवतु नाम पूर्णतया तस्योपदेशाभावः परं निजगिरं पवित्रयितुं त्वां च कृतकृत्यं कर्तुं स्वकीयबुद्धिपात्रतानुपसारं तत्कृपाप्रसादलब्धत्वदुपदेशानुरूपज्ञानसामग्रीकस्त्वामुपदिशामः त्वया च सावधानेन श्रोतव्यम् । तत्, उपदेशविषयं ब्रह्म विदितात् विदि क्रियाकर्मभूतात् नश्वरात् संसारात् अन्यदेव विलक्षणमेव ब्रह्म नैव संसार इव जन्ममरणकूपे संसरति **विजरो विमृत्युर्विशोकः** इति श्रुतेः । अविदितात्, विदि कर्मतो बहिर्भूतात् अक्षरात् जीवात्मनः अधि, उपरिवर्तमानं ब्रह्म । इह शरीरे खलु द्वौ पुरुषौ तिष्ठतः क्षराक्षरौ क्षरो नाम क्षरणक्रियाश्रयः नाशवान् अष्टप्रकृतिनिर्मितभूतसमुदायः क्षरतीति क्षर इति व्युत्पत्तेः । अपरश्च अक्षरः सौम्यो जीवात्मा **नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः** इति स्मृतेः । इदं खलु ब्रह्म परमात्मनामधेयं भगवच्छब्दवाच्यं क्षराक्षरसंज्ञाभ्यां संसारजीवात्माभ्यां चिदचिद्भ्यां विलक्षणम् क्षरः खलु सर्वैः ज्ञातः अचित् अक्षरो जीवात्मा सूक्ष्मत्वात् अविदितप्रायः **श्रुत्वाप्येन वेदं न चैवं कश्चित्** इति स्मृतेश्च, परमात्मा द्वावप्यतीतः तथा चाह पुरुषोत्तमयोगे भगवान् —

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।**
**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ।।**

(गीता १५/१६/१७)

इति, इत्थं पूर्वेषां पूर्ववर्तिनामाचार्यणां सकाशात् गुरुशिष्यपरम्परारातः शुश्रुम आकर्णयामासिम इदं त्वां सम्प्रदायपरम्पराप्राप्तमेव क्षराक्षरातीतं चिदचिद्विशिष्टं ब्रह्मोपदिशामः न त्वशास्त्रीयं स्वकल्पितमिति भावः । ये परमाचार्याः नः अस्मभ्यं चिज्ञासुभ्यः तत् ब्रह्मज्ञानं विशिष्टाद्वैतमूलकं व्याचचक्षिरे व्याचक्रुः।।

एवं विदितात्क्षरसंज्ञात् भूतसमुदायात् अचितः विलक्षणं, तथा च अविदितात् विदिक्रियाकर्मबहिर्भूतात् अक्षरसंज्ञात् जीवात्मनश्च चितः विलक्षणम्, अन्तर्यामितया प्रतिशरीरमध्यस्थगुणत्रयवर्जितं विशुद्धचेतनघनं सगुणसाकारे सर्वथैनानुपहितं ब्रह्मेति मन्त्रार्थो व्याख्यातः । केचिदिह विदितादित्यस्य हेयादिति अविदितादित्यस्य उपदेयादिति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विवृतिं कृत्वा ताभ्यां विलक्षणमात्मतत्वं ब्रह्मेत्यस्वारसिकं व्याख्यानं विदधते तथा च आत्मैव ब्रह्मेति वाक्यार्थं व्यस्थापयन्ति तदसारं रभसा व्याख्यानम् । क्षराक्षराभ्यां विलक्षणस्य ब्रह्मणः श्रीगीतासु भगवतैव व्याख्यातत्वात् विदिताविदितशब्दयोश्च क्षराक्षरत्वरूप वाच्यार्थस्यैव सार्वजनीनत्वात् । अहो को नामा मन्दधीः रसालशब्दोच्चारणे तद्वाच्यतया पनसफलमङ्गीकरिष्यति । श्रीगीता विस्पष्टमादिशति क्षराक्षरातीतस्य पुराणपुरूषोत्तमस्य भगवतो विरुदम्—

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तम ।**
**यतोऽस्मि लोके वेदे च प्रथितः पुरूषोत्तमः ।।**

(गीता १५-१८)

न च **यस्मिन् सर्वाणि भूतान्यात्मैवाभूद् विजानतः आत्मास्य ब्रह्म** इत्यादि शताधिक श्रुतिषुब्रह्मत्वेनात्मैवप्रतिपादित इति वाच्यम् ? तत्रात्मशब्दस्य परमात्मपरकतया व्याख्यानेनादोषात् । अथ आत्मनः परमात्मव्यतिरिक्त्वे किंमानमितिचेत् ? कठश्रुतिरेव परमप्रमाणतया गृह्यतां, तथा च काठकाः पठन्ति ।

**इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः ।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा परो महान् ।।**
**महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ।।**

अत्र वर्णितानां सप्तपदार्थानामिन्द्रियार्थमनोबुद्ध्यात्ममहदव्यक्तपुरुषाणां मध्ये एकैकस्मादेकैकस्य सूक्ष्मत्वपर्यायपरत्वप्रतिपादने आत्मनो नामपञ्चमं स्थानं, ततो महतस्ततोऽव्यक्तस्य मायारव्यशक्तिविशेषस्य, ततोऽपि पुरुषस्य परतरं सर्वेभ्यो सप्तमं स्थानम्, इत्थं परत्वतालिकायां पञ्चमे स्थाने विद्यमानस्य आत्मनः को नाम सप्तम स्थानापन्नेन पुरुषेण सहाभेदं निश्चेष्यति ऋते दुराग्रहगृहिंलेभ्यः । ननु **बुद्धे रात्मेति** कठोक्तमन्त्रखण्डे प्रयुक्तात्मशब्दोऽहंकारार्थः इति चेन्न, सर्वोपनिषद्गवीदुग्धभूतायाः श्रीगीतायाः प्रकरणप्राप्तसिद्धान्तविरोधानुरेधेन नैतत्व्याख्यानमादरास्पदं तत्र, हि तृतीयाध्याये कामविजयप्रोत्साहनप्रकरणे तदात्मनो बलवत्त्वव्याख्यावसरे भगवता कण्ठरवेण बुद्धेरात्मनो बलवत्त्वरत्वं समभ्यधायि। तथा हि तत्र भगवान् कामविजयाय पार्थं नियोजयन् प्राह—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्य परं: मनः ।**
**मनसस्तु पराबुद्धिर्यो बुद्धेः परतस्तु सः ।।**

(गीता - ३-४२)

भगवत्पादश्रीशंकराचार्यचरणैरपि सः इति पदस्य आत्मा इत्येव व्याख्या कृता, तत्र पूर्वोक्तं कठोपनिषन्मन्त्रद्वयमप्युदाहृतम् । इत्थं गीतासु बुद्धेः परस्य आत्मनः जीवात्मपरत्वं स्वीकृत्य श्रुतावत्र कथं तत्परं तमेवशब्दमहंकारपरतया व्यवस्थापयितुं शक्येत ? ननु जीवात्मपरमात्मनोर्भेदसमवधानमिदमुपाध्यवच्छिन्नतया जीवात्मन औपचारिकमिति चेत् घटावच्छिन्नाकाशस्य महाकाशतो भेद इव मैवं वादीः **अचलोऽयं सनातनः, जीवभूतः सनातनः** इत्यसकृत् स्मृतौ सनातनशब्दस्य प्रत्यगात्मानं प्रति प्रयोगदर्शनात् **सनातनस्त्वं पुरुषो मतो मे, बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम्** इत्यनेकधा परमात्मनः सनातनशब्देन स्मृतत्वात् । जीवात्मपरमात्मनोरुभयोरपि प्रमाणितयोः सनातन्योः सत्तयोः सत्योः **नित्यो नित्यानां चेतनश्चेतनानाम्** इति श्रुत्यापि द्वयोः नित्यतायां प्रमाणितायां तयोर्भेदः त्रिकालं पारमार्थिक एव स्वीकर्तव्यस्त्वया । अथ अयमात्मा ब्रह्म इति महावाक्यस्य कथं संगतिर्भविश्यतीति चेच्छृणु—**आत्मा शरीरे जीवे च जीविते परमात्मनि** इति कोष वचनेन **अयमात्मा ब्रह्म** इत्यत्र प्रयुक्त आत्मशब्दः परमात्मपरः । अथ आत्मशब्दस्य विविधार्थकत्वे कोषातिरिक्तमस्ति किमपि मानं ? इति चेत् सन्ति बहवः प्रयोगाः । तद्यथा **पुमान् भवाब्धिं न तरेत् स आत्महा** अत्र भागवते प्रयुक्तः आत्म शब्दः शरीरार्थकः, नहि खलु जरामरणरहितः प्रत्यगात्मा केनापि हन्तुं शक्यते **नायं हन्ति न हन्यते, न हन्यते हन्यमाने शरीरे** इति बहुशो भगवतैवोक्तत्वात् श्रीगीतास्वपि आत्मशब्दः मनोबुद्धिःजीवात्मपरमात्मार्थेषु प्रयुक्तः । **उद्धरेदात्मनात्मानं नात्मानम वसादयेत्** अत्र तृतीयान्तआत्मशब्दः बुद्ध्यर्थः द्वितीयान्तः मनोऽर्थः, एवं **येनात्मैवात्मना जितः** अत्रापि तृतीयाप्रथमान्तौ बुद्धिमानसार्थावात्मशब्दौ मानसार्थावात्मशब्दौ **आत्मसंस्थं मनः कृत्वा** इत्यत्र परमात्मपरआत्मशब्दः । अथ जीवात्मपरमात्मनोः भेदोऽयं कदा प्रभृतीति? चेत् शाश्वतिक इति ब्रूमः । अस्मिञ्छाश्वतिकभेदे का विनिगमना ? मुण्डकश्रुतिरेव गृह्यतां, तथा हि—शरीरमेतद् वृक्षोपमानतया परिकल्प्य द्वाविमौ जीवात्मपरमात्मानौ खगाविव परस्पर सखित्वनिन्धनौ प्रत्यपादिषातां श्रुत्या, यथोक्तम्–**द्वासुपर्णा सयुजा सखाया समानंवृक्षं परिषश्वजाते** । अथ भवतां विशिष्टाद्वैतवाददर्शने सामान्यतस्तु प्रत्यगात्मपरमात्मनोरभेद इव प्रतीयते ? सत्यं प्रतीयते, किन्तु त्वादृशानामल्पज्ञानाम् । श्रुतिसारपारदृश्वनां तु त्रिकालमपि नहि, यतोहि वयमौपनिषदाः श्रीमदाद्य जगद्गुरुरामानन्दाचार्यपदपद्मपरागपीयूषपायिनः प्रत्यगात्मपरमात्मनोर्भेदं निश्चिन्वानाः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भेदभक्तिमेव समग्रेऽस्मिन् दर्शने दर्शयितुं यतामहे। अथ भवतान्नये का नाम व्युत्पत्तिरद्वैतशब्दस्य ? द्वयोः भिन्नयोः संत्तयो भावोः द्विता द्विशब्दात् भावे तल् प्रत्ययः ततस्टाप, द्वितैव द्वैतं स्वार्थे द्विताशब्दात्दण् प्रत्ययः, एवं प्रकृत्यर्थप्रकारीभूतभावप्रत्ययार्थत्वात् द्वैतशब्दः द्वित्वावच्छिन्ननिष्ठभेदत्वावच्छिन्नभेद बोधकः, न विद्यते द्वैतं भेदबुद्धिर्यस्मिन् तदद्वैतं ब्रह्म। अथ कथं भवता बहुब्रीहिसमासेनाद्वैतशब्दो व्याख्यायते कथं न तावत् तत्पुरुषपरतया न द्वैतमद्वैतमिति हि व्याख्यायते ? इति चेच्छ्रूयतां अस्मद्व्याख्याने श्रुतिरेवमूलं, माण्डुक्यश्रुतिर्हि परमात्मानमद्वैत शब्देनाभिधत्ते **शिवमद्वैतं मन्यन्ते** इत्थं नास्ति द्वैतं जगत्प्रति स्वसंततिनिरूपितैकत्वविरूद्धभेदभावो यस्मिन् तथाभूतमद्वैततत्वं रामाभिधं परब्रह्मैव। अमुष्मिन्नञ् तत्पुरूषपरकार्थव्याख्याने न विद्यते कुत्रापि श्रुतिषु मूलं तस्मात् तं पक्षं नाद्रियामहे वयं श्रुतिसिद्धान्तोपजीविनः श्रुतिसेतुपालकश्रीरामपदपद्मपराग-भूषितभालपट्टिकाः रामानन्दीयश्रीवैष्णवाः ।।श्रीः।।

अथेदानीं विशिष्टाद्वैततत्वं परब्रह्मैव तत्किञ्चिद्रूपेण शिष्यं प्रति प्रवक्तुमुपक्रमते। उपनिषदोऽस्याः प्रथममन्त्रे शिष्येण मनःप्रणवाक्चक्षुःश्रोत्रप्राणानां नियम-नकतृतत्प्रेरयितृविषयिणी जिज्ञासा समुपस्थापिता, तत्प्रेरयितुः स्वरूपं निरूप्य पुनस्तत्र परमपुरुषार्थसेवधौ परस्मिन् ब्रह्माणि पूर्वं शिष्येण चर्चाविषयीकृतानां पञ्चानामपि वाङ्मनोचक्षुःश्रोत्रप्राणानां प्रसरासम्भावनं सम्विभावयन् क्षराक्षरयोर्ब्रह्मत्वनिषेधपुरःसरं क्षराक्षरातीतं परमं ब्रह्म निश्चायत्यन्योगव्यवच्छेदेन पञ्चभिर्मन्त्रैः यदित्यादिभिः। तत्र प्रथमं ब्रह्मणो वागगोचरतां प्रतिपादयन् प्राह यदिति—

**यद्वाचानभ्युदितं येन वागभ्युद्यते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।। ४ ।।**

यत् वाचा अनभ्युदितम्, येन वाक् अभ्युद्यते, तत् एव त्वम् ब्रह्म विद्धि यत् उपासते इदम् इदम् (ब्रह्म) न, इत्यन्वयः—

यत्, वर्णितचरं ब्रह्म, वाचा कर्मेन्द्रियभूतया जडप्रकृत्या वाण्या, अनभ्युदितम अभ्युदितभिन्नं नोक्तमिति यावत्, चैतन्यमन्तरेण केवलया जडया तस्य व्याहरणासम्भवात्। येन, चैतन्यघनेन वाक्, वाणी चेतनावती सती अभ्युद्यते, स्वयमेवोक्ता ख्यातार्था च भवति। अत्र कार्यसौकर्यातिशयं द्योतयितुं कर्तृभूतवाचो व्यापाराविवक्षणेन कर्मकर्तरि लट् लकारः। तत् एव, वागधिष्ठानचेतनानतिरिक्तमिति भावः, त्वम् साधकः शिष्यः स्वात्मनः सेव्यतया ब्रह्म परब्रह्मतत्वं विद्धि, जानीहि। यत् यच्छब्दोऽयं सर्वनाम अतः निसर्गात् पूर्वचर्चितयोः विदिताविदितयोः क्षराक्षरयोः अचिच्चितोः परामर्शकः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सर्वनाम्नां पूर्वपरामर्शकत्वं स्वभावात्** इति वैय्याकरणराद्धान्तानुरोधात् । फलतः यत् क्षरं सामान्या उपासते सेवन्ते विशिष्टाः केचन यच्छाब्दबोध्यं अक्षरम् उपासते, आराध्यतया समवधारयन्ति । इदं प्रत्यक्षवर्तमानं संसाररूपं क्षरं, यद्वा इः कामः तं ददाति इति इदं कामसंकल्पदातारं क्षरसंज्ञमचित् इदं साधकानां दृश्यमानम् अक्षरं, यद्वा इं कामं द्यति खण्डयति तथाभूतं न ब्रह्मेति भावः । अभ्यां चिदचिद्भ्यां परतरं ब्रह्म इत्याशयः ॥ श्रीः ॥

अथ जडा वाणी इदं ब्रह्म कामं न वक्तुं शक्येन्नाम, परं समनस्कबुद्धिस्तु बोद्धुं शक्नोत्येव इत्यत आह—

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।। ५ ।।**

यत् मनसा न मनुते, येन मनः मतम् आहुः, तत् एव त्वम् ब्रह्म विद्धि, यत् उपासते इदम् इदम् न, इत्यन्वयः ।

यत्, पूर्वनिर्दिष्टं ब्रह्म मनसा, सङ्कल्पवृत्या उपलक्षणविधया बुद्ध्या च न मनुते, न बोद्धुं शक्यते, येन करणभूतेन मनः अन्तःकरणं मतम्, मननस्त्यस्मिन् इति मतम् निष्ठान्तमत शब्दात् मत्वर्थीयोऽच् प्रत्ययः मननक्रियायुक्तमिति भावः । नहि चेतनामन्तरेण मनः किमपि संक्ल्पयितुं पारयति । आहुः, कथयन्ति ऋषयः इति शेषः । तदेव, मनसोऽपि मननसामर्थ्यमूलं ब्रह्म, स्वाराध्यं त्वं, विद्धि निश्चिनु, यत्क्षरमक्षरं अचिच्चित् उपासते, चिन्तयन्ते इदम् इदम्, व्याख्यातपूर्वं द्वयमपि न, नैवेष्टदैवतम् ।।श्रीः।।

अथ किमस्मदाराध्यं वयं चाक्षुषसाक्षात्कारविषयं कर्तुं शक्नुमः इत्यत आह—

**यच्चक्षुषा न पश्यति येन चक्षूँषि पश्यति ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।६।।**

यत् चक्षुषा न पश्यति येन, चक्षूंषि पश्यति, तत् एव त्वम् ब्रह्म विद्धि यत् उपासते इदम् इदम् न इत्यन्वयः । यत् परमेश्वरतत्वं, जनः चक्षुषा, ज्ञानेन्द्रियप्रमुखेण चेतनारहितेन न पश्यति न साक्षात्करोति नहि खल्वल्पज्योतिषा प्राकृतनेत्रेण परमात्मा साक्षात्कार्यः, यथार्जुनं प्राह भगवान् श्रीकृष्णः **न तु मां शक्यसे दृष्टुमनेनैव स्वचक्षुषा** येन, चक्षुरधिष्ठितेन करणेन चक्षूंषि नेत्राणि अत्र बाहुलकात् एकवचनार्थे बहुवचनं, अथवा आदरार्थे बहुवचनम् । एवमेव भगवदधिष्ठितं तत् परमादणीयं पश्यति दृष्टं भवति, अत्रापि कर्मर्कृप्रयोगः, यद्वा पश्यति चराचररूपं स्वविषयी करोति तदेव ब्रह्म

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमाराध्यं तं विद्धि । यत् उपासते, संसारजीवात्मानौ भजन्ते इदम्-इदम् न, द्वाभ्यां विलक्षणं ब्रह्म ।।श्रीः।।

अथ स्यान्नाम चक्षुरगोचरं तत्तत्वं, परं गुरूमुखात् श्रुतिवाक्येभ्यश्च श्रोतुं शक्यते तत् ? अतो निषेधवचनं प्राह—

**यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदँ श्रुतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।७।।**

अन्वयस्तु पूर्ववत्, यद्ब्रह्म श्रोत्रेण श्रवणोन्द्रियेण न शृणोति नाकर्णयितुं शक्नोति, तस्य शब्दागोचरत्वात्, येन प्रकृष्टोपकारकेण इदं श्रोत्रं श्रवणेन्द्रियं श्रुतम्, श्रुतवत् आहुः, तस्यैव सामर्थ्यात् व्योमांशः श्रोत्रमालम्बते इति भावः । तदेव शब्दनियन्तारं ब्रह्म परमसेव्यं तं विद्धि । यदुपासते इदं इदं न, ततो विलक्षणं ब्रह्मेति भावः ।।श्रीः।।

अथ श्रवणागोचरत्वेऽपि तत् घ्रातुं शक्यते किम् ? अतः प्राहः,

**यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।८।।**

अन्वयस्तु पूर्ववत्—

यद् ब्रह्म प्राणेन घ्राणद्वारकवायुना न प्राणिति, तन्निरपेक्ष एव जीवति इति भावः, यद्वा न प्राणिति नैव घ्राणविषयो भवति अत्रापि कर्मकर्तृप्रयोगः । येन चैतन्यप्रदेन प्राणः प्राणवायुः प्रणीयते प्रतिनाडीमुखं प्रेश्यते, तदेव सकलेन्द्रियनियन्तारं ब्रह्म परमवर्धनशीलं वेदान्ततत्वं त्वं साधकः विद्धि । दासभूतः सन् स्वामिरूपेण सेव्यतया समवगच्छ । यत् प्रागुक्तं क्षराक्षरम् अचिच्चिती उपासते फललिप्सया सर्वे सेवन्ते, इदं न इदं द्वयमपि अचि च्चिती न ब्रह्म । तदेव द्रढयितुं भूयः प्राह—इदं न, आभ्यां क्षराक्षराभ्यां व्याकृत प्रकृतिभ्यां विलक्षणं ब्रह्म । मन्त्राणामालस्याभावात् साधकहृदयेषु तत् तत्वस्य दृढतया निविवेशयिशया अभ्यासोऽयम् । ईश्वरस्यानन्दमयत्वात् नैव पुनरावृत्तिः ।

इत्थम्—

**सर्वेन्द्रियनियन्तारं सर्वशक्तिसमन्वितम् ।**
**क्षराक्षरातीतमिदं रामाख्यं ब्रह्म तद्भज ।।श्रीः।।**

**।। इति प्रथम खण्डः ।।**

**।। श्री राघवःशन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। द्वितीयखण्डः ।।

अथ प्रथमखण्डे आचार्येण मन्त्रैरष्टाभिः बोधितब्रह्मतत्वविदितयाथातथ्यो गृहीतसद्गुरूपादमद्मः कृतकृत्यमिवात्मानं मन्यमानः सुखमन्वभूदन्तेवासी । एवमहं ब्रह्मवेदेत्यात्मानं सर्वज्ञं मन्यमानं शिष्यं निर्दर्पं चिकीर्षुराचार्यः परमात्मनः सामग्र्येण बोधागम्यत्वं प्रतिपादयन् प्राह—सौम्य ! यमनिर्वचनीयं विशिष्टाद्वैततत्वं श्रीराममद्वैतं ब्रह्म निःशेषेण वेदितुं न प्रबभूवुर्महर्षयोऽपि तं बुभुत्सुज्ञानागोचरं परमात्मानं ज्ञातं मन्यसे, वस्तुतो वत्स ! वयमपि तं सम्यग् न जानीमः । श्रुतयोऽपि तं निःशेषेण न वक्तुं प्रभवन्ति, अतो मया मन्त्राष्टकेन यत्किञ्चिदुक्तं तदनलप्रादेशमात्रम् । एतावता ज्ञानेनैव यदि त्वमात्मानं शान्तजिज्ञासं कलयसि चेन् मोघं ते जीवत्वं, जीवस्य हि तत्वजिज्ञासैव लक्ष्यं, यथा प्राह भागवते श्रीसूतः—**जीवस्य तत्व जिज्ञासा नार्थो यस्येह कर्मभिः** इदमेवान्तरं खलु जन्तुजीवयोः । जन्तुर्नाम जायते जायमानः सन्नज्ञातपरमात्मतत्वो म्रियते, जीवोनाम जीवति जानकीजीवनाय परस्मै तत्वभूताय रामाय यस्तथाभूतः । सम्प्रदानार्थेऽच् प्रत्ययो जीवधातोः । तथा हि-ब्रह्मजिज्ञासा-शून्यत्वेसति गृहीतजन्मत्वे सत्यज्ञानतिरोहितचेतनत्वम् जन्तुत्वं । जीवत्वं नाम तत्वजिज्ञासुत्वे सति गृहीतजन्मत्वे सत्यज्ञानाभिभूतचेतनत्वम् । अतस्त्वया नैतावतेव बोधेन सन्तोषः कर्तव्यः यावत्परमात्मपदं मीमांसनीयं, सर्वमिद् लक्ष्यीकृत्यप्राह यदीति—

**यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणोरूपं ।**
**यदस्य त्वं यदस्य देवेष्वथ नु मीमाँस्यमेव ते मन्ये विदितम् ।।१।।**

यदि त्वम् इति मन्यसे सुवेद अपि नूनम् ब्रह्मणः रूपम् दभ्रम् एव, अस्य यत् त्वम् अस्य यत् देवेषु (तत् दभ्रम् एव) अथ नु मन्ये ते विदितम् मीमांस्यम् एव, इत्यन्वयः ।

यदि, यद्यपि ते ब्रह्मज्ञानं नास्ति तथाप्यात्मानं ब्रह्मज्ञानिनं विजानासि चेत्, इत्यर्थः, त्वं युष्मत्पदवाच्यः साधकः इति, इत्थं मन्यसे, अभिमन्यसे, आत्मनि ब्रह्मज्ञानं कलयन् साभिमानो भवीसीति भावः । अभिमानस्य कः प्रकारः ? इत्यत आह-सुवेद, शोभानतया ब्रह्म जानामि यद्वा सु शब्दः ब्रह्मवाचकः तदेव वेद्मि इत्याकारकः । ननु यदि ब्रह्म जानन्नात्मानं ब्रह्मज्ञं मन्ये तदा किमपराधयामीत्यपेक्षमाणं प्रत्याह-अपि, अपिस्त्वर्थः हार्दमेतत्यदपराध्यसि नहि किमपि मह्यं, स्वस्मै त्वपराध्यस्येव यतो हि ज्ञानिनि ज्ञातृभावो नावसिष्ठति यदि तिष्ठति तदा न सः ज्ञानी, तस्मिन् परावरेशे ब्रह्मणि अपरोक्षानुभूतिविषयतान्नीते स्वत एव अहं भावो व्युपगतो भवति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यतस्त्वयि ब्रह्मज्ञभावो वरिवर्त्यतस्त्वं नैव सामग्रयेण जानासि। नूनम् निश्चयेन ब्रह्मणः, परमेश्वरस्य रूपम् स्वरूपं तत्वं वा दभ्रम्, अत्यन्तमल्पम् एव निःसंदेहं वेत्थ जानासि। परमात्मज्ञानं हि निरवधि, यदि त्वमात्मप्रज्ञया तदप्येवं भाषयसे तदा निश्चिनोमि यत् तावकं ज्ञानं नास्ति निरवधि, निरवधिमहिम्नो न केनापि पारं गन्तुं शक्यते। केचन रूपशब्देनात्र ब्रह्मणोऽनुभवगम्यविशेषाकृरिति व्याचक्षते। तन्नोचितं भगवतः प्रत्येकरूपस्य नित्यतया दभ्रादभ्रत्व कल्पनानौचित्यात्, अस्य एतस्य ब्रह्मणः, यद्वा अकारः रामचन्द्रः तस्य यत्, सर्वानुभवसिद्धम् स्वरूपं त्वम्, त्वयि त्वम् शब्दोऽत्र युष्मच्छब्दस्यसप्तमयन्तैकवचनार्थः। अथ कथं ? त्वं शब्दस्य सप्तक्यैकवचनान्ततया विपरिणामः देवेष्विति सप्तम्यन्तशब्दानुरोधात्। त्वं शब्दः कथं त्वयीत्यर्थपरः ? इति चेतच्छृणु **सुपां सुलुक्** पा. अ. ७-१-३९ इत्येनन ङीविभक्तेः सावादेशे **त्वाहौ सौ** पा. अ. ७-२-९४ इत्यनेन स्वादेशे **ङे प्रथमयोरम्** इत्यनेन सोरमि पूर्वरूपे त्वमिति सिद्धम्। सत्यपि विभक्तिव्यत्यये नार्थव्यत्ययः तस्मात् श्रूयमाणोऽपि त्वं शब्दः सप्तम्यन्तार्थसमर्पकतया त्वदभिन्नाधिकरणरूपामर्थमेवाभिधास्यति। एवमस्य परमात्मनः यदन्तर्यामिरूपं त्वं शब्दाभिधेये त्वयि तिष्ठति तदपि दभ्रमेव, यतो हि इदं रूपं तु त्वद् गुहानुरूपं स्वल्पाकारं, वस्तुतः परमात्मनस्तदपि किञ्चदलौकिकरूपं यत्र प्रतिलोमं कोटिकोटिब्रह्माण्डानि विजृम्भन्ते। ननु अस्य त्वमित्यत्र किमनेन त्वयीतिविपरिणामेन त्वं शब्दस्तिष्ठतु प्रथमार्थ एव ? मैवं त्वं पदाभिधेयस्य जीवस्य परमात्मपार्थक्येन कण्ठतः प्रोक्तत्वात् **द्वासुपर्णा सयुजा सखाया वेदाहमेतं पुरुषं महान्तम् आनन्दं ब्रह्मणो विद्वान् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता** एवमादीनि सन्ति सहस्राधिकानि श्रुतिवचनानि प्रमाणानि। न च अशांशिभावमाश्रित्य जीवब्रह्मणोः त्वंपदस्य प्रथमान्ततयैव स्वीकारे न दोष इति वाच्यम्। अंशशब्दस्य शकलार्थस्वीकारे परमेश्वरस्याखण्डतैव छिन्नमूलास्यात्। अथ अंशशब्दस्य अंशसदृशे लाक्षणिकप्रयोगे न दोषः। एवं हि सोपाधिचैतन्यम् अंशः निरूपाधिचैतन्यम् अंशी उपाधिभङ्गे अंशांशिनोरैक्यमिति चेन्न, तत्र सनातनशब्दप्रयोगेण तस्य च नित्यार्थकतया अंशस्योपहितचैतन्येऽनिष्टत्वस्य श्रीगीतासु भगवतैव घोषितत्वात्। तथा हि **मैवांशो जीवलोके जीवभूतः सनातनः** अथांश शब्दस्य पुत्रपर्यायतया व्याख्याने तत्र सनातनत्वस्य चोपपत्तौ समस्तदोषपरिहारे सम्भवेऽपि अंशशब्दस्य नितयपुल्लिंगत्वात् यच्छब्देन तत्परामर्शाभावात् यच्छब्दस्य विशेषणतया रूपमेवाध्याहर्तव्यम्। एवं त्वं शब्दः सप्तम्याविपरिणमय्य त्वयीत्यर्थे वाचकतया स्वीकरणीयम् इत्यलमतिपल्लवितेन। अस्य उपदेष्टनयनगोचरस्य अकारवाच्यस्य भगवतो निखिलनयनाभिरामश्रीरामस्य देवेषु इन्द्रादिषु, केचन देवशब्देन चतुर्दशकरणाधिष्ठानदेवेषु इत्यर्थं व्याचक्षते,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदस्वाभाविककल्पनाप्रसवतया नादरणीयम्। इन्द्रादिदेवेषु खलु भगवतः विभूतिरूपं विराजते । तत् दभ्रम् एव, तदपि रूपमत्यन्तमल्पमेव, भगवतो हि श्रीविग्रह एव समस्त देवनिवासस्य बहुत्र शास्त्रेषु चर्चितत्वात् । अथ, अनन्तरम् विदितप्रयत्याख्यानानन्तरमितिभावः नु, निश्चयेन मन्ये, तावकीनं मनोभावं समीक्ष्य निष्कर्षयामि इति भावः, किं निष्कृष्टमित्यत आह–ते विदितम् अत्र **कर्तृकर्मणोः कृति** इति सूत्रेण कर्तरि षष्ठी, अद्यावधि महान्तं परिश्रमं विधाय त्वया कर्तृभूतेन यदपि ब्रह्मणोरूपं विदि कर्मतां नीतं विज्ञातमित्यर्थः तन्नैव परिपूर्णम्, इतोऽप्यधिकं ज्ञातव्यम्। अस्मादिदं मीमांस्यं मीमांसाकोटौ नेयं। कस्य साधनप्रत्यवायस्य परिणामेन त्वया ब्रह्मणः स्वल्पं रूपमभिविज्ञाय स्वकीयसाधना परिपूर्णा समञ्ज्यकारि । एव, क्रियाविशेषणतया पदमिदमत्यन्तायोगं व्यवच्छिनत्ति परमात्मनो मीमांसामतिरिच्य कतमोऽपि विषयो नो मीमांस्येतेति विधिः ।।श्रीः।।

एवमाचार्यमुखात् कात्स्न्येन ब्रह्मणो विदिकर्मविषयताभावमाकर्ण्य स्वस्मिन्नरोपयिष्यणामब्रह्मज्ञत्वाभिमाननिरसनपटुसद्गुरूवचनभङ्गिमानमनुभूय भूयः श्रद्धासमवनतकन्धरः शिष्यः छलशून्यतया स्वकीयमनोदशां निसर्गतोऽनभिभूतस्वान्तः शान्तः प्राञ्जलिः प्राह छात्रः—

**नाहं मन्ये सुवेदेति नो न वेदेति वेद च ।**
**यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ।।२।।**

अहम् सुवेद इति न मन्ये, न वेद इति नो (मन्ये) च वेद नः यः तत् वेद (सः) तत् वेद न वेद इति न च वेद इत्यन्वयरीतिः ।

इदानीं शिष्यः निष्कपटमनस्तया स्वकीयसाधनापरिस्थितिं विवृण्वन् ब्रह्मणोऽनिर्वचनीयतां सूचयति। यन्मया भवच्छ्रीमुखकमलनिगलदुपदेशपीयूषं पेपीयमानेन सावधानेनापि ब्रह्मणः सामग्र्येण तत्वं ज्ञातुं कथं प्रभूयेत ? अतः यत्किञ्चिदंशतो ज्ञातं तस्माद् ब्रवीमि जानामीति, परञ्च साकल्येन न ज्ञातं तस्माद् ब्रुवे न जानामीति, ज्ञानं यत्किञ्चिदंशेन तत्प्रतियोगिताकाभावः तदवच्छेदेन, अत आह—अहम्, ब्रह्मज्ञानविषये क्रियमाणयत्नसाधकः सुवेद, शोभनतया जानामि, शोभनतत्वञ्चात्र ब्रह्मज्ञानस्य सकलांशविषयत्वम्, इति न मन्ये, न स्वीकरोमि । यतो हि व्योमव्यापिनस्तस्य समग्रज्ञानं ह्रसीयसा जीवेन परिच्छिन्नवृत्तिमस्तिष्के कथं धारयितुं शक्यम् । अत्र सूपसर्गस्य वेदेति क्रियापदेन **सहसुपा** पा. अ. २-१-४ इत्यनेन समासः । न वेद न जानामि इति, इत्थमपि नो, नाङ्गीकरोमि, च चकारोऽयं यतो हीति पदार्थः, यस्माद्धेतोः मया ब्रह्मज्ञातं तस्मादहं तदपलपितुं न शक्नोमि इति निष्कृष्टार्थः । वेद वेद्मि ब्रह्मतत्वमिति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शेषः । नन्वेकस्मिन् विषयिणि एकस्मिन्नेव काले कथं ज्ञानाज्ञानरूपं विरूद्धधर्मद्वयावगाहि विषयद्वयं स्थातुं शक्येत ? अतः प्राहोत्तरार्धेन नाहमपलपामि तवास्मिन् विरूद्धधर्मद्वयविषयानु भवे का विनिगमनोति चेत्, मत्सजातीयानुब्रह्मानुभवप्रतीतिरेव विनिगमना, यथा नः, अस्माकम् भवच्छिष्याणां मध्ये यः, कश्चन गुणनिर्धार्यमाणसाधकविशेष इति भावः तत् तत्पदार्थभूतं ब्रह्म वेद, अपरोक्षानुभवविषयं करोति तादृक् कृतब्रह्मसाक्षात्कारः तत, पूर्वोक्तं वेद, जानाति । किं वेद इत्यपि आह- न वेद इति न अहं न जानामि इत्यपि नहि, च यतो हि वेदतात्पर्यमेतत् यत् ब्रह्मतत्वं किमपि जानन्नपि तस्यावाङ्मनोगोचरत्वात् पूर्णतया तन्नजानामि इदं विरोधि धर्मद्वयं ज्ञानाज्ञानरूपं कोऽपि ब्रह्मज्ञ एवनिश्चेतुं शक्नोति ।।श्रीः।।

इत्थं शिष्यप्रतिवचनं निशम्य तं निर्गलिताभिमानं विभाव्य तेनैव प्रतिपादितां ब्रह्मणोऽनिर्वनीयतां समर्थयमानः सद्गुरूः प्रसन्नः प्राह -

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ।।३।।**

यस्य अमतम् तस्य मतम्, यस्य मतम् सः न वेद, विजानताम् अविज्ञातम् अविजानताम् विज्ञातम्, इत्यन्वयः ।

अत्र मन्त्रे चतुर्षु षष्ठ्यन्तप्रयोगेषु **कर्तुकर्मणोः कृति** पा.अ.२-३-६५ इति सूत्रविहिता तृतीयार्थे बोध्या कर्त्तरि षष्ठी । अत्र सद्गुरूः शिष्यं प्रीणयन् तस्य ब्रह्मज्ञानविषये निर्गलिताभिमानतामेव मण्डयति । वत्स ! साधूत्तरितम् यस्य अमतम्, येन कर्त्रा ब्रह्म मननविषयीकृतमित्यभिमानो न धारितः, तस्यैव तेन कर्त्रैव मतं ब्रह्मणः मननं कृतं ब्रह्म ज्ञातं वा । यस्य अमतम्, येन कतृभूतसाधकेन ब्रह्म मननविषयतामापादितम् इत्थमभिमतं सः अहं ब्रह्मज्ञातवानिति कृताभिमानः न वेद, ब्रह्म न जानाति । यतो हि कर्तृत्वाभिमानशून्य एव तज्ज्ञो भवति तस्मिन् हि सेव्यता समवधारिते स्वीकृते च सेव्यसेवकभावसम्बन्धे सम्बन्धनिबन्धने चैकत्वे द्रढीकृते ज्ञेयज्ञातृभावो हि नितरां विस्मर्यते, आञ्जस्येन तत्र संसारसम्बन्धभिमानतिरोभावात् । ब्रह्मणो बोधात् प्राक्संसारसम्बन्धकल्पना तस्मिन् बुद्धे स्वरूपतः संसारो नैव तिरोधातुं शक्यः, न वा तस्य प्रत्यक्षतो मिथ्यात्त्वं लपितुं शक्यम् । तस्य हि भगवद्रूपताया ऋषिभिर्बहुत्र कण्ठरवेण प्रतिपादितत्वात् **जगत्सर्वं शरीरं ते** इति वाल्मीकीयरामायणे ब्रह्मणो भगवन्तं रामं प्रतिकथनम्—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**खं वायुमग्निं सलिलं महीं च ज्योतींषि सत्वानि दिशो द्रुमादीन् ।**
**सरित्समुद्रांश्च हरेः शरीरं यत्किञ्च भूतं प्रणमेदनन्यः ।।**

(श्रीमद्भागवत, ११/२/४१)

इति श्रीभागवते कवेरूक्तिर्निमिं प्रति एवमादीनि आर्षवचनानि प्रमाणानि । न च संसारस्य भगवद्रूपतायां वेदाप्रामाण्यमिति वाच्यं, पुराणानां वेदमूलकत्वात् । वेदमन्त्रा अपि बहुत्र प्रामाण्यं प्रस्तुवन्ति । विस्तरभिया इहैक एव मन्त्रः प्रामाण्यमीमांसायामुपन्यस्यते । तथा हि वाजसनेय माध्यान्दिनीशाखाध्यायिनो मनन्ति **नाभ्या आसीदन्तरिक्षँ शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात्तथा लोकाँऽऽन् अकल्पयन् ।** इत्थं श्रुतिस्मृतिनिर्णीतं जगतो ब्रह्मरूपत्वं श्रीमानसकृदपि समचिख्यपत्—

**सो अनन्य जाके असि, मति न टरइ हनुमन्त ।**
**मैं सेवक सचराचर, रूप स्वामि भगवन्त ।।**

(मानस ४-३)

अत्रेदमवधेयम्—यत् संसारस्य भगवद्रूपत्वेऽपि निर्णीते जीवो भगवद्दास एव अतो जगद् रूपं भगवतः । किन्तु मनुष्यो निवासः तथा चाह श्रीमच्छुकाचार्यः **मनुर्मनीषामनुजो निवासः** एवं विधधारणायां सम्बन्धाद्वैतं प्रतिपन्नस्य कर्तृत्वाभिमानः सुतरां समाप्त इति विरम्यते व्याख्यानात् । विजानतां ब्रह्मविज्ञानाभिमानवताम् अविज्ञातम्, नैव विशिष्टज्ञानविषयीभूतं, समासेऽपि नञार्थश्रौतत्वात् क्रियायामेवान्वेति । अविजानताम्, न विशेषण जानन्तीत्यविजानन्तः तथाभूतानामब्रह्मज्ञं मन्यमानमनसामितिभावः । विज्ञातम्, विज्ञानविषयीभूतं, यद्वा पूवार्धे यत् शब्दः भावनिष्ठान्ततया मान्यता परकः, तस्मिन् पक्षे च व्याख्यानमित्थं यत्—यस्य साधकस्य मतं ब्रह्मविषये काचित् सुनिश्चितमान्यता तेन न ज्ञातं ब्रह्म, यस्य अमतं दैन्यपूर्णचेतस्त्वात् नैव कश्चनाग्रहः तस्यैव मतमु-उत्तरार्धं पूर्ववत् ।।श्रीः।।

एवं ब्रह्मज्ञाने ज्ञातृत्वाभिमानं निरस्य तत्र सद्गुरूपदेशद्वारं शास्त्रमेव तज्ज्ञानमाध्यमिति द्रढयन् प्राहाचार्यः—

**प्रतिबोधविदितं मतममृत्तत्वं हि विन्दते ।**
**आत्मना विन्दते वीर्यं विघया विन्दतेऽमृतम् ।।४।।**

प्रतिबोधविदितम् मतम् (अनुतिष्ठन्) अमृतत्वम् विन्दते, हि आत्माना वीर्यम् विन्दिते विद्यया अमृतम् विन्दते, इत्यन्वयः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इदानीमाचार्यः ब्रह्मज्ञानमहिमवर्णनच्छलेन तत्र शिष्यप्रवृत्यर्थं ब्रह्मज्ञानफलं विधत्ते प्रतिबोधेत्यादिना–प्रतीतो बोधः प्रतिबोधः गुरूपदेश इति भावः, तेन विदितं ज्ञानविषयीकृतं, मतम्, ब्रह्मसिद्धान्तमनुतिष्ठन् अमृतत्वम्, मृताः मरणधर्माणो मनुष्याः बद्धप्राणिन इति यावत् तेषां मृतानां भावः गुणकर्म वा इति मृतत्वं तद्भिन्नत्वम् अमृतत्वत् संसाराभावरूपं भवबन्धनमोचनमिति यावत्, विन्दते लभते सद्गुरूपदेशेन स्वाचार्यसाधनपरम्परया ब्रह्मज्ञानमतमनुष्ठाय मानवो भवबन्धनात् विमुच्यते इतिः व्याख्यार्थ। यद्वा प्रतिष्ठितः बोधः यस्मिन् स प्रतिबोधः वेदस्योपनिषदो भागः तेन विदितं ज्ञातं पुनः मतं मननविषयीकृतं तादृशममृतत्वं, भवबन्धमोकं, विन्दते प्राप्नोति हि निश्चयेन, श्रुतीनां हि स्वतःप्रामाणस्य सकलवेदान्तवित् सम्मतत्वात् । यद्वा प्रतीक्षितो बोधः प्रतिबोध तेन विदितं तादृशं मननमुपागतम मृतत्वपर्यायं ब्रह्मैव विन्दते, शिष्यो हि चिरकालनिश्छलसेवया स्वाचार्यं समाराध्य सोत्कण्ठचातक इव स्वगुरुस्वातिजलधरसूपदेशस्वातिजलधारां प्रतीक्षते, एवं सुचिरप्रतीक्षाप्राप्तः श्रवणमुपागतः ब्रह्मबोधः नातिचिरेण ब्रह्म वेदयतीति तात्पर्यम् । तथैव जगौ गीतायां श्रीकृष्णः श्लोकद्वयेन—

**तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।**
**उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्वदर्शिनः ।।**
**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्षस्यात्मन्यथो मयि ।।**

(गीता ४/३४,३५)

यद्वा प्रतिश्रुतो बोधः प्रतिबोधः, तेन विदितम् । अतोऽग्रे पूर्ववत् शिष्याय प्रतिश्रुत्य, हि समुपदिशन्नाचार्यः ब्रह्म वेदयितुं प्रभवति । यद्वा प्रतिज्ञातो बोधः प्रतिबोधः स्वानुभूतश्रुतिसिद्धान्तः, तथा हि बोधः स्वसाधनाजन्यानुभवः तमेव प्रतिगतः प्रतिबोधः तेन विदितं, शेषं प्रथमव्याख्यानवत् । श्रुतिसिद्धान्तो हि स्वानुभूतिमन्तरेण निगदनेन शब्दतो नैवाज्ञानावरणं भिनत्ति । यत्तु बोधं बोधं प्रति प्रतिबोधमिति वीप्सया व्याचक्षते तदनुचितं, ब्रह्मबोधस्याखण्डत्वात् वीप्सायास्तत्रानवकाशात् । न च ज्ञानस्य क्षणिकत्वपक्षस्वीकार इति वाच्यम्, सौगतानां युष्माकमाकाशपुष्प इव मते साराभावान्मत, तन्निराकृतमेव । तस्मात् प्राक्तना एव व्याख्यानप्रकाराः ज्यायांसः । एवं स्वानुभूतश्रुतिसिद्धान्तविदितं ब्रह्म समाम्नाय नचिरादमरपदं प्राप्नोति साधकः । ननु कथं भो ! स्वसिद्धान्तविरुद्धं व्याचष्टे भवान् भवतो नये मोक्षस्यानादृतत्वात् सगुणोपासनायां दास्यभंगभिया तदनुपयोगाच्च जन्मैव कथं न चायते । नेत्थं वाच्यं, नाहं सिद्धान्तं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विरूणद्मि तत्रामरपदं श्रीमच्चित्रकूटविहारिमैथिलीहृदयललाम श्रीरामपदकमलं तत्प्राप्तिस्तूभयविधवेदान्ति सम्मतैव । अथ तस्मिन् परमात्मनि प्राप्ते किं स्यात्, किं तंल्लब्ध्वा साधकः साधनात् विरमति, उताहो तत्रैव रमते, आहेस्वित् ततोऽप्याधिकमभीप्सुः प्रयतते ? इत्यन्तरप्रश्नं समाधित्सुराह—ब्रह्मणि प्राप्तेऽपि साधको भजनं न जहाति । अपि तु सः परमात्मा स्वभक्तभजने सहयोगं ददाति । तथाहि आत्मना, परमात्मना भजनक्रियासिद्धौ प्रकृष्टोपकारकेण करणकारकीभूतेन कौशल्यासूनुनेति भावः । वीर्यम् भजनपराक्रमं विन्दते लभते, भगत्कृपया हि साधकः तादृशं स्वात्मबलं प्राप्नोति येन स्वत एव भजनबाधकान् विघ्नान् विहन्तुं क्षमते । अत्र व्याख्याने प्रहलादविभीषणद्रौपदीमीरातुलसीदासचरित्राण्यनुसंधेयानि । यद्वा विन्दतेऽवीर्यमित्यत्राकार प्रश्लेषः, तथाहि विन्दते अवीर्यमितिः विग्रहः **अकारो वासुदेवः अक्षराणामकारोऽस्मि** इत्यनुशासनात् । एवमस्य सर्वव्यापकस्य विभूम्नः प्रापकं वीर्यं प्रेमतत्वरूपमित्यवीर्यं तच्च आत्मपर्यायवाचिना परमेश्वरेणैव विन्दते लभते । स आत्मा कथं प्राप्येत ? अत आह विद्यया, विङ्क्ते विचारयति ब्रह्मतत्वं यस्यां सा विद्या वेदान्तापरनामधेया ब्रह्मविद्या तया करणभूतया अमृतं मर्त्यभिन्नं अजरममरमविनाशिनमशोकममोहं सच्चिदानन्दसन्दोहं परब्रह्माभिधानं श्रीरामं विन्दते लाभविषयं करोति अपूर्वतया प्राप्नोतीति भावः । विद्लृ लाभे इत्यस्माद्धातोः **कर्तरि कर्मव्यतिहारे** इति सूत्रेण क्रियाविनिमये द्योत्ये ह्यात्मनेपदं क्रियाविनिमयश्चात्र सततमात्मकामे भगवति नित्यप्राप्तिरूपधर्मस्य परमेश्वरकृपया जीवे विद्यमानतारूपः । निष्कर्षश्चात्र—श्रुतिसम्मतोपदेशेन परिज्ञातं समाम्नातं ब्रह्म जीवः प्राप्नोति । केवलं ब्रह्मज्ञानेन न सन्तोष्टव्यं तत् प्राप्तयेऽपि प्रयासः करणीयः इति ध्वन्यते । स कथं प्राप्तुं शक्यः परमेश्वरः, यश्च कोटिवर्षपूगपर्यन्तं तप्यमानैरपि मुनिभिर्दुष्प्रापः ? इति शङ्का समाधातुमात्मनेत्युत्तरार्धः, यदा परमात्मा सद्गुरोःश्रुतोपदेशेन ज्ञायते समाम्नायते च तदा स एव स्वप्राप्तिक्रियायां प्रकृष्टोपकारको भूत्वा जीवाय निजवशीकरणमहौषधं प्रेम प्रापयति स्वयं च वेदान्तविद्यया विद्यते । ननु वेदान्तेन ब्रह्म ज्ञेयं भवति **वेदान्तवेद्यं विभुम्** इति मानसानुशासनात्, अत्र हि वेदान्तलभ्यमिति नोक्तं, सत्यं कर्मभजनप्रतिबन्धकमलनाशे उपासनाभगवद्ध्यानविक्षेपनिरसने ज्ञानं चावरणभङ्गे पर्युपयुक्तं नैव तत् भगवत् प्राप्तौ, अतो विद्यया एतस्य भगवत्प्रेमरूपभक्तिविद्यया इत्येव व्याख्या करुणीया, तथैव जीवः भगवन्तं स्व हृदयललितललामतया लभते ।।श्रीः।।

एवं चतुर्भिर्मन्त्रैर्ब्रह्मज्ञानस्य दुष्प्राप्यतां ब्रह्मणोऽनिर्वचनीयतां च विनिर्णीय सम्प्रति जीवस्य कृते तत्प्राप्तिं विधेयतया निर्दिशति, तदभावे च मानवजीवनवैयर्थ्यवर्णनच्छलेन साधकं विगर्हते इहचेदित्यादिना -

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इह चेदवेदीदथ सत्यमस्ति न चेदिहादेवीन्महती विनष्टिः ।**
**भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ।।५।।**

चेत् इह अवेदीत् अथ सत्यम् अस्ति चेत् इह न अवेदीत् महति विनष्टिः, धीराः भूतेषु भूतेषु विचित्य अस्मात् लोकात् प्रेत्य अमृताः भवन्ति, इत्यन्वयः ।

मानवजीवनमिदं ब्रह्मप्राप्तौ तद्बोधे च महदुपकारकम् अतस्तत्, प्रशंसन्ती श्रुतिः साधकमवधापयति । चेत् , यदि पूर्वोक्तभगवत्कृपाप्राप्तप्रेमवशीकरणेन इह, अस्मिन् मानवजीवन एव अवेदीत्, परमात्मानमज्ञासीत् । ननु इतः पूर्वस्मिन् मन्त्रे परमात्मलाभः चर्चितः अतः कथं पुनस्तं विहाय परमात्मवेदनं विविच्यते ? इति चच्छृणु—धातूनामनेकार्थत्वात् विदिरपि विद् ऌ बोधपरः, यद्वा व्यत्ययो बहुलंमित्यनेन विद ऌ धातावेवदादिगणकार्यम् । गणकार्यमनित्यमितिज्ञापकमप्यत्रमानम्। अस्मात् अवेदीत् इत्यस्य अलब्ध इति विवर्णनम् । अथ अनन्तरं सति ब्रह्मणि प्राप्ते सति, मानवजीवनस्य गतार्थता । यद्वा मनुष्यलोके यदि परमात्मानं प्राप्तवान् जीवः तदैव सत्यम्, सते अविनाशिने आत्मने हितम् अस्ति भवति, चेत्, यदि कदाचित् निजप्रमादात् प्रारब्धभजनप्रतिबन्धकप्रत्यूहात् इह, अस्मिन् मानवजीवने न अवेदीत्, न ज्ञातवान् परब्रह्म न लब्धवान् वा तदा महति, महीयसी विनष्टिः, विनाशस्थितिः । एवं धीराः, सुखदुःखसमबुद्धयः साधकाः भूतेषु भेतेषु, नित्यं वर्तमानेषु प्राणिषु प्राणिषु भवन्तीति भूतानि तथा भूतेषु अत्र नित्यत्वद्योतनाय द्विर्वचनम् **नित्यो नित्यानाम्** इतिः जीवनित्यतायां प्रमाणं सप्तमी च औपश्लेषिकी । उपश्लेषश्च द्विधा संयोगात्मकः सामीप्यात्मकश्च परमात्मा हि द्वाभ्यामपि प्रकाराभ्यमनित्यूतान्युपश्लिष्टः तमेव नित्यभावसम्पन्नं समस्तभूतानि संयोगसामप्याभ्यामुपश्लिष्यवर्तमानं विचित्य समन्विष्य अन्तर्यामितया प्रतिप्राणिहृदयनभसि समुदितं नवेन्दुमिव कोशलेन्दुं समवधार्य, अस्मात् दृश्यमानात् लोकात् मर्त्यलोकात् प्रेत्य प्रकर्षेण इत्वा सम्मानपूर्वकं भगवत्प्रेषितविमानेन स्वसुखं प्रारब्धपतितकलेवरपरिहारपूर्वकं साकेतं गत्वेति भावः । अमृताः, प्राकृतजननमरणरहिताः भगवन्नित्यपरिकराः इति भावः भवन्ति, समधिकृतभगवद्कैङ्कर्यसत्तया संयुक्ता सम्पद्यन्ते ।।श्रीः।।

**।। इति द्वितीयखण्डः ।।**

**।। श्री राघवःशन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। तृतीयो खण्डः ।।

इत्थं खण्डद्वयेन ब्रह्मणोऽनिर्वचनीयता अवाङ्मनसगोचरता चोक्ता, द्वितीये खण्डे च चतुर्भिर्मन्त्रैस्तस्य दुर्ज्ञेयता च प्रतिपादिता । तत्रेत्थं सन्देहः समुत्तिष्ठति—किमिदं विजानतामविज्ञातम् अविजानतां विज्ञातम् एतद् वाग्विलासमात्रम् आहोस्वित् केनाप्यनुभूतचरं, चेदनुभूतचरं तर्हि किं निरवयवं सावयवं वा ? यदि चेत् सावयवं, तर्हि तत्रानित्यतापत्तिः ? यदि चेत् निरवयवं तर्हि सौगतानामिव शून्यं तत्, एवं **सत्यकामः सत्यसङ्कल्पः सर्वरसः सर्वगन्धः** इत्यादि श्रुतयस्तत्र नोपपद्येरन् । नहि अवयविनमन्तरेण सत्यसङ्कल्पत्वादयः गुणाः समुपस्थातुं शक्याः ? इमान् सर्वान् शिष्यप्रश्नप्रतिप्रश्नान् मनसि कृत्वा तार्तीयके समारभते सद्गुरूराख्यायिकां देवगर्वभङ्गनिमित्तां, यत्रावाङ्मनसगोचरत्वेऽपि भक्तप्रेमवशंवदतया भगवतः प्राकट्यम् । निरववत्वेऽपि सावयवत्वम्, अपरोक्षानुभूतिविषयत्वेऽपि दिव्यविग्रहेण सकलक्रियाकलापसंचालकत्वं । ननु एकस्मिन्नेव धर्मिणि कर्थ विरुद्धद्वयाश्रयता ? यदिं निराकारं तर्हि न साकारं यदि चेत् साकारं तर्हि न निराकारम् । मैवं वादीः, भगवतः स्वाभाविकीयं सकलविरुद्धयर्माश्रयता बहुशो मयोक्ता कथं नावधारिता त्वया । भगवान् खल्वतर्कशक्तित्वात् समकालमेव निराकारोऽपि साकारः निरवयवोऽपि सावयवः निर्गुणोऽपि सगुणः निष्प्रकारोऽपि सप्रकारः । अथ तर्हि यद्यद् सावयवं तत्तदनित्यं विनाशशीलत्वाद् घटवत्, इत्यनुमानेन ब्रह्मणः सावयवत्वे तदनित्यता दुर्वारैवेति चेन्न, ईश्वरे एतदनुमानस्य प्रसरासम्भवात् **द्यावा भूमी जनयन्देव एकः** इत्यादि श्रुत्यनुरोधेन, तत्र सावयवत्वेऽपि नानित्यता । ननु मया दत्तमनुमानमपि कथं त्वयानलप्यते ? श्रुत्यनुरोधेन, यतो हि शब्दप्रमाणकाः वयं श्रुतीनां स्वतः प्रमाण्यं सर्वतन्त्रसिद्धं तद्व्याहन्तुं परमेष्वरोऽपि न प्रभवति किं त्वादृशाः । अथ परमात्मनः शरीरत्वे सुस्पष्टं प्रमाणं देहीति चेत् कृपया तैत्तरीये **आकाशशरीरं ब्रह्म** इति सुस्पष्टं प्रमाणं स्वीकुरु । अतो हेतोः तावकीनमनुमानं श्रुतीर्विरूणद्धीति नादरतव्यं तत् । नहि संसारिणामुपमया परमात्मोपमातव्यः । ननु तत्र आकाशशरीरं ब्रह्म इति श्रुतौ आकाशं शरीरं यस्य तथाभूतमिति बहुब्रीहिसमासेन निरवयवत्वादाकाशस्य ब्रह्मणोऽपि निखयवत्वे, कथं तत् सावयवतायां भवतामाग्रहः । श्रुत्या ब्रह्मणः शरीरे प्रमाणिते तत्र त्वादृगेव कश्चन मन्दबुद्धिः कल्पयिष्यति निरवयवताम् । नहि कदापि शरीरं निरङ्गं भवति । अवयवानां समुदाय एव हि शरीरव्यवहारभाक् । तस्माद् **आकाश शरीरं ब्रह्म** इति श्रुतौ उपमामूलकबहुब्रीहिसमासविग्रहो विधातव्यः एवं हि आकाशमिव शरीरं यस्य तथाभूतं ब्रह्म इति विग्रहः । अथ भवता संस्थापिते आकाशशरीरयोरुपमानोपमेयभावे कथन्नाकाशगतो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निरवयत्वरूपधर्मः शरीर आरोप्येत् । श्रुति विरुद्धत्वात् उपमेयप्रतिकूलत्वाच्च । अथ ब्रह्मशरीरे नभसो निरवयवत्वारोपे को विरोधः श्रुतेरितिचेच्छ्रूयताम्–श्रुतौ हि सुस्पष्टं परमेश्वराङ्गानां वर्णनं तद्यथा—**विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतोबाहुरुत विश्वतष्पात्** एवमेव प्रतिकूलतोपमेयस्यापि यथा चन्द्र इव मुखमित्यत्र मुखे चन्द्रस्याह्लादकत्वं समारोपयन्नपि कोऽपि सुधीस्तद्गत धवलिमानं नारोपयत्यानने, तद्विरुद्धत्वात् चन्द्र इव श्वेतमाननन्तु कुष्ठिनां प्रसिद्धं न तु कस्याश्चित् सौन्दर्यशीलसीमन्तिन्याः । एवमत्रापि न गगवन्निरवयवत्वं शरीरे नारोयपयितुं शक्यं तद्विरुद्धत्वात् । विरोधश्चोपमेयासम्भवरूपः । भवतु नाम ब्रह्मशरीरे व्योम्नो नीलिमत्वव्यापकत्वसर्वावकाशत्वनिर्लोपत्वसलिलवर्षकत्वादि भूयो धर्मारोपः । एवं निरवयवोऽपि स्वलीलया दिव्यान्यङ्गानि प्रकटीकृत्य जनानामनुजिघृक्षया स्वभक्तमनोरथान् पूरयति । इदं परमेश्वरस्य लीलाविर्भावचरित्रं तन्मिषेण ब्रह्मविद्या महत्वं च वर्णयन् प्रारभत आख्यायिकामिमाम् -

**ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति।।१।।**

ब्रह्म देवेभ्यः विजिग्ये, ह तस्य ब्रह्मणः विजये देवाः अहमीयन्त, ह ते ऐक्षन्त अयम् अस्माकम् एव विजयः अयम् अस्माकम् एव महिमा इति, इत्यन्वयः ।

ब्रह्म, अतिशयेन वर्धनशीलं बृहत्तमं वा, देवेभ्यः दैवीसम्पदमाश्रयतां सुराणां हिताय अत्र तादर्थ्ये चतुर्थिः । विजिग्ये, दानवान् निहत्य व्यजयत, परोक्षलिट्-प्रयोगेण घटनाया अति प्राचीनकालिकत्वं सूचितम् । ह, प्रसिद्धमेतत् तस्य ब्रह्मणः, संगुणसाकाररूपस्य पराक्रमशालिनः परमेश्वरस्य दानवपरिभवमूलके देवाः इन्द्रादयः अमहीयन्त महिम्ना समयोज्यन्त, ह, इति प्रसिद्धौ, ते देवाः भगवल्लब्धबलतेजःपराक्रमाः ऐक्षन्त इत्थं मिथ्या निश्चितवन्तः यत् अयम्, दानवेषु अस्माकम् एव, अग्निपुरोगमानां सुराणामेव नान्येषां विजयः, जयः अयम्, एषः संग्रामेऽसुरकदनरूपः अस्माकमेव, रणश्श्लाघिदैवतानामेव महिमा, महत्ता इति, शब्दोऽयमभिमानप्रकारसूचकः ।।श्रीः।।

इत्थं धनैश्वर्यमदमत्ताः भगवतैव दत्तशक्तिका अप्यात्मानं जैत्रं मन्यमानाः सुमनसः सदर्पाःजाताः येनैषां दैवीसम्पद्विनाशसंकट आगतः । दर्पाभिमानौ हि आसुरीसम्पदो लक्षणे तथा हि गीतायाम्—

**दम्भो दर्पोऽभिमानश्च क्रोधः पारूष्यमेव च ।**
**अज्ञानं चाभिजातस्य पार्थ सम्पदमासुरीम् ।।**

(गीता १६-४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आभ्यामेषां दैवीसम्पदि नष्टायामासुरभावमागते भवबन्धनसम्भावना समभवत् । निबन्धायासुरीमता इति तन्निराचिकीर्षया भगवता प्रादुर्भाव लीलाप्रकट्यते तदित्यादिना–

**तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानत किमिदं यक्षमिति ।। २ ।।**

ह तत् एषाम् (तत्) विजज्ञौ, तेभ्यः प्रादुर्बभूव ह इदम् यक्षम् किम् इति तत् ते न व्यजानत, इत्यन्वयः ।

इ इत्थं प्रसिद्धं वर्तते यत् तत् तनोमीति तथाभूतम् एषाम्, ईश्वरं मन्यमानानां पावकादीनां तत्, अभिमानदूषितहृदयं विजज्ञौ, सर्वज्ञतया विदांचकार । तेभ्यः तेषामभिमनशमनेन कल्याणचिकीर्षया प्रादुर्बभूव अशेषगुणगणनिलयं प्रकटित सगुणसाकाररूपमाविर्बभूव । ह प्रसिद्धौ, इदम् देवनयनगोचरं यक्षं, ईज्यते पूज्यते तथाभूतं यज् धातोः **उणादयो बहुलम्** इत्यनेन स प्रत्यये जकारस्यकुत्वे षत्वे यक्षमितिसिद्धम् । ब्रह्म हि सर्वत्र पूज्यमानं, यद्वा ईज्यते सद्भिः संगम्यते इति यक्षम्, सन्तस्तेनैव ब्रह्मणा संगच्छन्ते । यद्वा यजते भक्तेभ्यः ईप्सितार्थं ददाति इति यक्षम् अत्र कर्तरि स प्रत्ययः शेषं पूर्ववत् । ननु एतत् व्युत्पत्तित्रये किम्मानम् ? यज् धातोः पाणिनेरनुशासनमेव तद्यथा– **यज् देवपूजा संगतिकरणदानेषु** । यद्वा ईः भगवती सीता अक्षि नेत्रमिवप्रिया यस्य तद् यक्षम् श्रीसीताभिरामं श्रीरामाभिधं ब्रह्म । यद्वा अकारो वासुदेवः तस्यापत्यं पुमान् इति इः अत्र भत्वादकारलोपे समवशिष्टः सानुबन्ध इ प्रत्ययः यः शिष्यते स लुप्यमानार्थाभिधायी इति पातञ्जलवचनेन लुप्ताकाररूपप्रकृत्यर्थमभिधत्ते । एवं इः वासुदेवात्मजः कामः अभिभूतः अक्ष्णा नेत्रेण यस्य तत् यक्षं, किम्, किं प्रकारकं वस्तु इति, इत्थं यक्ष परिचयं ते, सुराः न व्यजानत, नैव विविच्य ज्ञातवन्तः । एवं तथाभूतमनिर्वचनीयं सर्वाश्चर्यमयं यक्षं दृष्ट्वा देवाः प्रथमग्निं प्रेषयितुमुपक्रमते–

**तेऽग्निमब्रुवञ्जातवेद एतद्विजानीहि किमिदं यक्षमिति तथेति ।। ३ ।।**

ते देवाः अग्रे नियत इत्यग्निः, पृषोदरादित्वात् अग्र घटकरकारलोपःणि धातोरिकारलोपः इच् प्रत्ययश्च । स एव वैदिकप्रथमदेवता तथा च समस्तवेदराशेः प्रथममन्त्रे **अग्नमीले पुरोहितम्** इति समकीर्तयत् श्रुतिः । तादृशं स्वकीयमग्रनेतारमग्निम् अब्रुवन्, अकथयन्–जातवेद ! जातं, समुत्पन्नं सर्वप्राथम्येनोद्भूतमिति भावः वेदः ब्रह्मज्ञान मित्यर्थः । एतत् इदं दृश्यमानं यक्षं यजनशीलं महद्भूतं विजानीहि विशेषेणावगच्छ किम्, किं प्रकारकम् इति, एवं प्रकारेण देवा अग्निं विज्ञापयामासुः । तथेति, तथा इति अग्निः प्रार्थनां स्वीचक्रे ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दवेप्रार्थनानन्तरं संघटितघटनां सूचयति—

**तदभ्यद्रवत् तमभ्यवदत् कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ।।४।।**

अत्र अनुपपत्या अभ्यद्रवदित्यस्य अग्निराख्यातः समाक्षिप्यते । तथा च अग्निः देवविज्ञापनानुसारं तत् सुराणां बुद्धिपारोक्ष्ये विराजमानं यक्षम् अभ्यद्रवत्, द्रुतमभ्यगच्छत् । तत् यक्षं स्वाभिमुखमागतं तम् , अग्निम् अभ्यवदत् , अभिनन्द्यापृच्छत् अग्निस्तु द्रुतमभिगंत्य तत् प्रभया घर्षितः तूष्णीमतिष्ठत् । यक्षमेव तदभिमानविनाशयिषया तं पर्यपृच्छदिति तात्पर्यम् । कः प्रश्नाकारः इत्यत आह–भो, त्वं कः असि किमभिधानोऽसि किं प्रयोजनो द्रवन्नागतोऽसि ।।श्रीः।।

इति, इत्थं कृतप्रश्नम् अग्निरूदतीतरत् द्वाभ्यां प्रसिद्धनामभ्याम् अहं तव पार्श्वे समागतः अग्निः, एतन्नामकः वा, सर्वप्रसिद्धः अस्मि, भवामि । इत्थं परिचयदत्तेपि यक्षमकृतप्रतिक्रियं विभाव्य भूयः प्राह साक्षेपमग्निः–अहम्, तव पुरोवर्तमानः वा, सर्वप्रसिद्धः तथापि न तव कर्णगोचरः जातवेदाः, सर्वज्ञः अस्मि भवामि इति, अनेनकाकुना अब्रवीत्, अवदत् इति, इत्युक्त्वा विरराम ।

इत्थं वैशिष्टयद्वयेन दत्तपरिचयं सावलेपं जातवेदसं यक्षरूपः परमात्मा पृच्छति,

**तस्मि ँ्स्त्वयि किं वीर्यमिति । अपीद ँ् सर्वं दहेयम्, यदिदं पृथिव्यामिति ।।५।।**

**व्याख्या**— यक्षमपि सावक्षेपमप्राक्षीत् यत् हंहो तस्मिन् निजोक्तविशेषणद्वयविशिष्टे त्वयि, मत्पुरोवर्तमाने भवति अग्नौ जातवेदसि किं वीर्यम् ? किं प्रकारकं सामर्थ्यं तद्व, इति एवं पृष्टवति यक्षे अग्नि इति सगर्वो व्याहरत्–पृथिव्याम्, उपलक्षणमेतत् पृथिवीसहिते निखिलब्रह्माण्डे यत् इदम्, यत्किमपि इदं प्राणेन्द्रियगोचरं स्थावरजङ्गमं वर्तते इदं सर्वम्, दृश्यमानमेतत् सकलं प्रपञ्चं दहेयम्, दग्धुं शक्नोमि । अत्र **शक्तिलिङ्ग** इत्येनन शक्यार्थे लिङ्लकारः, अपि निश्चयेन इति एतन्निगद्य व्यरमत् ।।श्रीः।।

इति परमकारुणिकः श्रीहरिः अग्निदर्पं जिघांसुः लीलाशक्त्या तृणमेकमाविष्कृत्य तद्दाहाय जातवेदसं नियुञ्जानः प्राह -

**तस्मै तृणं निदधावेतद्दहेति । तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ।।६।।**

तस्मै अग्नये अत्र हितयोगे चतुर्थी, यक्षनामा परमेश्वरः तृणम्, स्वलीलानिर्मितं सन्निहितसकलसामर्थ्यं लंघितुं गुल्मविशेषं निदधौ, निराधारेऽप्याकाशे संस्थापयामासेति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भावः । तमवदच्च–हे चराचरदहनसामर्थ्यशालिन् अग्ने ! एतत्, मन्निहित् तृणं दह, भस्मसात् कुरु, तत् यक्षनिर्देशानन्तरं पावकः तत् तृणं दग्धुं, सर्वजवेन सर्वश्चासौ जवः सर्वजवः तेन सम्पूर्णवेगेनेति भावः उपप्रेयाय प्रकर्षेणोपागच्छत् । इत्थं यक्ष निर्दिष्टोऽपि सम्पूर्णवेगं प्रयुञ्जानस्तत् भगवदीयतृणं दग्धुं भस्मकर्त्तुं न शशाक, नैव सेहे । स, एवं भग्नसंङ्कल्पः तत एव, तस्मात् यक्षसमीपस्थानादेव निववृते, प्रतिनिवृत्तो बभूव, अवोचच्च देवान्–यत्, प्रकारकम् एतत्, इदं यक्षम्, सर्वसङ्गतं परब्रह्म इति, इत्थं रूपेण विज्ञातुम्, वेदितुम् अहम्, जातवेदाः अग्निः न अशकम् नैव सोढवान् एतत्, इदं कार्यं सम्पादयितुम् ।।श्रीः।।

अथाग्नितो निराशाः देवाः वायुं प्रेषयितुमुपक्रमन्ते—

**"अथ वायुमब्रुवन् वायवेतद् विजानीहि किमेतद् यक्षतमिति तथेति ।।७।।**

अथ, अग्न्युत्तरान्तरं देवाः वायुम्, वातीति सर्वत्र गच्छति गन्धं वहति वा यः स वायुः तम्, यद्वा गन्धनमिह सूचनं तथाहि वाति सूचयति तथाभूतम् अब्रुवन् , अवदन्—वायो, हे सर्वगन्धसूचक ! त्वमेव एतद्, अस्मज्जिज्ञासितं, विजानीहि विशेषेणावेहि यत् किं गुणकमस्मन्निकटवर्ति यक्षम् , अस्मद् वृत्या संगच्छमानम् इति, इत्थं निर्दिश्य देवा विरता इति भावः । तथा इति, देवनिर्देशम् तथैव करिष्यामीति स्वीचकार वायुः ।।श्री।।

अथ वायुः किमकरोत् इत्यत आह—

**तदभ्यद्रवत् तमभ्यवदत् कोऽसीति ।**
**वायुर्वा अहमस्मीत्यब्रवीन् मातरिश्वा वा अहमस्मीति ।।८।।**

वायुः तत् यक्षम् अभ्यद्रवत् द्रुततरं समीपमगमत् । यक्षं तम् स्वसमीपस्थं वायुम् अभ्यवद्त् , अभिनन्दद्यापृच्छत्–भोः कः असि, किन्नामधेयोऽसि ? वायुः अब्रवीत्, प्रत्युत्तरयामास–अहं, त्वत् समीपमागतः वा, सर्वप्रसिद्धः वायुः सर्वगः सर्वसूचकश्च अस्मि, भवामि तस्मिन्नोत्तरयति भूयः प्राह—वा, सुख्यातः मातरिश्वा, मिमीते शब्दं करोति इति माता आकाशं तस्मिन् स्वयति गच्छतीति मातरिश्वा अस्मि, भवामि इति, इत्थमुत्तरयति स्म ।।श्रीः।।

एवं वायौ दत्तोत्तरे तस्य दर्पं हन्तुं श्रीहरिरपृच्छत्—

**तस्मिँस्त्वयि किं वीर्यमिति ? अपीदँ सर्वमाददीयम्, यदिदं पृथिव्यामिति ।।९।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मिन् त्वयि एवं भूते भवति, किं वीर्यमिति, किं बलम् इति यक्षे पृष्ठवति वायुः प्रत्यवोचत्–पृथिव्यां यदिदम् , ब्रह्माण्डेऽस्मिन् यच्चराचरम् इदं सर्वम् आदिदीयम्, इदं सकलं प्रपञ्चमुत्क्षेप्तुं शक्नोमि इति, इत्थमुत्तरायामास ।।श्रीः।।

अथ तद्दर्पनिराकरणाय श्रीहरिः निर्मितचरं तृणं प्रदर्शयन् प्राह,—

**तस्मै तृणं निदधावेतदादत्स्वेति । तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद् यक्षमिति ।।१०।।**

तस्मै, वायवे तृणं निदधौ, तदाकाशे गुल्मविशेषं निर्यात् निर्दिशच्च भगवान्– भो वायो ! एतद्, क्षोपिष्ठं तृणम् आदत्स्व, उत्थापय इति, एवं निर्दिष्टो वायुः सर्वजवेन , सर्वसामर्थ्येन तत् , तृणमादातुम् उपप्रेयाय, समीपमगमत् तत् , लघुतमं तृणाम् आदातुम् , गृहित्वोत्त्थापयितुं न शशाक, न सेहे । स, भग्नसङ्कल्पः वायुः तत एव निववृत्ते, तस्मात् स्थानात् परावृतो बभूव । उदतीतरच्च–एतद् वि विज्ञातुं, वेत्तुं न अशकं, न सफलोभवम् एतद यक्षं किमिति, पुरो वर्तमानं यक्षं किं भूतमिति ।।श्रीः।।

अथाग्निपवनयोः जिज्ञासाशान्तावसमर्थयोः सुराः बृहस्पतीशिष्यं पण्डितप्रकाण्डमिन्द्रं प्रेषयितुमीहन्ते–

**अथेन्द्रमब्रुवन् मघवन्नेतद् विजानीहि किमेतद् यक्षमिति । तथेति । तदभ्यद्रवत् । तस्मात् तिरोदधे ।।११।।**

अथ, अनन्तरम् इन्द्रम् अब्रुवन् , इदि ऐश्वर्ये इन्दति ऐश्वर्यवान् भवतीति तथाभूतमिन्द्रं देवाः न्यवेदयन्—मघवन् । एतद् विजानीहि, हे सकलैश्वर्यशालिन् ! एतद् विविच्य अवगच्छ किमेतद् यक्षमिति, इदं महद्भूतं किं वस्तु । तथा इति, इन्द्रः प्रार्थनां स्वीकृत्य तत् अभ्यद्रवत् , जिज्ञासुः सन् परमातुरो यक्षमुपगतः अधिकाभिमानिनं तं ज्ञात्वा तत् सगुणसाकारं परमपूज्यं सर्वज्ञङ्गलं सर्वकामदायकं ब्रह्म तस्मात् , अत्र ल्यब्लोपे पञ्चमी, तमवेक्ष्य यद्वा तस्मादिति स्थानविशेषणं यत्र यक्षं तिष्ठति स्म तस्मात् स्थानादिति भावः तिरोदधे, अन्तर्दधे तस्मै स्वरूपमपि नादर्शयत् संवादस्य का कथा ।।श्रीः।।

यद्यप्यग्निवायू यक्षेण सह वार्तां विधाय ततो भग्नसङ्कल्पौ निववृताते, इन्द्रस्तु साक्षात्कारावसरमपि न लेभे । परन्तु निराशो भूत्वा ततो न निवृत्तः तज्जिज्ञासया प्रयत्नमारब्धवान् । अतस्तत्फलमपि तेन प्राप्तमिति वर्णयति उमासाक्षात्कारव्याजेन ।

**स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमाना मुमाँ हैमवतीं ताँ होवाच किमेतद् यक्षमिति ।।१२।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सः, जिज्ञासुरिन्द्रः तस्मिन् एव आकाशे, यक्षाधिष्ठितचरे बहुशोभमानाम् , अनिन्द्यसौन्दर्यसम्पन्नां स्त्रियम् , स्त्रीशरीरधारणीं वात्सल्यमयीम् उमाम् , उः शम्भुः तस्य ओः शम्भोः मा शक्तिः तथा भूतां हैमवतीं, हिमवान् हिमाचलः तस्य गोत्रापत्यं स्त्री हैमवतीं तां हिमाचलपुत्रीमि इत्यनेनावतारवादोऽपि श्रुत्यैव सूचितः । या हिमाचलराजगृहे समवतेरे या च शिवेन परिणीता तामेव परमवात्सल्यमयीं सौभ्याग्यवतीं वधूचितभूषणभूषितां भगवतीमाजगाम, सद्गुरूं कृत्वा महता समादरेण समागच्छत् इति भावः **नास्ति मातृ समो गुरूः** इति स्मृतेः । ताम् , भगवतीं पार्वतीं प्रणम्य सम्पूज्य उवाच, जिज्ञासांचक्रे-किमेतद् यक्षमिति, एतद् यक्षं दृश्यमानं किमासीत्, इति शब्दः जिज्ञासा विरामसूचकः ।

**।। इति तृतीयः खण्डः ।।**

**।। श्री राघवः शन्तनोतु ।।**

## ।। अथ चतुर्थ खण्डः ।।

एवमग्निवातेन्द्रदर्पघ्नं निःशेषक्लेशशमनं भक्तानुग्रहकातरं सगुणसाकारविग्रहं परब्रह्म महता यत्नेनापि पुरन्दरो न विज्ञातुं प्राभवत् । तथाविधं जिज्ञासमानं तमवेक्ष्य स्वयं ब्रह्मविद्येव साक्षादुमा तत्कल्याणं चिकीर्षुः समुपदिदेश । ननु परमपुरुषार्थं ब्रह्म निगदितुं कथन्नागान्महालक्ष्मी कथं नागाद्वा वागधिष्ठात्री देवता सर्वविद्यामयी स्वयं सरस्वती ? साधु पृष्ठम् । सरस्वत्यास्तु वाङ्मयत्वाद्वाचश्च जडेन्द्रियतया विशुद्धचैतन्यघने ब्रह्मणे प्रसराभावात् तदधिष्ठातृदैवतगन्धोऽपि न शङ्कनीयः, महालक्ष्मीश्च सीताभिधा सा च रामाभिधानान्महाविष्णुतः सर्वथैवानन्या, यथा यक्षभूताय ब्रह्मणे इन्द्राभिमुखं स्वप्राकट्यं नारोचत् तथैव तस्या अपि । एकमेव ब्रह्म महाविष्णुमहालक्ष्मीरूपेण द्वन्द्वमिव विभाति **स वा कुमारः उत् वा कुमारीं** इति श्रुतेः । अथ कथमत्र भोः उपनिषद्यत्र यक्षशब्दः बहुशः क्लीबे पठितः पुलिङ्गे यक्षशब्दस्य कुबेरगणाभिधेये योनिविशेषे प्रसिद्धत्वात् ? ततो वैलक्षण्यं प्रतिपादयितुमिति ब्रूमहे यद्वा स्वतन्त्रा श्रुतिः तदभिप्रायोद्घाटने के वयं वराकाः ।

अथ यक्षदर्शनाय समागतस्य शक्रस्य पुरस्तिरोधानेन घनदर्पे पुरन्दरे लौल्यमूल्यकं वैक्लव्यं विलोक्य सगुणा भक्तिः साकारा भगवत्युमा वासववत्सला प्राह—

**सा ब्रह्मेति होवाच । ब्रह्मणो वा एतद्विजये महीयध्वमिति, ततो हैव विदाञ्चकार ब्रह्मेति ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सा, उमा यद्वा स्यति इन्द्रसंशयराशिं खण्डयति तथाभूता इन्द्रजिज्ञासा समाधात्रीति भावः। ह निश्चयेन उवाच इन्द्रं प्रत्युक्तवती, वचनप्रकारमाह—ब्रह्म इति यदग्निवायुदर्पघ्नं-यच्च त्वयापि दृष्टमात्रं किन्तु त्वयि महान्तमभिमानं विभाव्य नैव चर्चामचिकीर्षत् त्वया सह, तत् यजनसामग्रीयुक्तं यक्षं ब्रह्मैवासीत्। इति इत्थमुपदिष्टः छिन्नसंशयः ततः तदनन्तरं ह निश्चयेन एव अन्ययोगव्यवच्छेदपूर्वकं तन्महद्भूतं ब्रह्म, अशेषदोषशून्य मनादिमजमव्यक्तं परब्रह्मैवासीत् इति, इत्थं विदाञ्चकार, जज्ञौ ।।श्रीः।।

एवं ब्रह्मज्ञानसम्पन्नः सर्वप्राथम्यमभजत् तमेव हेतुं स्पष्टयति—

**तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायुरिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पृशुस्ते ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ।।२।।**

उमया ब्रह्मेत्युक्तमात्रमवगम्य इन्द्रः ब्रह्म ज्ञातवान् अनन्तरमागत्य तद्विषये अग्निवायू अपि तद्ब्रह्म विज्ञापयामास। पश्चात् इन्द्रवाय्वग्निभिः सर्वेदेवाः ब्रह्मोपदिष्टाः इति सुराणां ब्रह्मविद्यापरम्परा। इन्द्रः सन्नपि महाभिमानी समुपलभ्य सद्गुरुमुमां तद्दर्शनेनैव निरस्तब्रह्मबोधप्रत्यवायतया ब्रह्मेति सकृदुच्चारणेनैवोमायाः सपद्युपजगाम, एतेन ब्रह्मविद्याप्राप्तेः सद्गुरुकृपायत्तता सूच्यते। तमेव राद्धान्तं विवृणोति-तस्मात् हेत्वनुवादोऽयं यतस्ते ब्रह्मज्ञातवन्तस्ततो हेतोः, वा निश्चयेन एते देवाः इमे पावकपवनपुरन्दराः अन्यान् देवान्, वरुणसूर्यशशांकादीन् अतितराम्, शेरत इति शशः। अत्यरिच्यन्त अतिक्रान्तवन्तः। इव यथा लोक उपमापरोऽप्ययमिवशब्दः वेदे निश्चयपरः। ब्रह्म ज्ञत्वा इमेदेवाः निश्चयेन सर्वान् देवान् समतिशेरत इति भावः। कथमतिशयत्वमेषां सर्वेभ्यः? इत्यत आह—यत्, यस्माद्धेतो ते, पूर्वोक्ताः अग्निः वायुः इन्द्रः, हुताशनः समीरः पाकशासनः हि, निश्चित्य एनत्, अन्वादेशे इदं रूपं पूर्वदृश्यमानं नेदिष्ठम्, अतिसमीपस्थं यक्षं ब्रह्म प्रथमः, क्रियाविशेषेणभूतोऽपि क्लीबे वर्तमानोऽपि **सुपां सुलुक्** इत्यनेन अमः स्वादेशे रूत्वे विसर्गे प्रथमः प्रथममित्यर्थकः। तथा हि सर्वप्रथमं पस्पृशुः, चक्षुषा रूपावच्छेदेन तद्ब्रह्म स्पृष्टवन्तः। यतो हि ते, अग्निवाय्विन्द्राः एनत्, पुरोदृश्यमानं परमात्मतत्त्वं चाक्षुस्साक्षात्कारविषयीकृत्यापि प्रथमं ब्रह्म इति, इदं ब्रह्मैव एवं रूपेण विदाञ्चकार **व्यत्ययोबहुलम्** इति सूत्रेण विदान्ञ्चक्रुः इत्यर्थे विदाञ्चकार इति प्रयोगः, ज्ञातवन्तः इति भावः ।।श्रीः।।

एषु कतमः सर्वश्रेष्ठः इत्यत आह—

**तस्माद् वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श स ह्येनत् प्रथमो विदाञ्चकार ब्रह्मेति ।।३।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रथ नाभौ स्यन्दनस्य चक्रे अरा इव यथा यत्र नाड्यः संहताः सम्बद्धाः सन्ति, तमेव ओमिति मन्त्रेण आत्मानं परमात्मानं ध्यायथ ध्यानं कुरुत । तमसः अन्धकारात् परस्तात् परिभूताय वः पराय युष्माकं संसारसागरपारकरणाय स्वस्ति ।।श्रीः।।

परमात्मनः प्रतिष्ठामाह -

**यः सर्वज्ञः सर्वविद्यस्यैष महिम भुवि ।**
**दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ।।७।।**

सर्वंजानातीति सर्वज्ञः, सर्वं विन्दतीति सर्वविद् यस्य एष महिमारूपो भुवि विराजते । एष आत्मा परमात्मा राघवेन्द्रः दिव्ये अप्राकृते द्योतनशीले व्योमनि उपरिष्टाद् वर्तमाने महाकाशरूपे ब्रह्मणः रामचन्द्रस्य पुरं ब्रह्मपुरं तस्मिन् ब्रह्मपुरे साकेते प्रतिष्ठितः सीतया सह विराजते ।।श्रीः।।

भूयः परमात्मनो भोग्यवर्गेऽपि प्रतिष्ठामाह -

**मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं सन्निधाय ।**
**तद्विज्ञानेन परिपश्यन्ति धीरा आंनन्दरूपममृतं यद्विभाति ।।८।।**

यः मनोमयः भक्तमनः प्राचुर्यवान् , अथवा मन इव मयते गच्छति भक्तसमीपं यः स मनोमयः, प्राण एव शरीरं प्राणशरीरं तन्नयति इति प्राणशरीरनेता स हृदयं सन्निधाय स्वमन्दिरं विधाय अन्ने भोग्यपदार्थेऽपि प्रतिष्ठितः । यद् आनन्दरूपं परमानन्दमयम् अमृतं संविभाति तदेव धीरा विज्ञानेन परिपश्यन्ति, बुद्ध्या जानन्ति । अथवा सेवकसेव्यभावज्ञानेन जानन्ति ।।श्रीः।।

अथ ब्रह्मदर्शनफलमाह —

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।**
**क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ।।९।।**

परैः चिद्वर्गैः जीवैः सह अवरे अचिद्वर्गाः सन्ति यस्मिन् सः परावरः, अथवा परे जीवात्मान एव अवरे विशेषणानि सन्ति यस्य इति परावरः तस्मिन् परावरे, जगज्जीव-विशेषणके परमात्मनि तस्मिन् दृष्टे अस्य साधकस्य हृदयग्रन्थिः जड़चेतनात्मिका भिद्यते नष्टा भवति । सर्व संशयाः सर्वे सन्देहाः आत्मानात्मविषयकाः सन्देहाः छिद्यन्ते नाश्यन्ते । तथा च अस्य जीवात्मनः कर्माणि प्रारब्धक्रियमाणसंचितानि क्षीयन्ते नष्टानि भवन्ति ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ ब्रह्मधाममहिमानमाह —

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।**
**यच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ।।१०।।**

हिरण्मये जाज्वल्यमाने परे कोशे साकेते यद् विरजं रजोगुणरहितं निष्कलं ब्रह्म तदेव शुभ्रं सकलदोषवर्जितम् । ज्योतिषां सूर्यचन्द्रपावकानामपि ज्योतिः प्रकाशदाता, तदेव आत्मविदः परमात्मवेत्तारः विदुः जानन्ति ।।श्रीः।।

अथ ब्रह्मधाम्नः प्रकाशकत्वमाह —

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युते भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।११।।**

तत्र ब्रह्मणि सूर्यः, तारकं चन्द्रमास्तारकाश्च न भान्ति, इमाः विद्युतः न भान्ति न प्रकाशन्ते । अयमग्निः प्राकृतः कुतः केन सामर्थ्येन प्रकाशेत । तमेव परमात्मानं भान्तं प्रकाशमानमनुलक्ष्य सर्वं चिदचिदात्मकं भाति, प्रकाशितं भवति । तस्य ब्रह्मणः भासा प्रकाशेन इदं सर्वं विभाति प्रकाशते ।।श्रीः।।

अथ ब्रह्मणः सर्वव्यापकतां वर्णयति —

**ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण ।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ।।१२।।**

इदं ब्रह्मैव पुरस्तात् मम अग्रे इदं पश्चात् पृष्ठीभागे दक्षिणतः वामतश्च अधः नीचैः ऊर्ध्वमुपरि सर्वत्रैव ब्रह्म ।। श्रीः।।

**।। इति द्वितीयमुण्डके द्वितीयखण्डः ।।**
**।। श्रीराघवः शन्तनोतु ।।**

## ।। अथ तृतीयमुण्डके प्रथमखण्डः ।।

अथ परमकरुणाहृदया श्रुतिः परमेश्वराराधनं समुपदिदिक्षुः जीवब्रह्मणोः स्पष्टं समभिव्यनक्ति भेदं, द्वा इत्यादिना —

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह द्वा सुपर्णा, सयुजा, सखाया इति चतुर्षु स्थानेषु **सुपां सु लुक् पूर्वसवर्णाच्छे-या डा-ड्या-याजालः** (पा०अ० ७-१-३९) इत्यनेन पूर्वसवर्णः । द्वौ ब्रह्मजीवरूपौ द्वित्वसंख्यावच्छिन्नौ सुपर्णौ शोभनपक्षवन्तौ पक्षिणाविव वृक्षाश्रयत्वात् समानधर्मता, सयुजौ सहैव युञ्जतः इति सयुजौ सह निवासकर्तारौ, सह खेलतः, सहैव ख्यातः, सहैव खादतश्च यौ तौ सखायौ परस्परं सुहृदौ **सुहृदं सर्वभूतानाम्** (गीता ५-२९) इति स्मृतेः ।

**''राम प्राण प्रिय जीवन जी के, स्वारथ रहित सखा सबही के ।।**

(मानस २-७४-६)

इति मानसाच्च । समानं समानरूपेणैव वृक्षं वृश्चनधर्मत्वात् वृक्षरूपं शरीरं परिषस्वजाते अत्र परोक्षे लिट् । अनादिकालतः द्वित्वविशिष्टौ खगाविव सुहृदौ जीवात्मपरमात्मनौ शरीरवृक्षं परिष्वक्तवन्तौ बभूवतुः । तयोः जीवात्मपरमात्मनोर्मध्ये अन्यः परमात्मविलक्षणो जीवात्मा पिप्पलं शुभाशुभफलरूपं स्वादु प्रतिकूलानुकूलानुभूतिमयम् अत्ति भुङ्क्ते वृक्षासक्तत्वात् । अन्यः इतो विलक्षणः समस्तहेयगुणबहिर्भूतः सकलकल्याणगुणगणसागरः समशेषसृष्टिरचनानागरः अनश्नन् पिप्पलमखादन् कर्मविपकमभुञ्जानः अभिचाकशीति अभितः श्रीसाकेतश्रीमदयोध्यानिकेतयोः श्रीगोलोक गोकुलयोश्च श्रीरामकृष्णरूपः शोभते । अत्र ब्रह्मजीवयोः स्पष्टं भिदा। यत्तु शङ्कराचार्यः ईश्वरं सत्वोपाधिपरिच्छिन्नमाह, तथा हि तत्तत्यं भाष्यम्, **सुपर्णाविव अविकामकर्म-वासनाश्रयलिङ्गोपाध्यात्मेश्वरौ तथा च इतर ईश्वरो नित्यशुद्धबुद्धमुक्तस्वभावः सर्वज्ञः सर्वसत्वोपाधिरीश्वरो नाश्नाति** इति । तदसंगतम् । यतो हि ईश्वरस्य नैकमपि प्रमाणमुपाधिपरिच्छिन्नत्वे, अहो ! एकमपि प्रमाणमन्तरेणापि ईश्वरः सत्वोपधिपरिच्छिन्नः, जीवात्मा मलिनसत्वोपाधिः इति कुतः कल्पयाम्बभूविरे प्रच्छन्नबौद्धाः ।

न च

**मायां तु प्रकृतिं विद्यान्मायिनं तुमहेश्वरम् ।**
**तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ।।**

श्वे० उ० ४-१०

इत्यस्ति प्रमाणमिति वाच्यम्, मायायाः उपाधिपर्यायत्वे मानाभावात्, मतुबर्थस्येनि-प्रत्ययस्य सम्बन्धेऽपिविधानेनादोषाच्च । तथा

**हि-भूमनिन्दाप्रशंसासु नित्ययोगेऽति शायने ।**
**सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इतिभाष्यवार्तिकलिङ्गात् ।

सम्बन्धश्च नियम्यनियामकभावरूपः, न हि नियम्यो नियामकं परिच्छिनत्ति । कथमहो मेघो व्योममण्डलं परिच्छेत्तुं प्रभवेत् । किं च किं रूपस्त्वदीयोपाधिः, सत्यः असत्यो वा ? यदि सत्यः तर्हि तावकीना ब्रह्मसत्यत्वप्रतिपादनप्रतिज्ञा मोघारम्भा, त्वयैव धूलिसात्कृतः स्यात्, त्वत्प्राणबल्लभोऽद्वैतवादः । यद्यसत्यः तर्हि तेन सत्यस्य ब्रह्मणः आवरणम् असम्भवम् । न हि असत्यजलेन मरुमरीचिकया वा तृट्छान्तिः । पुनश्च किमाश्रयोऽयमुपाधिः स्वाश्रयः पराश्रयो वा ? स्वाश्रयश्चेत् असम्भवः, नहि अति चतुरोऽपि नटः स्वेन स्वस्कन्धमारोढुमर्हति । यदि ब्रह्माश्रयः तदप्यनर्गलं नह्यन्धकारः सूर्ये स्थातुं प्रभवति, न व समिद्धपावके तूलराशिः । तस्मान्मायावादसन्निपातजल्पितमिवोपेक्ष्यं शांकरभाष्यमेतत् । इह श्रुतौ तृतीयतुरीय चरणयोः द्विप्रयोगोऽन्यशब्दस्य जीवाद् ब्रह्मणः ब्रह्मणश्च जीवस्य स्वरूपगतं परस्परं वैलक्षण्यं प्रतिपादयति, द्विर्बद्धं सुबद्धं भवतीति नियमात् । यदि भेदः स्यादौपचारिको ब्रह्मजीवयोः, तर्हि नैवान्यशब्दं द्विः प्रयुञ्जीत श्रुतिः । अन्य शब्दस्य स्वभावतः समपेक्षितावधिकत्वात् , अवद्ध्यवधिमतोश्च भेदघटितत्वस्वभावात् श्रुत्यैव साधितो ब्रह्मजीवभेदः, इति विरम्यते ।।श्रीः।।

अथेदं तथ्यं भूयोऽपि स्पष्टयति —

**समाने वृक्षे पुरूषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमनमिति वीतशोकः ।।२।।**

समाने पूर्वोक्ते शरीररूपे वृक्षे निमग्नः मोहनिशिनिद्रितः अनीशया ईशभिन्नया, नास्ति ईशः आश्रयः यस्याः सा अनीशा तया अनीशया अविद्यया करणभूतया मुह्यमानः मोहं ब्रजन् शोचति । एतद् विपरीतं यदा जुष्टं विदचिद्भ्यां विशेषणाभ्यां सेवितं विशिष्टं च अन्यं जडचेतनाभ्यां विलक्षणं क्षराक्षराभ्यामतिरिक्तम् ईशं परमेश्वरम् इति, इति शब्दश्चकारार्थः । तथा च अस्य परमात्मनो महिमानं यदा यस्मिन् काले पश्यति, तदा वीतशोको भवति । इत्यनेन विशिष्टाद्वैतवादः सूत्रितः ।।श्रीः।।

अथ ब्रह्मविदुषो ब्रह्मसाम्यप्राप्तिमाह —

**यदापश्यः पश्यते रूक्मवर्णं कर्तारमीशं पुरूषं ब्रह्मयोनिम् ।**
**तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ।।३।।**

यदा यस्मिन्समये, अपश्यः अकारं वासुदेवं पश्यतीति अपश्यः भगवद्दर्शनशीलः, यदा रुक्मवर्णं परमं तेजस्विनम् ईशं सर्वसमर्थं परमात्मनं ब्रह्मणः विधातुश्च योनिं जन्मदातारं, कर्तारं समस्तजगतः रचयितारं पश्यते साक्षात् कुरुते, तदा तस्मिन् समये

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विद्वान् ब्रह्मवेत्ता शुभाशुभफलभूते पुण्यपापे विधूय समाप्य निरञ्जनं कर्मलेपरहितं परमं पूजनीयं साम्यं समत्वमुपैति । यद् वा भोगमात्रे ब्रह्मणः साम्यमुपैति । **भोगमात्र-साम्यलिङ्गाच्च:** ब्र०सू०४-४-१८ इति व्यासवचनात् ।।श्रीः।।

अथ ब्रह्मविदं प्रशंसति —

**प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन्विद्वान्भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ।।४।।**

एषः प्राणः सर्वेषां जीवनभूतः, यः पृथिव्यादिभिः सर्वभूतैर्विभाति शोभते । एवंभूतं सर्वेषां प्राणं परमात्मानं विजानन् विविच्यावगच्छन् आत्मना परमात्मना सह क्रीडतीति आत्मक्रीडः, यद् वा आत्मनि स्वमिन्नेव क्रीडति इत्यात्मक्रीडः । आत्मनि परमात्मनि रतिः यस्य स आत्मरतिः तथा क्रियावान् भगवदीयक्रियासम्पन्नः, ब्रह्मविदां, ब्रह्मज्ञानां, ब्रह्मप्राप्तृणां वा वरिष्ठः एषः विद्वान् आतिवादी न भवति नाधिंक वदति, प्रायो मौनमालम्बते ।।श्रीः।।

अथ परमात्मनः प्राप्तिप्रकारमाह —

**सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ।**
**अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ।।५।।**

यः सर्वेषाम् अन्तःशरीरे हृद्देशे अन्तर्यामिरूपः ज्योतिरेव ज्योतिर्मयः शुभ्रः निर्दोषः विभाति । यम् अन्तर्यामिणं क्षीणाः नष्टाः दोषाः भगवद्-भजनप्रत्यवायाः येषां तथाभूताः क्षीणदोषः यतयः भगवद्भक्ताः श्रीवैष्णवास्त्रिदण्डिनः पश्यन्ति । एष आत्मा सत्येन तपसा ब्रह्मचर्येण एभिः समुदितेन सम्यग्ज्ञानेन सेवकसेव्यभावमयेन एष आत्मा परमात्मा लभ्यः ।।श्रीः।।

अथ भगवती श्रुतिः सत्यं प्रशंसति —

**सत्यमेव जयति नानृतं सत्येन पन्था विततो देवयानः ।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ।।६।।**

सत्यं भूतार्थवाद एव जयति सर्वोत्कृष्टं विराजते, अनृतं असत्यं न जयति । येन आप्तकामाः प्राप्तसमस्तकामाः ऋषयः महर्षयः यत्र तत्परमं सत्यस्य निधानं परमात्मतत्त्वं विराजते, तमेव साकेतलोकं येन आक्रामन्ति सूर्यद्वारेण प्राप्नुवन्ति । तन्मार्गभूतः देवयानः देवाः यान्ति येन तादृशः पन्था येन सत्येन विततः तदेव सत्यं सर्वत्र जयति ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भूयः स्वरूपतो तन्निर्वक्ति —

**बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति ।**
**दूरात्सुदूरे तदिहान्तिके च पश्यत् स्विहैव निहितं गुहायाम् ।।७।।**

तद् ब्रह्म बृहत् निरतिशयवर्धनशीलं, दिव्यम्, अलौकिकम् अचिन्त्यानि न चिन्तयितुं शक्यानि रूपाणि नृसिंहादीनि यस्य तत् अचिन्त्यरूपं, यच्च सूक्ष्माज्जीवादपि सूक्ष्मतरम् अणीयः । यत् भगवद् विमुखानां कृते दूरादपि दूरे वर्तमानं, यच्च स्वभक्तानां कृते अन्तिके निकटे, यच्च सर्वेषु देवेषु पश्यत्सु द्रष्टुं यतमानेषु गुहायां हृदये योगमायाञ्चलरूपायां निहितं, तदेव आत्मभूतं केवलं सत्येन लभ्यते ।।श्रीः।।

अथ ब्रह्मप्राप्तिदुरूहतां वर्णयति —

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्वस्तस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ।।८।।**

तद् ब्रह्म चक्षुषा नेत्रेण वाचा वाण्या न गृह्यते, न वा देवैः तपसा कर्मणा, अयं गृहीतुं शक्यः । वस्तुतस्तु ज्ञायते जगदनेन इति ज्ञानं, ज्ञानं नित्यमस्त्यस्य इति ज्ञानं ब्रह्म, **सत्यंज्ञानमनन्तं ब्रह्म** इति श्रुतेः । तस्य ज्ञानस्य परमात्मनः प्रसादः कृपा, तस्मात् ज्ञानप्रसादात् परमात्मकृपया, विशुद्धं शुद्धं चित्तं यस्य सः निष्कलं निर्लीनकलकं तं ध्यायमानः ध्यानविषयं कुर्वन् पश्यति, साक्षात्करोति ।।श्रीः।।

अथ परमात्मनो ज्ञाने चित्तरूपमन्तःकरणं निश्चित्य तस्य जीवात्मनः स्वरूपं निर्धारयति —

**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश ।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन् विशुद्धे विभवत्येष आत्मा ।।९।।**

यस्मिन् जीवात्मनि प्राणः अन्तःसञ्चारिवायुः, पञ्चधा प्राणापानव्यानसमानोदानप्रकारः यस्मिन् जीवात्मनि सति विराजमाने शरीरं संविवेश । यस्मिंश्च वर्तमाने प्रजानां प्राणैः सह चित्तमोतं प्रोतं, यस्मिंश्च भगवन्नामरूपलीलाधामचिन्तनेन एषः अतिसन्निकृष्टः प्रत्यगात्मा चेतसा चित्ताख्येन अन्तः करणेन, वेदितव्यः देहेन्द्रियमनोबुद्धिविलक्षणतया ज्ञातव्यः । अणुः अनयैव श्रुत्या जीवात्मनोऽणुत्वं परमात्मनश्च विभुत्वं साधितं कण्ठरवेण । तथा हि प्रथमचरणे **एषोऽणुरात्मा** इत्यनेन अणुत्वं जीवात्मनः, चतुर्थचरणे **विभवत्येष आत्मा** इत्यनेन परमात्मनो विभुत्वम् । अनयैव वज्रसाररूपया श्रुत्या प्रच्छन्नबौद्धकल्पितं जीवात्मविभुत्ववादाडम्बरं शैलकूटमिव धूलिसात्कृतम् ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथात्मज्ञपूजनफलमाह —

**यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयेते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ।।१०।।**

**रा०कृ०भा०** - अत्र आत्मशब्दः जीवात्मपरमात्मपरः, स्वस्वरूप परस्वरूपज्ञाता स्वकीयेन मनसा यं यं लोकं कामयते, तं तं कामं प्राप्नोति । यतो हि स विशुद्धसत्वः तस्मात् भूतिकामः भगवदनुग्रह समभिलाषी आत्मज्ञम् अर्चयेत् पूजयेत् ।।श्रीः।।

**।। इति तृतीयमुण्डके प्रथमखण्डः ।।**
**।। श्रीराघवः शन्तनोतु ।।**

## ।। अथ द्वितीयः खण्डः ।।

अथ ब्रह्मज्ञान प्रकारं शुक्रातिवर्तनं च निर्वक्ति —

**स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम् ।**
**उपासते पुरूषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः ।।१।।**

स एव आत्मज्ञः तत्परमं पूजनीयं ब्रह्मधाम वेद जानाति साकेतलोकमुपास्ते । यः चेतसा अणुभूतं प्रत्यगात्मनं स्व स्वरूपलक्षणं वेद । यत् शुभ्रं, यत्र च विश्वं निहितं तन्निरस्तसमस्तहेयगुणं कलितसकलकल्याणगुणं परमं ज्योतिर्मयं ब्रह्म स वेद । ये अकामाः संसारकामनावर्जिताः पुरुषं परमात्मानमुपासते, निजनाथरूपेण सेवन्ते, त एव धीराः एतत् शुक्रं रेतस्संभवं संसारम् अतिवर्तन्ति, अतिक्रामन्ति । भगवद्भजनमन्तरेण कोऽपि न कन्दर्प दर्पं व्याहन्तुं प्रभवति । यथा मानसकाराः —

**धरे न काहु धीर सबके मन मनसिज हरे ।**
**जेहिं राखे रघुवीर सो उवरे तेहि काल मँह ।।**

मानस १-८५ ।।श्रीः।।

अथाप्तकामं प्रशंसति —

**कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनस् त्विहैव सर्वे प्रविलीयन्ति कामाः ।।२।।**

यः मन्यमानः अभिमानयुक्तः कं सुखम् आमं अपक्वं येषु ते कामाः तान् भोग्यपदार्थान् कामयते, सः कामभिः कामनायुक्तैः हेतुभूतैः मातापितृभिः तत्र-तत्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उच्चावचनेषु लोकेषु जायते । यस्तु पर्याप्तकामः, कृतात्मा साक्षात् कृतः आत्मा परमात्मा येन, तथाभूतस्य सर्वेकामा इहैव अस्मिनेव लोके प्रविलीयन्ति, भगवद्भजने न प्रत्यवायाः भवन्ति ।।श्रीः।।

अथ परमात्मप्राप्ति प्रकारमाह —

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ।।३।।**

आत्मा परमात्मा, प्रवचनं वेदाध्यापनं, मेधा शास्त्रग्रहणशक्तिः, श्रुतं वेदान्तश्रवणम्, इह परमात्मप्राप्तिसाधनत्वेन प्रवचनमेधाश्रुतानां एकैकशो निषेधः । अयमात्मा परमात्मा केवलेन प्रवचनेन, केवलया मेधया, केवलेन च वेदान्तश्रवणेन न लभ्यः । त्रिर्नकारं पठित्वा त्रैकालिकनिषेधमाह तर्हि कथं लभ्यः ? इत्यत आह - एषः परमात्मा यमेव वृणुते यं भूरि भाग्यवन्तं कृपावात्सल्यभाजनत्वेन स्वीकरोति, तेन महात्मनैव साधनेन लभ्यः । यतो हि तस्यैव समक्षम् , एषः आत्मा परमात्मा स्वां तनुं निन्दितकोटिकोटिकादम्बिनीं विवृणुते आविष्करोति । अत एव श्रीभागवते -

**रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद् गृहाद् वा ।**
**नच्छन्दसा नैव जलाग्निसूर्यै र्विना महत्पादरजोऽभिषेकम् ।।**

भागवत ५-१२- ।।श्रीः।।

अथ पुनरपि परमात्मप्राप्तिप्रकारमाह —

**नायमात्म बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ।**
**एतैरूपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ।।४।।**

अयमात्मा परमात्मा बलहीनेन आत्मबलरहितेन न लभ्यः । न वा प्रमादात् , न वा अलिङ्गात् शास्त्रीयविधिलिङ्गरहितात् तपसोऽपि लभ्यः । एतैः उपायैः यतमानस्य विदुषः अर्थपञ्चकतत्वज्ञस्य पुरस्तात् परमात्मा स्वां तनुं प्रकटयति ।।श्रीः।।

अथ यतीन्द्राणां महत्वं वर्णयति —

**सं प्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मनो वीतरागाः प्रशान्ताः ।**
**ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मनः सर्वमेवाविशन्ति ।।५।।**

सेवकसेव्यभावरूपेण ज्ञानेन तृप्ताः ज्ञानतृप्ताः तृप्तः आत्मा अन्तः करणं येषां तथाभूताः ऋषयः नं परमात्मानं सम्प्राप्य प्रशान्ताः शान्तमनसो भवन्ति । ते धीराः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सर्वतः सर्वतोभावेन संसारसर्वसम्बन्धैश्च सर्वगं सर्वव्यापिनमिमं प्राप्य, युक्तः समर्पितः भववत्कङ्कर्ये आत्मा देहः यैस्ते युक्तात्मानः तं सर्वस्वरूपं परमात्मानं विशन्ति प्रविशन्ति ।। श्रीः।।

अथ परमात्मनिलयप्रकारमाह —

**वेदान्तविज्ञानसुनिश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्वाः।**
**ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ।।६।।**

वेदान्तम् उपनिषत्प्रमाणं वेदव्यासप्रणीतदर्शनम् । तस्यैव विज्ञानेन विनिश्चितः विशिष्टाद्वैतवादरीत्या निश्चितः अर्थ परमार्थः यैस्ते, सन्यासयोगात् प्रपत्तियोगलक्षणात् विशुद्धं सत्वं येषां तथा भूताः, ते सर्वे परान्तकाले शरीर-विसर्जनसमये ब्रह्मलोकेषु साकेते, परामृताः उत्कृष्ट भक्त्यामृतसेविनः परिमुच्यन्ते बन्धनात् मुक्ताः भवन्ति ।।श्रीः।।

भूयः प्रलयं वर्णयति -

**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु ।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति ।।७।।**

पञ्चदशकलाः प्राणे देवाश्च प्रधानदेवतासु, कर्माणि आत्मनि एवं सर्वे परस्मिन् ब्रह्मणि एकीभवन्ति, एकीभूयतिष्ठन्ति ।।श्रीः।।

अथ नामरूपमुक्तिप्रकारमाह —

**यथा नद्यः स्यन्दमाना समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ।।८।।**

यथा द्रवन्त्यः नद्यः नामरूपे त्यक्त्वा सागरे अस्तं गच्छन्ति । तथैव ब्रह्मवेत्ता सांसरिकनामरूपाद्विमुक्तः नित्यभगवत् किङ्कररूपः परातपरं जीवात्मनोऽपि सूक्ष्मं दिव्यं पुरुषमुपैति, प्राप्नोति ।।श्रीः।।

फलश्रुतिमाह —

**स यो ह वै तत्परमं ब्रह्मवेद ब्रह्मैव भवति नास्या ब्रह्मवित्कुले भवति ।**
**तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ।।९।।**

एवं भूतं ब्रह्म यः जानाति, स ब्रह्मैव भवति, ब्रह्मणे एव भवति । **सुपां सुलुक्** (पा०अ० ७-१-३९) इत्यनेन ङेर्लुक् अस्य कुले भगवद् विमुखो न भवति, शोकं पाप्मानं च तरति ।।श्रीः।।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेदान्ताधिकारं वर्णयति —

**तदेतदृचाभ्युक्तम् -**

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः स्वयं जुह्वत एकर्षिं श्रद्धयन्तः ।**
**तेषामेवैषां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम् ।।१०।।**

इदमेव ऋचा मन्त्रेणोक्तम्-ये क्रियावन्तः सदाचाराः श्रोत्रियाः वेदपारगाः, ब्रह्मनिष्ठाः, ब्रह्मणि निष्ठा येषां तथाभूताः, ये अग्निहोत्रम् अजुह्वत । यैः शिरोव्रतं जटाबन्धनरूपं वानप्रस्थे चीर्णं तेषामेव ब्रहमविद्यां वदेत् उपदिशेत् ।श्रीः।।

अथोपसंहरति —

**तदेतत्सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते ।**
**नमः परमऋषिभ्यो नमः परमऋषिभ्यः ।।११।।**

इदमेव अङ्गिराः शौनकाय प्राह, एतत् अचीर्णव्रतः अकृतव्रतो नाधीते । परम ऋषिभ्यः नमः नमस्कारः **ऋत्यकः** इत्यनेन प्रकृतिभावः । द्विरुक्तिरादरार्था, ग्रन्थसमाप्तिसूचिका च ।।श्रीः।।

**मुण्डकोपनिषदो ह्यनुत्तमं रामभद्रपदभक्तिवर्धनम् ।**
**भाष्यमेतदथ भक्ततुष्टये रामभद्रसुधिया प्रभाषितम् ।।**

इति इत्यथर्ववेदीय मुण्डकोपनिषदि श्रीचित्रकूट तुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्य स्वामिरामभद्राचार्यप्रणीतं श्रीराघवकृपाभाष्यं सम्पूर्णम् ।।

।। **श्रीराघवोः शन्तनोतु** ।।



CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

।। श्रीराघवो विजयते ।।

।। श्रीमते रामानन्दाचार्याय नमः ।।

# ।। अथ माण्डूक्योपनिषदि ।।

# ।।श्रीराघवकृपाभाष्यम् ।।

## मङ्गलाचरणम्

कन्दावदान्तं जनपारिजातं नेत्रच्छविव्रीडितवारिजातम् ।
तं ब्रह्म रामं नयनाभिरामं सीता द्वितीयं कलये तुरीयम् ।।
यद् वेदान्तविदो विदन्ति विरजं विश्वं विभुं विश्वपं
यच्चाहुश्चिदचिद्विशिष्टमनघाद्वैतं परब्रह्म तत् ।
तन्मे नेत्रमलङ्कृषीष्ट सगुणं बालाकृतिश्यामलं
वासिष्ठी पुलिनेषु यत् किमपितन्नीलं महः खेलति ।।

।।माण्डूक्योपनिषदः शन्तिपाठः।।

ॐ भद्रं कर्णेभिः श‍ृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः।
स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेम देवहितं यदायुः ।।
स्वस्ति न इन्द्रो वृद्धश्रवाः स्वास्ति नः पूषा विश्ववेदाः ।
स्वस्ति नस्तार्क्ष्यो ऽरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ।।

ॐ शान्तिः ! शान्तिः !! शान्तिः !!!

अथ शान्तिपाठो व्याख्यायते — हे देवाः द्योतनशीलाः ! वयं कर्णेभिः स्वकीय-श्रवणोन्द्रियैः भद्रं कल्याणकरमेव श‍ृणुयाम । अत्र **बहुलं छन्दसि** इत्यनेन कर्णशब्दाददन्तादपि भिसो नैसादेशः । वयं यजत्राः जयन्ते इति यजत्राः बाहुलकात् कर्तर्यपित्रल्प्रत्ययः । अथवा यजनं यजः तं त्रायन्ते इति यजत्रा अनुपसर्गेऽपि यजोपपदत्राधातोः "क" प्रत्ययः, यज्ञत्राणतत्पराः वयमक्षिभिः नेत्रैः, ननु अक्षिशब्दात् भिसि अक्षिभिः कथं न ? सत्यं अकारान्त एषः नेत्रवाची । अक्षम् - अक्षे - अक्षणि,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत एव प्रत्यक्षं- समक्षं अध्यक्ष इत्यादि संगच्छते । तर्हि कथं नैसादेशः अक्षैरिति ? पूर्वोक्तदिशैवसमाधातव्यम् । बाहुलकादप्रवृत्तिः । एवम् अक्षभिः नेत्रैः भद्रं कल्याणमेव पश्येम । एवं स्थिरैः अङ्गैः स्वस्थैः अवयवैः, **तुष्टुवाँ सः** तुष्टवांसः अतिशयेन देवं स्तुवन्तो भवेम । यद् अस्माकमायुः जीवनं तत् तनूभिः शरीरैः देवहितं देवेभ्यो हितं भगवन्निमित्तमेव व्यशेमहि नियोजमहि ।। ॐशान्तिः ! शान्तिः ! शान्तिः !, त्रितापशमनार्थं शान्तिशब्दस्य त्रिरूच्चाररणम् ।।श्रीः।।

अथ ओङ्कारशब्दस्य व्याख्यानभूतेयं द्वादशमन्त्रात्मिका माण्डूक्योपनिषत् । माण्डूक्यो नाम कश्चिदृषिः तेनेयमदर्शीत्यतो माण्डूक्योपनिषत् -

**ओमित्येतदक्षरमिदँ सर्वं तस्योपव्याख्यानं भूतं भवद् भविष्यदिति सर्वमोङ्कार एव । यच्चान्यत् त्रिकालातीतं तदप्योङ्कार एव ।।१।।**

ओम् इति एतत् इदम् अक्षरं ब्रह्म सर्वमेव ओङ्कारस्य व्याख्याभूतम् । भूतं भूतकालः, भवद् वर्तमानकालः, भविष्यत् त्रिकालातीतं निरस्तहेयगुणकं समस्तहेयप्रत्यनीकगुणगणनिलयं ब्रह्म तदपि ओङ्कार एव जगत्कारणत्वात् ।।श्रीः।।

अथ शरीरस्य जगतः कार्यभूतस्य कारणेन शरीरिणा भगवता सामानाधिकरण्यविधया तादात्म्यं सूचयति —

**सर्वँ ह्येतद् ब्रह्मायमात्मा ब्रह्म सोयमात्मा चतुष्पात् ।।२।।**

हि निश्चयेन एतत् सर्वं चिदचिदात्मकं जगत् ब्रह्म, ब्रह्मशरीरकम् । अयमात्मा परमात्मा ब्रह्म, यद् वा आप्नोतीत्यात्मा, अथवा शरीरशारीरि भावेन समानविभक्तिता । **यस्यात्मा शरीरम्** (श.प.ब्रा.१४) इति श्रुतेः । अयमात्मा ब्रह्म ब्रह्मशरीरं, सोऽयं आत्मा परमात्मा चतुष्पात् चतुष्पाद्विभूतिनायकः । जीवस्य तिस्रोऽवस्थाः प्रत्यवस्थं जीवात्मना सह शरीरे तिष्ठत्यन्तर्यामी परमात्मा । जाग्रदवस्थायां जीवेन सह शरीरे तिष्ठन् अन्तर्यामी विराट् कथ्यते, सहस्त्रशीर्षा स एव लक्ष्मणः । एवं स्वप्नावस्थायां जीवात्मना सह शरीरे तिष्ठन् अन्तर्यामी तैजसो हिरण्यगर्भो भवति, स एव शत्रुघ्नः । पुनः सुषुप्तौ जीवेन सह शरीरे वर्तमानः प्राज्ञः स हि भरतः । पुनस्तुरीयावस्थायां जाग्रत्स्वाप्नसन्धौ जीवेन सह शरीरे तिष्ठन्नन्तर्यामी तुरीयो भवति स एव भगवान् रामचन्द्रः । इमे यथाक्रमं ओङ्कारस्य चतुरक्षरप्रकाशकाः । अकारस्य लक्ष्मणो जाग्रदधिष्ठाता विराट्, उकारस्य शत्रुघ्नः स्वप्नस्वामी तैजसो हिरण्यगर्भः, मकारस्य प्रकाशकः प्राज्ञः सुषुप्तीशो भरतः, अर्धमात्रा प्रकाशको रामस्तुरीय परमेश्वरः । तद्यथा —

**अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः ।**
**उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः ।**
**अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ।।**

श्रीरामोत्तरतापिन्युषित् - १-१ ।।श्रीः।।

अथ जागरितस्थानं विश्वं निरूपयति —

**जागारितस्थानो बहिष्प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः ।**
**स्थूलभुग्वैश्वानरः प्रथमः पादः ।।३।।**

जागरितं जाग्रदवस्था स्थानं निवासो यस्य स जागरित स्थानः, एवं बहिः संसारविषयासक्ता प्रज्ञा यस्य स बहिःप्रज्ञः, तथा च स्थूलम् इन्द्रियसगोचरं भुङ्क्ते इति स्थूलभुक्, सप्त अग्निहोत्रक्रियाः वृहदारण्यकदर्शिताः अङ्गानि यस्य सः सप्ताङ्गः । तथा हि श्रुतिः —

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरुपः प्राणः पृथग्वर्मात्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादौ** इति ।। एवम् एकोनविंशतिः दशेन्द्रियाणि, पञ्चप्राणाः चत्वार्यन्तःकरणानि मुखानि प्राप्तिद्वाराणि यस्य एकोनविंशतिमुखः । एवं स्थूलस्य भुक् भोक्ता इति प्राचामनुरोधेन । वस्तुतस्तु स्थूलानपि प्राकृतबुद्धीन् जीवान् भुनक्ति पालयति इति स्थूलभुक्, प्राचीनार्थे स्वीकृते परमात्मनि भोक्तृत्वापत्तौ । **अनश्नन्नन्यो अभिचाकशीति** (मु०उ० ३-१-१) इति श्रुतिर्व्याकुप्येत । एतेन **स एवं विशिष्टो वैश्वानरो यथोक्तैर्द्वारैः शब्दादीन्स्थूलान्विषयान्भुङ्क्त इति** स्थूलभुक् मा०उ० ३ शांकरभाष्य इति शंकर वचनम्,

**विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।**
**आनन्दभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधत ।।**

(मा०उ०गौ०का०३)

इति शङ्कराचार्यपरमगुरूणां गौडपादानामपि कारिका व्याख्यानं श्रुति विरुद्धत्वात् निरस्तम् । न हि कोऽपि धर्मावलम्बी आस्तिकोऽपि श्रुतिविरुद्धमपि कस्यचिद्व्याख्यानं समादृश्येत । ननु स्थूलं भुनक्तीति स्थूलभुक् इति भवद् व्याख्याने किं मानं ? अनश्नन्नन्यो (मु०उ० ३-१-१) इति श्रुतिरेव । अथ तर्हि **सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता** (तै०उ० १-१) इति श्रुतिः कथं संगच्छेत ? इति चेच्छृणु, ब्रह्मणा इति तृतीया, सा च सह इति सहार्थयोगे, स च सह शब्दः तृतीयान्तस्याप्रधानत्वद्योतकः । **सह युक्तेऽप्रधाने** पा०अ० २-३-१९, इति सूत्रानुरोधात् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं भोगे जीवस्य मुख्यकर्तृत्वे सहार्थयुक्ततृतीयार्थब्रह्मणो भोगे अप्रधानकर्तृत्वस्य विवक्षणेनादोषात् ।

अत एवं -

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।।**

गीता ९-२६

इति भगवद्वाक्यं सुसंगतम् । तस्मादचिद् भोग्यं, चिद्भोक्ता, तद् विशिष्टः परमेश्वरो भगवान् प्रेरयिता, इत्येव राद्धन्तयामः । अत एव श्वेताश्वतरोपनिषदि भगवती श्रुतिः साटोपं विशिष्टाद्वैतवादमेव सिद्धान्तयन्ती ब्रह्मत्रैविध्यनिरूपणावसरे चितं जीवात्मानं भोक्तारम् , अचितं जगद्भोग्यं, तद् विलक्षणं परमात्मानं प्रेरयितारं प्रत्यपीपदत् । तद्यथा —

**एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् ।**
**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ।।**

(श्वे० उ० १-१२)

इत्यनेन विशिष्टाद्वैतवादः स्पष्टं समर्थितः । एवं स्थुलप्रपंचस्य पालकः विश्वेषां नराणामयं वैश्वानरः, विश्वेनराः यस्मिन् स वैश्वानरः इति विग्रहे **नरे संज्ञायाम्** (पा० अ० ६-३-१२९) इत्यनेन विश्वशब्दघटकह्रस्वाकारस्य दीर्घः । वैश्वानरः स एव प्रथमः पादः, भगवद् विभूत्यंशविशेषः लक्ष्मणः विराट् । अत एव मानसे —

**शेष सहस्रशीष जग कारन । जो अवतरेउ भूमि भय टारन ।।**

(मानस १-१७-७) ।।श्रीः।।

अथ तैजसं निरूयति —

**स्वप्नस्थानोऽन्तः प्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः**
**प्रविविक्तभुक्तैजसो द्वितीयः पादः ।।४।।**

परमात्मनः द्वितीयः पादः तैजसः तेजोमयः, स च स्वप्न स्थानः, स्वप्ने तिष्ठति इति स्वप्नस्थानः स्वप्नावस्थः विभुः । स च सप्ताङ्गः । एकोनविंशतिमुखः पूर्ववद् दशेन्द्रियचतुरन्तःकरणपञ्चप्राणप्रापकद्वारः । प्रविविक्तं शयानं जीवात्मानं भुनक्ति इति प्रविविक्तभुक् एष द्वितीयपादभूतः शत्रुघ्नः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ सुषुप्तिस्थानं निरूपयति —

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक्चेतोमुखः प्राज्ञस्तृतीयः पादः ।।५।।**

यत्र यस्यामवस्थायां सुप्तः न वा कञ्चन कामं कामयते इच्छति, न वा कंचन स्वप्नं पश्यति प्रगाढनिद्रावशात् तद् अवस्थानं सुषुप्तं कथ्यते । तत्र तिष्ठन् अयमात्मा परमात्मा आनन्दमयः आनन्दप्रचुरः आनन्दस्वरूपश्च । अत एव आनन्दभुक् , आनन्दं भुनक्ति तथा भूतः, न तु आनन्दं भुङ्क्ते इति आनन्दभुक् । अतः परमात्मा आनन्दसिन्धुः कथ्यते, सिन्धुर्न जलं भुङ्क्ते, किन्तु भुनक्ति । अत एव मानसकाराः —

**जो आनन्द सिन्धु सुखरासी । सीकर ते त्रैलोक सुपासी ।।**
(मानस १-१९७-५)

स च चेतोमुखः चेतः चित्तं मुखं प्राप्तिद्वारं यस्य स चेतोमुखः, एवं भूतः, अनेकः एकः संपद्यमानः एकीभूतः, प्रतिशरीरं विभक्तोऽपि एकः । अतः प्रज्ञानघनः, प्रज्ञानविग्रहः प्राज्ञ एव तृतीयः पादः, स च भरतः ।।श्रीः।।

अथ प्राज्ञं विशिनष्टि —

**एष सर्वेश्वर एव सर्वज्ञः एषोऽन्तर्याम्येष योनिः**
**सर्वस्य प्रभवाप्ययौ हि भूतानाम् ।।६।।**

अयमेव सर्वेषाम् ईश्वरः सर्वेश्वरः, एषः सर्वज्ञः सर्वं जानाति तथाभूतः, एष एव अन्तर्यामी सर्वशरीरित्वात् सर्वनियन्त्रितत्वाच्च । अयमेव सर्वस्य चिदचद्वर्गस्य योनिः कारणम्, अयमेव भूतानां प्राणिनां प्रभवाप्ययौ उत्पत्तिप्रलयौ, इदं प्राचीनानुरोधेन । वस्तुतस्तु **एष सर्वेश्वर** इति मन्त्रः तुरीयतत्वं विशिनष्टि । अत एव एषः जाग्रत्स्वप्नसुषुप्तिबहिर्भूतः तुरीयः परमात्मा श्रीराम एव सर्वेश्वरः, सर्वज्ञः, अन्तर्यामी, सर्वस्य योनिः, भूतानां प्रभवाप्ययौ । अत एव वाल्मीकीयरामायणे श्रीराम एव सर्वाणि विशेषणानि संघटन्ते । यथा "सर्वेश्वरः" **स्वामीलोकस्य राघवः** (वा०रा० ६-११७-११) **सर्वज्ञः**

**न भवन्तं मतिश्रेष्ठं समर्थं वदतां वरम् ।**
**आतिशाययितुं शक्तो बृहस्पतिरपि ब्रुवन् ।।**
(वा०रा० ६-१७-५१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अन्तर्यामी त्वं धारयसि भूतानि पृथिवीं सर्वपर्वतान् ।।**

(बा०रा०६-११७-२३)

सर्वस्य योनिः प्रभवाप्ययौ -

**सर्वाल्लोकान् सुसंहृत्य सभूतान्सचराचरान् ।**
**पुनरेव तथा स्रष्टुं शक्तो रामो महायशाः ।।**

(बा.रा. ५-५१-३९)

सर्वेश्वरत्वे स्पष्टमाह —

**सर्वलोकेश्वरस्येह कृत्वा विप्रियमीदृशम् ।**
**रामस्य राजसिंहस्य दुर्लभं तव जीवितम् ।।**

(बा.रा.५-५१-३९)

किं च गोस्वामि तुलसीदासनये श्रीरामस्तुरीयः, वैश्वानरो जागरितस्थानो लक्ष्मणः, स्वप्नस्थानस्तैजसः शत्रुघ्नः, सुषुप्तिस्थानः प्राज्ञो भरतः, इति पूर्वमपि श्रुतिप्रमाणं दर्शितम् ।

अत एव चतस्रोऽवस्था उपमानभूताः यथाक्रमं चतसृणां उर्मिलाश्रुतिकीर्तिमाण्डवी-सीतानाम् । तद्यथा प्राह भगवान् मानसकारस्तुलसीदासः —

**सुंदरी सुंदर बरन्ह सह सब एक मंडप राजहीं ।।**
**जनु जीव उर चारिउ अवस्था विभुन सहित विराजहीं ।।**

(मानसँ १-३२५-४)

अतएव तृतीय सोपाने गोस्वामिपादाः प्राहुः —

**जगद्गुरुं च शाश्वतं तुरीयमेव केवलम् ।।**

(मानस.३-३.९)

पुनश्च तुरीयमिमं रामचन्द्रमेव गोस्वामितुलसीदासमहाराजाः असकृदन्तर्यामी इति समघोषयन् । यथा -

**अन्तरजामी राम सकुच सप्रेम कृपायतन**

(मानस२-२०१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विनती बहुत करौं का स्वामी । करुनामय उर अन्तरजामी ।।**

(मानस २-६६-८)

**जानतहूँ पूछिय कस स्वामी । सबदरसी तुम्ह अन्तरजामी ।।**

(मानस ३-८-७)

एवं श्रीसीतामपि रामाभिन्नतया प्रतिपादयन् तामपि समानत्यन्तर्यामित्वेन तुलसीदासः —

**अंतरजामी राम सिय तुम्ह सरवग्य सुजान ।**
**जौं फुर कहहुं त नाथ निज कीजिय वचन प्रवान ।।**

(मानस २-२५६)

एवं यदि शांकरमतेन **एषः सर्वेश्वरः** इति मन्त्रः तृतीयपादरूपस्य प्राज्ञस्यैव व्याख्यानं, तर्हि एक एव प्राज्ञः कथं सर्वज्ञः स्यात् ? एवं तस्यान्तर्यामित्वे श्रीतुलसीदासाभिप्रेततुरीयश्रीसीतारामान्तर्यामित्वं विरुद्धयेत । ननु विरुद्ध्यतां कामं, न तुलसीदासः कश्चिदृषिः स तु लोकभाषाकविः ? अहो ! इति प्रलपतस्ते कथं न रसना ते विशीर्यते । श्रीतुलसीदासो भाषाकवित्वेऽपि भगवद् वेदव्यासवचनात् महर्षिवाल्मीक्यवतारः साक्षान्महर्षिः, अतस्तद्वाक्यं पुराणमिव परतः प्रमाणकोटिमाटीकते । तथा हि भविष्योत्तरपुराणे प्रतिसर्गपर्वणि चतुर्थाध्याये उमामहेश्वरसंवादे वेदव्यासवचनम्—

**वाल्मीकिस्तुलसीदासः कलौ देवि भविष्यति ।**
**रामचन्द्रकथां साध्वि भाषाबद्धां करिष्यति ।।**

यदि त्वं पुराणमपि न मन्येथाः ? तर्हि त्वादृक्षेण नास्तिकशिरोमणिना सह सम्भाषणमपि निरयाय । ततो मदुक्त एव पन्था ज्यायान् । अनेन त्वत्कल्पितव्यष्टिसमष्टिज्ञानकल्पना गौरवमपि न स्यात् । तस्मात् प्राज्ञस्तृतीयः पादः सर्वज्ञस्तुतीयः । किं च अथर्वश्रुतिः भरतं प्राज्ञं प्राह —

**प्राज्ञात्मकस्तु भरतः** स च नान्तर्यामी । अन्तर्यामी रामः स च न प्राज्ञः । अतोऽयं मन्त्रः तुरीयव्याख्यानपरः ।।श्रीः।।

अथ तुरीयं स्वरूपतो लक्षयन्तीर श्रुतिः तद् विज्ञेयत्वमाह —

**नान्तःप्रज्ञं न बहिष्प्रज्ञं नोभयतः प्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञम् । अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ।।७।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ननु यदि पूर्वोक्तं पादत्रयं परमात्मा सबन्ध्येव तर्हि किमनेन प्रतिषेधवचनेन ? इति चेदुच्यते—पूर्वोक्ताः त्रयः पादाः ज्ञेयाः, चतुर्थश्च विज्ञेयः, इति विशेषः। आत्मशब्दोऽत्र परमात्मपरः स च शरीरानवच्छिन्नः, यद्यपि जाग्रदाद्यवस्थावच्छिन्नः परमेश्वरोऽपि न विकारवान् , विकारास्तु विशेषणे ह्यचिति तथापि कार्यब्रह्मैव तत् पादत्रयावच्छिन्नम्। तुरीयमेव कारणं ब्रह्म, अतो निषेधन्त्यवस्थात्रयावच्छिन्नं श्रुतिः प्राह— **नान्तः प्रज्ञयम्** न विद्यतेऽन्तःप्रज्ञा यस्मिन्, अर्थात् अन्तःप्रज्ञ प्रविविक्तभुक् तैजसं नेदम्। न बहिःप्रज्ञं बहिर्जगति प्रज्ञा ज्ञानं यस्य तद् बहिःप्रज्ञं जाग्रदवच्छिन्नमपि नेदं ततोऽपि विलक्षणम्। तर्हि द्वयोरन्तरालेन भवितव्यम् ? अत आह - **उभयतः** जाग्रत्स्वप्नयोः प्रज्ञा ज्ञानं यस्य तत् उभयतः प्रज्ञं न नेदं ततोऽपि व्यतिरिक्तम्। तर्हि आनन्दभुजा भवितव्यम् ? अत आह- प्रज्ञानघनं सुषुप्तावस्थं घनप्रज्ञमपि नेदम्। तर्हि मुक्तात्मना भविव्यं नित्यज्ञानवता ? अत आह-न प्रज्ञं प्रज्ञा नित्यमस्त्यस्मिन् इति प्रज्ञं नेदं मुक्तात्मा। तर्हि बद्धेन भवितव्यम् ? अत आह - नाप्रज्ञं, अप्रज्ञा बुद्ध्यभावो नित्यं यस्मिन् तत् अप्रज्ञं संसारसागरसरणशीलं विस्मृतश्रीरामललित लीलम् अप्रज्ञं बद्धजीवजातमपि नेदम्। तर्हि शून्यतेमम् ? इत्यत आह- अस्ति पूर्णं किन्तु **अदृश्यं,** प्राकृतचक्षुषा न दृश्यते। **अव्यवहार्यम्** प्राकृतशरीरेण न व्यवहर्तुं शक्यते, यद्वा वाचा न व्यवहार्यम्। **अग्राह्यम्** प्राकृतहस्ताभ्यां न गृहीतुं शक्यते। **अलक्षणम्** नानुमातुं प्रभूयते। अचिन्त्यम् नैव चेतसा चिन्तनविषयः क्रियते। अत एव **अव्यपदेश्यम्** अतीतनामरूपत्वात् न व्यपदिश्यते। अतः एकः आत्मा परमात्मा इत्येव प्रत्ययो विश्वासः सारः तत्वं यस्य तथाभूतः, तत्। एवं **प्रपञ्चोपशमम्** बाह्य प्रपञ्चानाम् उपशामकम् अत एव **निरुपद्रवम्** अत एव **शान्तं** परमशान्तिमयम्। पुनश्च **शिवम्** सकलकल्याणगुणाकरं, **द्वैतम्** जगति स्वनिर्मितातिरिक्तभावना न विद्यते द्वैतं यस्मिन् तत् अद्वैतं, जगदेव स्वजनितं मन्यमानम्। एवं भूतं विलक्षणं परमात्मानं चतुर्थं चतुर्थचरणं मन्यन्ते। यद्वा दशरथस्य चतुर्थं पुत्रं श्रीरामं मन्यन्ते, स्वीकुर्वन्ति वसिष्ठादयः। स आत्मा परमात्मा। यथा प्राह श्रीमद्रामायणे मन्दोदरी - **व्यक्तमेष महायोगी परमात्मा सनातनः** ॥ (वा.रा. ६-१११-९९)

**स विज्ञेयः विशिष्टाद्वैततरीत्याज्ञातव्यः** ॥श्रीः॥

अथ मात्रापादयोः अभेदं वर्णयति —

**सोऽयमात्माऽयक्षरमोङ्कारोऽधिमात्रं पादा मात्रा**
**मात्राश्च पादा अकार उकारो मकार इति ॥८॥**

अयं आत्मा परमात्मा अध्यक्षरं प्रणवस्य अर्धमात्रायामधितिष्ठति। अकार-उकार-मकार इति ह्रस्व दीर्घ प्लुतमात्राः इमे एव त्रयः पादाः ॥ श्रीः॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ जाग्ररितस्थानं निरूपयति —

**जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्ते-रादिमत्त्वाद्वाप्नोति ह वै सर्वान्कामानादिश्च भवति य एवं वेदा ।।९।।**

अकारः वैश्वानरेणाधिष्ठीयते, य एवं वेद सः सर्वान् कामान् प्राप्नोति ।। श्रीः ।।

अथ द्वितीयं निरूपयति —

**स्वप्नस्थानस्तैजसउकार द्वितीया मात्रोत्कयर्षादुभयत्वाद्वोत्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित्कुले भवति य एवं वेद।।१०।।**

उकारः स्वप्नस्वामी तैजसः, यः एवं वेद स विज्ञानपरम्परां तनोति । तस्य कुले कोऽपि ब्रह्मज्ञानहीनो न भवति ।। श्रीः।।

अथ तृतीयं निरुपयति —

**सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रामितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ।।११।।**

तृतीयः पादः मकारः, स एव प्राज्ञः, सैव तृतीय मात्रा तस्याः मितिः अपीतिश्च नाम । एवं जानन् मिनोति सर्वमनुमानविषयी करोति ।। श्रीः।।

अथ चतुर्थपादं निर्दिशति —

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार आत्मैव संविशत्यात्मनात्मानं य एवं वेद ।।१२।।**

सः अमात्रः मात्राविहीनः, अत एव व्यवहारानर्हः शिवः अद्वैतः स्वसमानप्रतियोगिज्ञानवर्जितः, स एव आत्मा परमात्मा, एवमखण्ड ओङ्कारे अखण्डः परमात्मा श्रीरामः । यः एवं वेद जानाति, स आत्मना स्वेनैव देहेन्द्रियमनोबुद्धि-व्यतिरिक्तेन भगवन्नित्यकिङ्करभूतेन पूतेन प्रत्यगात्मना आत्मानं परमात्मानं संविशति, सामीप्यमुक्त्या तं प्रविशति । द्विरुक्तिः उपनिषत् समाप्तिसूचिका ।।श्रीः।।

**श्रीराघवकृपाभाष्यं माण्डूक्योपनिषत्त्विदम् ।**
**श्रीरामभद्राचार्येण भाषितं रामभक्तये ।।**

**इति श्रीचित्रकूट तुलसीपीठाधीश्वरजगद्गुरुरामानन्दाचार्यस्वामिश्रीरामभद्राचार्यप्रणीतं श्रीराघवकृपाभाष्यं माण्डूक्योपनिषदि सम्पूर्णम् ।।**

**।। श्री राघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

।। श्रीमद्राघवो विजयते।।

।। श्रीमते रामानन्दाचार्याय नमः ।।

# अथ तैत्तिरीयोपनिषदि

# श्रीराघवकृपाभाष्यम्

## प्रथमोऽनुवाकः

### मङ्गाचरणम्

**जनकजापते जह्नुकन्यका जनककार्मुकज्यारवव्रतिन् ।**
**जनकतापहन् जैत्रविक्रम जनकलिं हरे जारय द्रुतम् ।।१।।**

अथ तैत्तिरीयोपनिषत् श्रीराघवकृपाभाष्य नाम्ना विवरणेन विभूष्यते । तत्र प्रथमं शिक्षाध्यायः, प्रथमोऽनुवाकः सशान्तिपाठः —

**ॐ शं नो मित्रः शं वरूणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि । ऋतं वदिष्यामि । सत्यं वदिष्यामि । तन्मामवतु तद्वक्तारमवतु । अवतु माम् । अवतु वक्तारम् । ॐ शान्तिः शान्तिः शान्तिः ।।१।।**

शिक्ष्यते अभ्यस्यते शास्त्रं यया सा शिक्षा तत्सम्बन्धी अध्यायः शिक्षाध्यायः । तत्र प्रथमेऽनुवाके मित्रा वरुणार्यमेन्द्रबृहस्पतिविष्णूनां स्मरणम् । यथा षडमी षडङ्गवेदाध्ययनं निर्विघ्नं कुर्वन्तु । नः अस्मभ्यं मित्रः, वरुणः, अर्यमा पितृदेवता प्रमुखः, इन्द्रो देवराजः, बृहस्पतिर्देवगुरुः, उरुक्रमः उरुघाक्रमः पाद विक्षेपो यस्य स उरुक्रमः विष्णुः वामनावतारो भगवान् उपेन्द्रः, इमे सर्वे शं कल्याणरूपाः भवन्तु । भवतु इति प्रत्येकमन्वेति । ते तुभ्यं ब्राह्मणे नमः । हे वायो ! ते तुभ्यं नमस्काराः, यतो हि त्वं प्रत्यक्षं प्रत्यक्षप्रमाणसिद्धं ब्रह्मासि । त्वां भवन्तमेव प्रत्यक्षं ब्रह्म, त्वा च प्रत्यक्षविषयं वदिष्यामि, निजहृदये स्थिरीकरिष्यामि । ऋतं यथार्थं वदिष्यामि । सत्यं सद्भ्यो हितं वदिष्यामि, व्याहरिष्यामि । माम् अवतु रक्षतु, वक्तारम् उपनिषत् प्रवाचकम् अवतु रक्षतु । दृढीकरणार्थं द्विरुच्चारणम् । त्रिःशान्तिपाठः तापत्रयविनाशाय ।।श्रीः।।

**।। इति शिक्षाध्याये प्रथमोऽनुवाकः ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# अथ द्वितीयोऽनुवाकः

अथ शिक्षा प्रतिपाद्यमाह —

**शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम सन्तानः । इत्युक्तः शीक्षाध्यायः ॥**

**शीक्षां व्याख्यास्यामः** इदं प्रतिज्ञावाक्यम् । तत्र शिक्षायां वर्णाः द्विपञ्चाशत्, स्वराः सप्त, मात्रा तिस्रः बलमुच्चारणसामर्थ्यम् इति शिक्षा संक्षेपः । शीक्षा इत्यत्र तु **अन्येषामपि दृश्यते** इति दीर्घः । वेदोच्चारणे वर्णस्वरमात्राबलानां प्रयोगः ॥श्रीः॥

॥इति द्वितीयोऽनुवाकः॥
॥ श्रीराघवोः शन्तनोतु ॥

# अथ तृतीयोऽनुवाकः

अथ महासंहिताव्याख्यानात् पूर्वं मंगलमाचष्टे —

**सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सँ हिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्योतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासँहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरूत्तररूपम् । वायुः संधानम् । इत्यधिलोकम् ॥१॥**

नौ गुरुशिष्ययोः यशः सह सहैव भवतु । पुनश्च नौ आवयोः ब्रह्मवर्चसं ब्रह्मतेजः सहैव भवतु । अतः एतस्मात् मंगलाशासनादनन्तरं संहितायाः सम्यक् हितं यस्यां तस्याः सन्धिप्रक्रियायाः उपनिषदं रहस्यविद्यां पञ्चसु अधिकरणेषु व्याख्यास्यामः प्रवक्ष्यामः । तत्र अधिलोकादयः पञ्चसंहिता, लोके इत्यधिलोकं विभक्त्यार्थेऽव्ययीभावः । लोकं कथं सन्धिः ? संहितायां त्रयः अवयवाः, पूर्वरूपम् उत्तररूपं द्वयोः संयोजकमुपकरणं तदेव सन्धिः कथ्यते । तत्र पृथिवीदिवोः संहितायां पूर्वरूपं पृथिवी, उत्तरं द्यौः स्वर्गः, द्वयोः संयोजकमाकाश एव सन्धिः । सन्धीयेते संयोज्येते पूर्वोत्तररूपे येन स सन्धिः । वायुः सन्धानं प्रेरकम् ॥श्रीः॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ अधिज्यौतिषाधिविद्याधिप्रजाध्यात्मानां संहितात्वं वर्णयति —

अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः सन्धि। वैद्युतः सन्धानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् । अन्तेवास्युत्तररूपम् । विद्या सन्धिः । प्रवचनँ् सन्धानम् । इत्यधिविद्यम् ।।२।।

अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजासन्धिः ।

प्रजननँ् सन्धानम् । इत्यधिप्रजम् ।।३।।

अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक्सन्धिः । जिह्वा सन्धानम् । इत्यध्यात्मम् । इतीमा महासँ्हिता य एवमेता महासँ्हिता व्याख्याता वेद । सन्धीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्गेण लोकेन

अग्निर्ज्ञेयं पूर्वरूपमुत्तरं रविरुच्यते ।
वायुः सन्धिश्च सन्धानं तडिदित्यधिज्यौतिषम् ।।

आचार्यः स्यात् पूर्वरूपमुत्तरं शिष्य उच्यते ।
विद्यासन्धिश्च सन्धानमधिविद्यं प्रवाचनम् ।।

माता ज्ञेयं पूर्वरूपं पितारूपं तथोत्तरम् ।
प्रजासन्धिः प्रजननं सन्धानमित्यधिप्रजम् ।।

अधरा हनुः पूर्वरूपमुत्तराहनुरुत्तरम् ।
जिह्वासन्धिश्च सन्धानं वागित्यध्यात्ममुच्यते ।।

संहिता पञ्चकं या वै वेत्ति ब्रह्मविचारवित् ।
सन्धीयेते उभौ लोकौ स्यनैवात्र संशयः ।।श्रीः।।

।।इति तृतीयोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथ चतुर्थोऽनुवाकः ।।

अथ चतुर्थानुवाके ऋषिर्ब्रह्मयज्ञसमृद्धये परमेश्वरं प्रार्थयते —

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देवधारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ।।१।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र प्रथमं मेधाकामस्य मेधा प्राप्तये केचन जपार्थं मन्त्रविशेषाः । अत्र भगवद् वाचकस्य ओङ्कारस्य प्रथमं स्तवनम् । यः छन्दसामृषभः श्रेष्ठः छन्दोभ्यः प्रथमम् अधिअमृतात् अमृतरूपात् परमात्मनः ब्रह्ममुखं निमित्तीकृत्य संबभूव । यथा पौराणिकाः आमनन्ति —

**ओङ्कारश्चाथ शब्दश्च द्वावेतौ ब्रह्मणः पुरा ।**
**कण्ठं भित्वा बहिर्यातौ तस्मान्माङ्गलिकावुभौ ।।**

एवं यः विश्वरूपः सर्वरूपः, स इन्द्रःमन्त्रराजैश्वर्यपूर्णः मा मां मेधया आशुग्रहणशक्त्याा स्पृणोतु प्रीणयतु । मा- इन्द्रो इति पदच्छेदः । हे देव ! अहं अमृतस्य ब्रह्मानन्दस्य धारणः धारयिता भूयासम् । मे मम शरीरं विचर्षणं विष्णुं चरति गच्छति इति विचर्षणम् । मे मम जिह्वा मधुमत्तमा अतिशयेन मधुमती मधुरभाषिणी । तथा च अहं कर्णाभ्यां भूरि अधिकं विश्रुवं विश्रुयासम् । अत्र व्यत्ययात् यासुडभावः, बङादेशश्च । हे ओङ्कार ! त्वं ब्रह्मज्ञानधारणशक्त्या पिहितः, ब्रह्मणः वेदात्मकस्य परमात्मनः, परमात्मकस्य वा वेदस्य कोशः भाण्डागारम् असि । अतः हे प्रणवरूप-पमात्मन् ! मे मम श्रुतं शास्त्रं वेदान्तश्रवणं च गोपाय रक्ष, इति जपमन्त्राः ।।श्रीः।।

अथ श्रीकामस्य होममन्त्रः निर्दिश्यते —

**"कुर्वाणा चीरमात्मनः । वासाँसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आमायन्तु ब्रह्मचारिणः स्वाहा । विमायन्तु ब्रह्मचारिणः स्वाहा । प्रमायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा ।।२।।**

कुर्वाणा, अचीरम् आत्मन इति पदच्छेदः । मेधा प्राप्त्यन्तरं श्रीरपेक्षते, पूर्व तत्स्वरूपं वर्णयति । अचीरम् अचिरम् **अन्येषामपि दृश्यते** इत्यनेनदीर्घ ! । अतिशीघ्रम् आत्मनः मम आराधकस्य वासांसि वस्त्राणि आवहन्ती आनयन्ती "शतृप्रत्यान्तमेतत्, सर्वदा मम गावः 'व्यत्पयात्' जसन्तं, गाः इत्यर्थः । धेनु वितन्वाना विस्तारयन्ती । तथा अन्नपाने भोजनजले कुर्वाणा उत्पादयन्ती । एवं भूता या श्रीः तां मे श्रियं लोमशां लोमयुक्तानां समूहैः मेषादिभिः पुशुभिः अश्वादिभिः सह आवह आनय । इति मन्त्रं जपन् स्वाहा उच्चार्य हवनं कुर्यात् । एवं मेधाश्री प्राप्त्यनन्तरं विद्यार्थ्यागमनं प्रार्थयते । हे भगवान् ! मा मां समस्ताभ्यो दिग्भ्यो ब्रह्मचारिणः आयान्तु । एवं मां वि विशिष्टाः विद्याव्यसनिनः ब्रह्मचारिणः आयान्तु । एवं प्रकृष्टाः ब्रह्मचारिणः मामायान्तु । ते दमायन्तु दमशीलाः भवन्तु, शमायन्तु शमशीलाश्च भवन्तु । इति होम प्रकारः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनश्च श्री प्राप्तिरिशिष्टां यशोधनादिप्राप्तिं प्रार्थयते—

**यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन् सहस्रशाखे निभगाहं त्वयि मृजे स्वाहा । यथापः प्रवता यन्ति यथा मासा अहर्जरम् । एवं मा ब्रह्मचारिणो धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्र मा पाहि प्र मा पद्यस्व ।।३।।**

अत्र यशःशब्दः यशस्विपरः, जनशब्दश्च लोकवाची । हे भगवान् । त्वत्कृपया अहं जने लोके यशः यशस्वि असानि भवानि । वसीयसः धनवतः श्रेयान् प्रशस्यतरो भवानि । अत्र वसीयस : इत्यस्य वस्यसः इति रूपम् । व्यत्ययात् ईकारस्य लोपः । हे भग । भगानि सन्त्यस्मिन् इति भगः तत्सद्धौ हे भग । हे पूजनीय । तं त्वा प्रविशानि, अत्र इच्छार्थे लोट् स च प्रार्थनारूपः । एवं भूतः परम पूजनीयस्त्वं मा मां प्रविश प्रविष्टो भव, यथा आवयोस्तादात्म्यं स्यात् । एवं भूते सहस्रशाखे अनेकशाखामये वैदिकवाङ्मयमूलभूते तत्र भवति अहं निमृजे निकृष्टानि पातकानि शोधयामि । हे धातः ! निखिलजगद्धारणकर्तः । यथा प्रवता निम्नपथाः आपः जलानि आयान्ति यथा च अहानि जरयतीति अहर्जरः दिवस समावेशकर्ता संवत्सरः **संवत्सरोऽहर्जरो शरंद्वर्षमथापि वा** इति कोशात् । तम् अहर्जरं संवत्सरं, यथा मासाः चैत्रादयः आयान्ति, एवं सर्वतः सर्वदिग्भ्यः मां ब्रह्मचारिणः आयान्तु, आगच्छन्तु । हे प्रणवात्मक परमात्मन् ! त्वं प्रतिवेशोऽसि संसारयात्राविश्रामस्थानमसि । मां प्रभाहि प्रकाशय, मां प्रपद्यस्व सेवकत्वेन स्वीकुरु ।।श्रीः।।

**।। इति चतुर्थोऽनुवाकः ।।**

**।। श्रीराघवोः शन्तनोतु ।।**

## ।। अथ पञ्चमोऽनुवाकः ।।

इदानीं गायत्र्याः व्याहृतयः विचार्यन्ते, तत्र चतुर्थी मह इति व्याहृतिः सविशेषं व्याख्यायते—

**भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः । तासामु ह स्मैतां चतुर्थीं महाचमस्यः प्रवेदयते मह इति । तद्ब्रह्म । स आत्मा । अङ्गान्यन्या देवताः । भूरिति वा अयं लोकः । भुव इत्यन्तरिक्षम् । सुवरित्यसौ लोकः ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मह इत्यादित्यः । आदित्येन वाव सर्वे लोका महीयन्ते । भूरिति वा आग्निः । भुव इति वायुः । सुवरित्यादित्यः । मह इति चन्द्रमाः । चन्द्रमसा वाव सर्वाणि ज्योतीँषि महीयन्ते । भूरिति वा ऋचः । भुव इति सामानि सुवरिति यजूँषि ।।२।।**

**मह इति ब्रह्म । ब्रह्मणा वाव सर्वे वेदा महीयन्ते । भूरिति वै प्राणः । भुव इत्यपानः । सुवरिति व्यानः । मह इत्यन्नम् । अन्नेन वाव सर्वे प्राणा महीयन्ते । ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः । ता यो वेद । स वेद ब्रह्म । सर्वेऽस्मै देवा बलिभावहन्ति ।।३।।**

भूर्भुवः स्वः इति तिस्रो व्याहृतयः प्रसिद्धाः । तत्र चतुर्थीं महः इति व्याहृतिं माहाचमस्यः ऋषिः प्रवेदयते साक्षात् कुरुते । तिसृषु व्याहृतिषु लोकाः त्रयः अग्निवाय्ववादित्याः ज्योतींषि, एवं ऋग्यजुःसामानि प्राणापानव्याना इति चत्वारि त्रिकाणि यथाक्रमं विराजन्ते । एवं महोव्याहृतौ आदित्यः चन्द्रमा, ब्रह्म, अन्नम् इति चतुष्कं विराजते । एवं चतुश्चतुष्कमण्डिताः चतस्रो व्याहृतयो यो वेद जानति, स एव ब्रह्म वेद, इत्यनुवाकार्थः ।।श्रीः।।

।। इति पञ्चमोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथ षष्ठोऽनुवाकः ।।

अथ प्राचीनयोग्याचार्यो ब्रह्मोपासनां निर्दिशति—

**स य एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषो मनोमयः । अमृतो हिरण्मयः । अन्तरेण तालुके । य एष स्तन इवावलम्बते । सेन्द्रयोनिः । यत्रासौ केशान्तो विवर्तते । व्यपोह्य शीर्षकपाले । भूरित्यग्नौ प्रतितिष्ठिति । भुव इति वायौ ।।१।।**

**सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्ति समृद्धममृतम् । इति प्राचीनयोग्योपास्स्व ।।२।।**

अन्तर्हृदये योऽवकाशात्मक आकाशः तस्मिन् अयं हिरण्मयः कनकसदृशपीताम्बरधारी ज्योतिर्मयो वा,. तत्र तालुत्यक्त्वा यः लम्बमानोऽस्थि विशेषः तमभिव्याप्य मनोमयः, मन इव सूक्ष्मः दशाङ्गुलपरिमाणः विराजते । स च चतुर्व्याहृतिदेवतासु अग्निवाय्वादित्यब्रह्मसु प्रतिष्ठितः । इमं यः जानाति सः स्वाराज्यं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्वातन्त्र्यं प्राप्नोति । हे प्राचीनयोग्य । ब्रह्म कदापि निराकारं न भवति । इत्येव वर्णयितुं पञ्चभिः विशेषणैः यथाक्रमं परव्यूहविभवान्तर्याम्यर्चावतारं ब्रह्म विशिनष्टि । आकाशमिव नीलं, व्यापकं, निर्लेपं, सावकाशं, कृपाकादम्बिनीवर्षुकं शरीरं श्रीविग्रहो यस्य इति परम् । **सत्यात्मक प्राणारामं** सत्यं च आत्मा च प्राणश्च तेषामारामो यस्मिन् तथाभूतम् । यद् वा सत्यमात्मा आत्मवत् प्रियः येषां ते सत्यात्मानः तेषां प्राणाः आरमन्ति यस्मिन् तत् सत्यात्मप्राणारामम् , इदं व्यूहात्मकंतस्मिन्नेव वासुदेवसङ्कर्षण-प्रद्युम्नानिरूद्धाभिधेये तस्यात्मनां श्रीवैष्णवानां प्राणाः रमन्ते । **मनआनन्दम्** मनःसु आनन्दो येन तथाविधम् इदं विभवात्मकं श्रीरामकृष्णादिरूपम् । तत्रैव श्रीवैष्णवभक्तानां मानसानन्ददर्शनात् । **शान्तिसमृद्धम्** अन्तर्यामिरूपं, प्रतिहृदयं ताटस्थ्येन शान्त्या विराजमात्वात् । **अमृतम्** मरणधर्मभिन्नम् आकल्पं शालग्रामादौ विराजमानत्वात् । विशेषविग्रहेषु लोकोत्तरचमत्कारदर्शनाच्च । यथा श्रीगिरिधरगोपालविग्रहस्य मीराविष सामर्थ्यापहरणगाथायाः प्रत्यक्षदर्शनं सत्येन प्रमाणितम् , इत्येव अर्चावतारस्य अमृतत्वं यन्मीरया निवेदितं विषमपि कृतममृतं तेन । अथेदं श्रीमकथाफलकेऽपि । **आकाश शरीरम्** श्रीरामश्याममर्तिः अहल्योद्धारप्रसंगे । तत् कृपाकादम्बिनीवर्षणदर्शनात् । **सत्यात्मप्राणारामता** श्रीदशरथप्रसंगे सत्यात्मा दशरथः तस्य प्राणाः श्रीराम एव रमन्ते ।

**चित्रकूटं गते रामे पुत्रशोकातुरस्तदा ।**
**राजादशरथः स्वर्गं जगाम विलपन् सुतम् ।।**

वा०रा० १/१/३२,३३

**मन आनन्दता** अरण्ये मुनीनाम् । **शान्ति समृद्धिः** विभीषणशरणागतौ **अमृतत्वम्** लंकासमरभूमौ वानराणामुज्जीवने । एवं भूतं ब्रह्म श्रीराममुपास्स्व भजस्व । एवं श्रीराघवकृपालब्धमञ्जुलमनीषेण मया श्रुतिरियं सर्वतो नवीनदृष्ट्या व्याख्याता ।।श्रीः।।

।। इति षष्ठोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथ सप्तमोऽनुवाकः ।।

अथ पाङ्क्तं निर्दिशति—

**पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशः । अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणि । आप ओषधयो । वनस्पतय आकाश आत्मा । इत्याधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः चक्षुः श्रोतं मनो वाक् त्वक् । चर्म माँ्स ँ् स्नावास्थि मज्जा । एतधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इद ँ् सर्वम् । पाङ्क्तेनैव पाङ्क्त ँ् स्पृणोतीति ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पाङ्क्तं नाम पञ्चानां समूहः तत्र भूतेषु त्रीणि पाङ्क्तानि, भूम्याकाशस्वर्गदिशान्तरदिशानां प्रथमं पाङ्क्तं, द्वितीयमग्निवायुसूर्यचन्द्रतारकानाम् आत्मा अहङ्कार । जीवात्मा वा । एवं जलौषधि वनस्पति गगनजीवात्मानां तृतीयं पाङ्क्तम् । इदानीमध्यात्मं निरूपयति—

आत्मनि अधि अध्यात्मं, तत्र प्राणव्यानापानोदानसमानानां प्रथमम् । नेत्र श्रवणमनोवाणीत्वचां द्वितीयम् । चर्ममांसस्नावास्थिमज्जानां तृतीयम् । एवं षट् पाङ्क्तानि विभाव्य यत् सर्वं पाङ्क्तं पञ्चसमूहम् ।।श्रीः।।

।। इति सप्तमोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथाष्टमोऽनुवाकः।।

अथाष्टमेऽनुवाके ओङ्कारमहिमानं गायति—

**ओमिति ब्रह्म । ओमितीद ँ्सर्वम् । ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति । ओमिति साभानि गायन्ति । ओ ँ्शोमिति शास्त्राणि श ँ्सन्ति । ओमितध्वर्युः प्रतिगरं प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ।।१।।**

**ओम् श्रावयन्ति ह्योङ्कारं साम गायन्ति सामगाः ।**
**ओं शों शस्त्राणि शंसन्ति ओमध्वर्युर्गृणाति च ।।**
**ओमिति ब्रह्मा प्रस्तौति अग्निहोत्रं मुदा द्विजः ।**
**ओमित्येवानुजानाति ओमित्युच्चारयन् द्विजः ।।**
**ब्रवीति ब्रह्म सामीप्यात् ब्रह्माहं प्राप्नवानि वै ।**
**तस्मादोङ्काररूपेण व्याप्तमेतज्जगत् त्रायम् ।।श्रीः।।**

।। इति अष्टमोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथ नवमोऽनुवाकः ।।

अथ ॠतादिभिः सह स्वाध्यायप्रवचनयोः अनिवार्यतां वर्णयति । ॠतादयो भवन्त्वेकैकशः, किन्तु स्वाध्यायप्रवचने प्रत्येकं सर्वैः सह इति विवेकः—

**ॠतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । तपश्च स्वाध्यायप्रवचने च । दमश्च स्वाध्यायप्रवचने च ।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शमश्च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । अतिथयश्च स्वाध्यायप्रवचने च । मानुषं च स्वाध्यायप्रवचने च । प्रजा च स्वाध्यायप्रवचने च । प्रजनश्च स्वाध्याय प्रवचने च । प्रजातिश्च स्वाध्यायप्रवचने च । सत्यमिति सत्यवचा राथीतरः । तप इति तपोनित्यः पौरूषिष्टिः । स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः । तद्धि तपस्तद्धि तपः ।।१।।**

ऋतं यथार्थभाषणम्, सत्यम् यथार्थाचरणम्, स्वाध्याय, स्वशाखाप्राप्तवेदपाठः, प्रवचनं वेदाध्यापनम् सत्यम् अनिवार्यतया सत्यभाषणम् इति राथीतरः महर्षिराह । तप एव करणीयम् इति पौरूशिष्टिराह । नाको मौद्गल्यः स्वाध्यायप्रवचनं विधेयतया प्राह । यतो हि तदेव तपः ।।श्रीः।।

।। इति नवमोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथ दशमोऽनुवाकः ।।

मन्त्रोऽयं स्वाध्यायार्थं प्रयुज्यते—

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविण ँ सवर्चसम् । सुमेधा अमृतोक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ।।१।।**

रीयते प्रेरयति इति रेरिवा, अहं स्वाध्यायशीलः वृक्षस्य क्षणभङ्गुरस्य शरीरस्य रेरिवा अन्तर्यामी । तथा हि गिरेः पर्वतस्य पृष्ठं शिखरमिव या कीर्तिः साप्यहम् । वाजमन्नं तद्वति वाजिनि सूर्ये इव अहम् ऊर्ध्वपवित्रः । एवंभूतं तेजोयुक्तम् अमृतम् अहमस्मि । द्रविणं धनम् , एवमृतं मरणधर्मवर्जितमिदं सर्वमहमस्मि । इदमेव वेदानुवचनं त्रिशङ्कोः ।।श्रीः।।

।। इति शमोऽनुवाकः ।।

।। श्रीराघवोः शन्तनोतु ।।

## ।। अथ एकादशोऽनुवाकः ।।

अथ समावर्तनं श्रावयति श्रुतिः—

**वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्नप्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ऋष्यते इत्यर्णं शरणम्—

**अरणं शरणं वासो निवासः सद्म मन्दिरम् ।**
**निकेतमालयो धाम भवनं वेश्म च गृहम् ।।**

इति कोषात् ।

अरणे, त्यक्तगृहाणामपि निःस्पृहाणां भगवदात्मनां विमलात्मनां महात्मनां शरणे साधु यत्तदरण्यं वनम्, तस्मिन्नुपदिष्टमारण्यकम्, बृहच्च तदारण्यकञ्चेति बृहदारण्यकम् । उप निषीदति उपश्लिष्य पतिं परमात्मानं निश्चयेन तिष्ठति परमान्तरङ्गप्रियतमेव या सा उपनिषद्, साक्षाद्भगवत्तत्त्वप्रतिपादनपरा भूतार्थवादिनी परमेश्वरपरमान्तरङ्गा सततसन्निहिताध्यात्मज्ञानवैराग्यभावितभगवद्भक्तिगङ्गा भग्नदुःखसङ्गा सततसलग्नसत्सङ्गा विहितभूरिभवभयभङ्गा भगवती श्रुतिततिः उपनिषादयति परमेश्वरं मनोमन्दिरे प्रतिष्ठापयति या सोपनिषत् । उपनिषीदन्ति हीनतया निकृताः विशीर्यन्ते भगवद्भक्तिप्रतिबन्धकप्रबलप्रत्यवायनिकायाः यया सोपनिषद्, उपनिषाद्यन्ते अवसाद्यन्ते मननमात्रेण मनोविकाराः यया सोपनिषद् । ब्रह्मविद्यारहस्यरसमयी श्रुत्यवलिः बृहदारण्यकमेवोपनिषदिति बृहदारण्यकोपनिषद् ।

अस्याः श्रीसीतारामकृपाप्रसादसमवगतयथार्थसिद्धान्तबोधं समुपनिविष्टपदच्छेदान्वयसमासविग्रहपदार्थबोधं दुरवबोधमपि सुबोधं सुधियां तदनुरुपोदाहरणव्युत्पत्यूपपत्तिशब्दार्थसंस्करणं श्रीराघवकृपाभाष्यं नाम विवरणं नातिविस्तारसंक्षेपं विदूरीकृतनिखिलभगवद्भजनविक्षेपं निचितनिखिलरघुपतिपदपद्मनिक्षेपं सावधानं सादरमातनोमि । तत्र प्रथमं शान्तिपाठः । ओमिति सगुणनिर्गुणात्मकस्य साकारस्य निराकृतेः भगवतः परब्रह्मश्रीरामस्य ऊनविंशतिधात्वर्थवाच्यभक्तोपयोगिदिव्यगुणगणस्मरणोद्दीपकं नाम वैदिकं विस्तरेण ईशोपनिषदि व्याख्यातम्–

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।**
**पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।**

**ॐ शान्ति ! ॐ शान्ति !! ॐ शान्ति !!!**

अदः पूर्णं इदम् पूर्णम्, पूर्णात् पूर्णम् उदच्यते, पूर्णस्य पूर्णम् आदाय पूर्णम् एव अवशिष्यते । सगुणनिर्गुणपक्षव्याख्यानं तु ईशावस्योपनिषदि कृतं तत् संक्षेपेणाभ्यस्य पुनरपरदृशा व्याख्यायते । तथा चाभ्यासः–अदः निर्लीनगुणकतया, अवाङ्मनसगोचरत्वेन विप्रकृष्टं निर्गुणं ब्रह्म, पूर्णं सकलाभाववर्जितम्, इदं भक्तप्रेमवशंवदतया निजजननयनपथपान्थं निरस्तमायं सततसन्निहितकल्याणगुणगणनिकायं सगुणं ब्रह्म अतिसन्निकृष्टं पूर्णं पूर्णकामं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सत् समग्रैश्वर्यसम्पन्नम् अमुष्मात् पूर्णात् निर्गुणब्रह्मणा अपेक्षया पूर्णं सगुणं ब्रह्म, उत् उत्कर्षेण समधिकतरम् अच्यते पूज्यते प्रणतदुरितविनाशक्षमत्वेन करुणासागरत्वेन च महीयते, तदपेक्षया समधिकतरम् । पूर्णस्य तस्य सगुणब्रह्मणः सम्बन्धिभूतं पूर्णं कृपाप्रसादमादाय जीवजातमपि पूर्णं पूर्णमनोरथकमेव नाल्पकायमवशिष्यते, प्रलयेऽपि महाकालतोऽपि विनाशासम्भवात् । अवशिष्यते अवशिष्टमेव समक्षतः भगवत् कैङ्कर्योचितशरीरं तिष्ठति इति हार्दम् ।

अथापरं व्याख्यानम्— भगवतो हि परिस्थितिद्वयं विभावयन्ति भक्ताः, प्रथमा अवतारिरुपा द्वितीया चावताररुपा, समानत्वेऽपि द्वयोः परिस्थित्योः माधुर्यविशेषतारतम्येन किमपि वैलक्षण्यं लक्षयन्ति लक्षणविदः। प्रथमायां परिस्थितौ सूर्यचन्द्रनक्षत्रविद्युदाग्नीनामपि प्रकाशके **न तत्र सूर्योभाति न चन्द्रतारकम् नेमा विद्युतो भान्ति कुतोऽयम् अग्नि** (क० उ० १-३-११)

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ।।**

(गीता १५-६ इति स्मृतेः)

स्वत एव प्रकाशमाने विशोके श्रीसाकेतलोके श्रीसीतासमनुलालितचरणारविन्दयुगलः भरतादिभिः सततमनुवीक्षितमुखकमलः हनुमत्सुग्रीवविभीषणजाम्बवत्प्रभृतिपरमपावननित्य परिकरपरिचर्यमाणमनोजमोहनमधुरमानवाकृतिः सकृतसंस्मरणमात्रेणैव सकलकलिकलुष-कल्मषकलङ्कपङ्कनितान्तनिराकृतिर्नराकृतिः सीतासमालङ्कृतवामभागो निजभक्त-रञ्जनशीलनिष्कारण करुणानुरागो गोपतिरिव गमस्तिभिर्भासमानः स्वतेजसा तूर्णधनुर्वाणादि-वीरवेशेपलक्षितः विशदविरुदवर्णनविदग्धवेदवन्दिवर्यवीक्षितः सिद्धचारणगन्धर्वयक्षसुर-नरकिन्नरयोगीन्द्रमुनीन्द्रपरमहंसपरिव्राजकाचार्यमाहात्मविमलात्मनारदादिसनकादिसमीक्षितः नित्यकिशोरवयसा निरस्तदूषणो वृन्दारकवृन्दभूषणो भूषणभूषणः कनकसिंहासनमध्यवर्ती निजभक्तभावानुवर्ती मैथिलीमुखचन्द्रचकोरचारुचक्षुः प्रवर्ती सकलसुभगचक्रवर्ती समधिश्रितवीरासनो व्रीडितपाकशासनः सकलकल्याणगुणगणनिलयो ब्रह्माविष्णु-रूद्रादिनियन्ता सर्वावतारी श्रीसाकेतविहारी हरिः षडैश्वर्यसम्पन्नो भगवान् परब्रह्मपरमेश्वरः सीतावरः सर्वेश्वरः विचकास्ति ।

द्वितीयायाञ्च परिस्थितौ वैदिकधर्मसंस्थापनाय भूरिभूभारजिहीर्षया ललित-लीलाचिकीर्षया समुद्दिधीर्षया च खगमृगव्याधजडयवनविटपमर्कटभल्लूककौणप-सदृशकोटिकोटिपतितपुङ्गवगोब्राह्मणहितकामो निखिलभुवनविश्रामो लोकलोचनाभिरामो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रामो भगवान् निजाह्लादिनीशक्त्या भग्नविभक्त्या भक्त्या सीतया सह समवतरति भारतभुवि, अयमेव अवतारः । अवतारावतारिणोरयमेव भेदो यद्येकः साकेते तदपरः कोसलराजनिकेते । ननु किं मानमत्रावतारे ? इति चेत् —

**चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ ।**
**रघोःकुलेऽखिलं राति राजते यो महीं स्थित !**

(रा० कु० उ० २)

इति श्रुतिरेव प्रमाणम् । **स उ श्रेयान् भवति जायमानः** इति ऋक्श्रुतिरपि । एवं अदः साकेतविहारि रूपं ब्रह्म ऐश्वर्यातिशयेन विप्रकृष्टं पूर्णं परिपूर्णतमम् । तथैव इदम् अतिसन्निकृष्टं माधुर्यविशेषविश्रम्भं सत्यसङ्कल्पारम्भं निरस्तसीताविप्रलम्भं सगुणसाकारम् अतिसिकुसुमसुकुमारं कोसलसुताकुमाराख्यं ब्रह्म इदं नयनगोचरत्वादतिसन्निकृष्टम् । इम् कामं द्यति इति इदं पूर्णम् परिपूर्णतमम् । द्वयोर्मध्ये कतरत् सेव्यमित्यताह-पूर्णात् साकेतविहारिणः परब्रह्मणः पूर्णं कोसलाधीशपुत्राख्यम् इदं गृहीतावतारं ब्रह्म उदच्यते समधिकतरं पूज्यते । ननु द्वयोरैश्वर्ये किं तारतम्यमित्यत् आह – पूर्णस्य साकेतविहारिणोऽवतारिणः परब्रह्मणः पूर्णस्य पूर्णं परिपूर्णतमं षडैश्वर्यसमूहम् आसाद्य प्राप्य इदं सगुणं ब्रह्म पूर्णं पूरितभक्तमनोरथं परिपूर्णतममेव अवशिष्यते । भक्तान् शिष्यते प्रलयेऽपि न नश्यति इति भावः । ॐ शान्तिः ! शान्तिः !! शान्तिः !!! त्रिरूक्तिः त्रिविधतापसमाप्तये ।

ननु भगवदवतारे किमपि मन्त्रवर्णमपि मानम् ? इति चेच्छृणु–यजुः श्रुतिरेव । तथा हि –

**ॐ प्रजापतिश्चरतिगर्भेऽन्तरजायमानोबहुधाव्विजायते**
**तस्य योनिं परिपश्यन्ति धीरास्तस्मिहतस्थुर्भुवनानिविश्वा ।**

(शु० प० ३१-)

अस्यार्थः–प्रजापतिः प्रजानां प्राणिनां पतिः रक्षकः परमात्मा अजायमानः प्राकृतिशिशुरिव योनिद्वारेण नजन्मगृहणन् गर्भे अन्तः श्रीरामश्यामरूपेण कौसल्यादेवक्योः अन्तर्जठरे चरति अर्भकीभूय विचरति । अजायमानः कर्मविपाकवशादप्रादुर्भवन्नपि बहुधा विजायते कौसल्यादेः प्रार्थनया श्रीरामादिरूपेण विजायते विशिष्टगुणगणसम्पन्नं यथा स्यात्तथा जायते, जन्मगृहणाति । तस्य परमात्मनः योनिं जन्मरहस्यं धीराः वाल्मीकिवशिष्ठादयः परिपश्यन्ति परिस्कृतज्ञानचक्षुषा विलोकयन्ति । तस्मिन् परमात्मनि विश्वा विश्वशब्दाज्जसि **सुपां सुलुक्** पा० अ० ३-१-३९ इत्यनेन पूर्वसवर्णदीर्घः । विश्वानीति भावः । विश्वा भुवनानि भूरादीनि चतुर्दशभुवनानि । तथोक्तं मानसे—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दिखरावा मातहिं निज अद्‌भुत रूप अखण्ड ।**
**रोम रोम प्रतिलागे कोटि कोटि ब्रह्माण्ड ।।**

(मा० १-२०१)

**मातरं दर्शयामास ह्यखण्डं रूपमद्भुतम् ।**
**यत् प्रतिरोम राजन्ते ब्रह्माण्डकोटिकोटयः ।।**

समस्तानि वा ब्रह्माण्डानि, ह निश्चयेन तस्युः ! परोक्षेलिट् । कदा प्रभृति ब्रह्माण्डानि तस्मिन् भगवति स्थितानीति वयमपि न विद्म इति सर्वज्ञश्रुतयः स्वज्ञानासामर्थ्यद्योतनाय परोक्षेलिट्‌लकारप्रयोगेण समसूसुचन् ।

एवम् स्मृतावपि—

**अजोऽपि सन्नव्ययात्मा, भूतानामीश्वरोऽपि सन् ।**
**प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।।**

(गीता ४-६)

एवम् श्रुतिस्मृतिपुराणेतिहाससिद्धं गृहीतावतारं सगुणं ब्रह्म, पूर्णस्य अवतारिणः साकेतविहारिणः पूर्णमैश्वर्यमादाय अवतारावतारिणोर्भेदं निरस्यत् एकमात्रं रामाभिधानं ब्रह्म पूर्णं सकलकलासम्पूर्णम् अवशिष्यते अवयवयुक्तं शिष्यते, वर्जितदेहपातं विराजते । यथोक्तं वाल्मीकिना—

**नावज्ञेयश्च भूतानां न च कालवशानुगः ।**

(वा० रा० २-१-३७)

न च सावयवमनित्यं कार्यत्वाद् घटवद्, इत्यनुमानात् सावयवे भगवत्यनित्यत्त्वापत्तिः ? नायं दोषः ईश्वरादन्यत्र अस्यानुमानस्य प्रसरात् । प्रमाणं चात्र **आकाश शरीरं ब्रह्म** (तै० त० उ० १-५) **सर्वतः पाणि पादं तत्** (श्वे० उ० ४-१४)

इत्यादिश्रुतिसमूह एव, भगवच्छरीरप्रतिपादकः । न खल्वावाङ्मनसगोचरे परमेश्वरे अनुमानप्रसक्तिः । तन्मूलकप्रत्यक्षस्यैव तत्र प्रसक्तिसम्भवात् । न खलु श्रुतिविहितार्थेषु तर्कः प्रसरति । यथा—वमनमभक्ष्यं वान्तित्वात् इत्यनुमानम् **मधुवाता ऋतायते मधुक्षरन्ति सिन्धवः** इति श्रुत्या प्रमाणितविशुद्धौ मधुनि अभक्ष्यत्वसाधकमनुमानं न प्रसरेत् । एतस्येव भगवतः स्मरणमूलकोऽयं शान्तिपाठः ।

**।। श्री राघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# ।। अथ प्रथमोऽध्यायः ।।

## ।। प्रथमो ब्राह्मणम् ।।

अथ कर्मकाण्डनिबन्धम् अश्वमेधीयाश्वस्तुतिपरकप्रकरणं प्रारभ्यते । ननु ब्रह्मविद्या-प्रधानायामस्यामुपनिषदि किमर्थमेतत् कर्मकाण्डप्रघट्टकम् ? सत्यं पृष्टं पुनरिदं विचारणीयं यत् किं कर्मकाण्डं ब्रह्मज्ञानविरोधि ? चेत् तथा तर्हि नानेन वेदेषु भवितव्यम्, यदि चेत् न विरोधि तर्हि ज्ञानेन सह कर्मणां कथं समुच्चयः । न हि अन्धकारेण सह प्रकाशस्य साहचर्यं परस्परविरोधित्वात् ? इति चेन्न, वेदेषूपासनाज्ञानकाण्डमन्त्रापेक्षया कर्मकाण्डमन्त्राणां भूयिष्ठत्वात्, वेदविहितत्वाच्च नानुपादेयतैषां ब्रह्मविद्याप्रकरणे । तथा चश्रुतिः **तमेतं ब्राह्मणा व्रतेन तपसानाशकेन विविदिषन्ति वेदानुवचनेन** इति । अत्र तपसा कर्माङ्गभूतेन व्रतेन वेदानुवचनेन ज्ञानसाधेन अनाशकेन उपासनाङ्गभूतेन ब्राह्मणाः अष्मदादयः वेदमधीयानाः जानन्तश्च वेदार्थम्, तपःश्रुतियोनिसमपन्नाः, विविदिष्यन्ति ज्ञातुमिच्छन्ति । तात्पर्यमेतत्-यदुपासने ज्ञाने इव कर्मापि भगवद् विविदिषायां हेतुः । न खल्वकृतश्रुतिविहितकर्मा क्षणमपि परमात्मज्ञानविषयिणीमिच्छामावहति । वस्तुतस्तु कर्मणा भजनप्रतिबन्धकमनोमलानि निरस्य नारदसूत्रोक्तप्रेम-प्रणतैकलक्षणपरमभक्त्या विक्षेपं भगवत्पादपद्मयोर्निक्षिप्य, एवं सेव्यसेवकभाव-सम्बन्धसारज्ञानेन भग्नभगवदनैश्वर्यज्ञानः निरावरणः सन् परमात्मानं जानाति । तस्मात् कर्मकाण्डमावश्यकमिति विरम्यते ।

**ॐ उषा वा अश्वस्य मेध्यस्य शिरः । सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यं दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । उवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन्पूर्वार्धो निम्लोचञ्जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ।।१।।**

अथ अश्वमेधीयः अश्वः प्रजापतिः, तस्याङ्गेषु उषा आरभ्य वाक् पर्ययानां दिव्यानां वस्तुनामवधारणा । ॐ इति मन्त्रप्रारम्भमङ्गलाचरणम् । मेध्यस्य मेधार्हस्य पवित्रस्य अश्वस्य अश्वमेधीयहयस्य उषा ब्रह्ममूहुर्तं ब्राह्ममुहूर्तं, सूर्योदयात् प्राक्कालः शिरः मस्तकं पावनत्वान् मुख्यत्वाच्च, वा इति निश्चयार्थो निपातः । सूर्यः उषःषश्चाद् भावित्वात् अस्याश्वस्य चक्षुः सर्वेषां चक्षुरग्रवर्तित्वात् तैजसत्वात् **तच्चक्षुर्देवहितमिति**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रुत्यन्तरात् । चक्षुषोर्दैवतत्वाच्च सूर्यस्य चक्षुष्ट्वं सङ्गतमेव। वातः वायुः प्राणः अस्याश्वस्य नासिकानिर्गमनप्रवेशनो वायुस्तन्मयत्वात् । वैश्वानरशब्दः अग्निविशेषणं, स च इतराग्निव्यावर्तनः वैश्वानररूपः अग्निः सर्वप्राणिदेहस्थितः प्राणापान-संयुतश्चतुर्विधान्नपाचकः व्यात्तं विस्तृतं मुखम् । ननु श्रुतौव्यात्तमिति शब्दोपादानेन मुखमिति कथं गृहीतम् ? **मुखादग्निरजायत** इति श्रुत्यन्तरात् । अग्निर्मुखोपमानत्वा वधारणात्, न हि विशेषणं विशेष्यनिरपेक्षं भवतीति व्यात्तपदस्यानुपपन्नत्वात्, तेन स्वविशेष्यभूतमुखशब्दस्याक्षेपौचित्यात् । अथवा व्याप्तं मुखमग्निः इत्येव पाठः श्रुतेर्वास्तविकः, लेखकप्रमादात् साम्प्रतिकपुस्तकेषु नोपलभ्यते । एतस्य मेध्यस्य अश्वस्य संवत्सरः द्वादशमासात्मकः आत्मा शरीरम् । अहङ्कारः अन्तःकरणं वा, एवमेव द्यौः द्योतनात्मकस्वर्गलोकः पृष्टं परोक्षत्वात्, अपवर्गशीलश्च भगवद् भजनरसिकैः पतनशीलतया भोगबहुलतया च दूरेणैव समुपेक्षितत्वात् तदिव वाहकत्वाच्च पृष्टमिव अश्वमेधकारिणां समग्रसुकृतिनाम् । अन्तरिक्षम् अस्य हयस्य उदरं जठरम्, तदिव सर्वज्योतिषां धारकत्वात् सावकाशत्वाच्च तत्समम् । पृथिवी भूमिः पाजस्यं पादस्यमितिवक्तव्ये **व्यत्त्ययोबहुलम्** इत्यनेन हलो दकारस्य जकारत्वेन व्यत्ययात् पाजस्यं लोके तु पादस्यम् । पादस्यं नाम चरणनिक्षेपस्थानं खुरलग्रलोहखण्डम्, **पादस्यम् वाजिनः प्रोक्तं खुरलग्नमयो बुधैः** इत्युक्तेः पार्श्वे पार्श्वभागे दिशः पूर्वादयः अवान्तरदिशः आग्नेयादि कोणचतुष्टयं, पर्शवः पार्श्वस्थीनि, ऋतवः हेमन्तशिशिरवसन्तग्रीष्मवर्षाशरदः, अङ्गानि अवयवाः, मासाः चैत्रादयः, अर्धमासाः शुक्लकृष्णविभागेन प्रतिमासं द्वेधा विभक्ताः पञ्चदशदिनात्मकाः चतुर्विंशतिप्रतिसंवत्सरम् अधिकमासयोगे च षड्विंशतिः । उभयेऽपि पर्वाणि अश्वस्य शरीरसन्धयः । अहोरात्राणि दिवसनिशाः प्रतिष्ठा, अश्वस्य चरणं प्रतितिष्ठति येन सा प्रतिष्ठा, **प्रतिष्ठाचरणः पदं** इति कोशाच्च । नक्षत्राणि उडुगणाः अस्थीनि तद्वत् शौक्ल्यात् । नभो मेदाः मांसानि आमिषाणि आर्द्रत्वात् साम्यम् **श्रावणे गगने मेदे नभः स्यात् च नपुसकम्** इति कोषात् । सिकताः बालुकाः ऊवध्यम् उदरस्थितम् अर्धपक्वम् अशनम् **उवध्यमामभोजने** इति कोषात् । सुन्धन्ति पुनन्ति जना याभिः ताः सिन्धवः नद्यः । सुन्धि धातोः उकार-इकारे विपर्ययेण उणादित्वात् उणि प्रत्यये प्रथमाबहुवचने रुपम् सिन्धवः । स्पन्दन्ते वा सिन्धवः इति व्युत्पत्तौ स्यन्द्धातोः उणि पृषोदरादित्वात् द कारस्य धकारे यकास्य इकारे च विपर्ययङ्गते यथाश्रुतरूपम् । गुदाः पायवः मलविसर्जनात् शोधने प्रस्रवणाच्च स्पन्दने उभयत्र साधारण्यम् । एवमेव क्लोमानः हृद्गतमांसखण्डम् इति प्राञ्चः । वयं तु—**स्तने स्यात् क्लोमशब्दस्तु बहुत्वेऽनन्तकः पुमान्** इति कोषात् यकृत्, क्लोमानः स्तनभागः पर्वताः लघवो यकृद्रूपाः विशालाश्च क्लोमरूपाः इति चकारसमुचितोऽर्थः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमेव ओषधयः अल्पाकाराः तरवः तृणवीरुधादयः ओषधयः ह्रस्वरोमाणि । वनस्पतयः विशालवृक्षाः फलवन्तः दीर्घरोमाणि । उद्यन् उदयमृगच्छन् सूर्यः पूर्वार्धः अश्वकायस्य पूर्वार्धभागः शिरआरभ्यहृदयपर्यन्तः । निम्लोचन् अस्तंगच्छन् सूर्यः तदुपलक्षित-दिवसः जघनार्धः अपरकायः शरीरस्याधोभागः इति भावः उदरमारभ्यचरणपर्यन्तः । एवं यद्विजृम्भते विजृम्भणं जाम्बं तद् विद्योतते विद्योतनं चपलाचमत्कृतिसाम्यात् । विजृम्भणे मुखव्यादाने चपला इव शिताः दन्ताश्चमत्कुर्वन्ति । एवं विधूनुते अश्वस्य पुच्छादि स्पन्दनं तत्स्तनयति तदेव मेघगर्जनम् । मेहति, मेहनं मलमूत्रविसर्गः तदेव वर्षति । अत्र त्रिषु विजृम्भते विधूनुते मेहति इत्येतेषु तदुपमेयेषु विद्योतते स्तनयति वर्षति इत्येषु त्रिषु च आख्यातार्थो न विवक्षितः । तिङ् प्रयोगस्तु साधुत्वमात्रप्रयोजनः स्वार्थिकप्रत्यये इव भावनार्थो वा । वाक् शब्द एव वाग्देवता वा वाक् अशवस्याश्वमेधीयस्य वागिन्द्रियम् हेषणं रवो वा । इवकारो वार्थो वागिन्द्रियहेषविकल्पसूचको वा ।

मम मते तु यथा हयमेधीयेऽश्वे प्रजापतिदेवता भावना तथैव तस्य तत्तदङ्गेषु तत्तद्देवभावनया व्याख्येयोऽयं मन्त्रः; तत्तद्देवाधिकरणतया वा अश्वाङ्गानि समवधार्य सर्वत्र प्रथमा सप्तम्यर्थतया निरूप्या । तथा हि अश्वस्य शिरसि चक्षुषि सूर्यः, प्राणे वातः, मुखे वैश्वानरोऽग्निः, आत्मनि संवत्सरः, पृष्ठे द्यौः, उदरे अन्तरिक्षं, पाजस्ये पृथिवी, पार्श्वयोः दिशः, पर्शुष्ववान्तरदिशः; अङ्गेषु ऋतवः, पर्वसु मासाश्चार्धमासाश्च, प्रतिष्ठायामहोरात्राणि, अस्थीषु नक्षत्राणि, मांसेषु नभः, सिकतासूवध्यं, गुदेषु सिन्धवः, यकृति क्लोमसु च पर्वताः, लोमसु ओषधयश्च वनस्पतयश्च, पूर्वार्धे उद्यन् जघनार्धे निम्लोचन् सूर्यः, वाचि वाक्, विजृम्भणे विद्योतनं, विधूनने स्तनितम्, मेहने च वर्षणम्, इति सर्वत्र सप्तम्या विपरिणमय्य व्याख्येयम् ।

अथाश्वमेधीयमश्वं स्तौति–

**अहर्वा अश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापारे समुद्रे योनिदेतो वा अश्वं महिमानावभितः सम्बभूवतुः । हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ।।२।।**

अथाश्वं प्रजापतित्वेन स्तुवन्ती श्रुतिः प्राह—यथा कस्यचिन् महाराजस्य पार्श्वतः पृष्ठतश्च सैनिकास्तं परिवार्य गच्छन्ति तथैव इममश्वमश्वमेधमखोपकरणम् अनुलक्ष्य, अहः दिनाभिमानिदैवतमेव महिमा विभूतिर्भूत्वा अजायत प्रादुरभवत् । तस्य अश्वस्य पूर्वे समुद्रे योनिः प्राप्तिस्थानम् । केचन पूर्वे समुद्रे इति सप्तम्यन्तं प्रथमार्थतया व्याचक्षते तत्रार्थमसिकम् । अधिकरणव्याख्यानेऽप्यदोषात् । एनमश्वमनुलक्ष्य पश्चात् पृष्ठतः रात्रिः

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निशाभिमानिदेवता अजायत, रात्रिर्विभूतिभूय पृष्ठतोऽनुगन्तुं सञ्जातेति भावः। अत्रोभयत्र अनुर्लक्षणे इति कर्मप्रवचनीयत्वाद् द्वितीया। तस्य अपरे समुद्रे पश्चिमे महासागरे योनिः प्राप्तिः पूर्वसमुद्रादारभ्य पश्चिमसमुद्रं यावत् तस्य गतिरिति भावः। एवमेव एतौ अहोऽभिमानिदैवतरात्र्यभिमानिदैवतविशेषौ महिमा विभूतिः सन्तौ अश्वमश्वमेधीयहयम् अभितः सम्बभूवतुः सञ्जज्ञाते। एवमश्वमभितः **अभितः परितः समयानिकषाहा-प्रतियोगेऽपि** इति वार्तिकेन अभितः शब्दयोगे अश्वमिति द्वितीया। अयम् अश्वः दिवसरात्रिरूपमहिमभ्यां पुरतः पृष्ठतश्चानुगम्यमानः किमकरोत् ? इत्यत् आहः—

देवान् सुरान् इन्द्रादीन् अश्वमेघकृतः अयमश्वः हयो भूत्वा हिनोति द्रुतम् प्रेषयति इति हयः द्रुतप्रेषणशीलो भूत्वा् अवहत् अधारयत्, अनयत्। अथवा दैवीसम्पदा अश्वमेघम् यजमानान् अयं यज्ञाश्वः हयो भूत्वा विशिष्टगतिमान् सन् विलम्बं विना स्वर्गमवहत्। गन्धर्वान्, वाजी वाजो वेगः सोऽस्त्यस्मिन्निति वाजी, वेगवान् भूत्वा पूर्वतः किञ्चिद्विलम्ब्य स्वर्गमनयत्। तादृक् राजस् प्रकृतींश्चैवमसुरान् दैत्यान् सुरव्यतिदिक्तान् आसुरीप्रकृतिमुपासिनः अर्वा ऋयते गच्छति शनैः शनै तथा भूत्वा असुर याजकान् गन्धर्वतोऽपि दीर्घकालेन गच्छन् स्वर्गमनयत्। एवं मनुष्यान् संसारसम्पन्मदीया अहं करोमि वा इति मन्वानान् अश्वोभूत्वा अश्वयति इति अश्वः, श्वथयुक्तः सन् अवहत्। अथवा आश्नाति लवणशिला लोढि इति अश्वः अर्थात् मनुष्यबुद्ध्या कुर्वतोऽश्वमेधं तान् स्वर्गं नयन् निजगतिरोधेन मध्ये विरम्य भोगाननुभूय समनुभाष्य च दीर्घेण कालेन स्वर्गं नयति। तस्मात् देवो भूत्वैव अश्वमेघं यजेत इति श्रुतनिर्देशः। **देवो भूत्वा देवं यजेत्** इति श्रुतेः। अवहत् इति लडर्थे लङ्लकारः। वस्तुतस्तु मन्त्रोऽयम् श्रीरामाऽश्वमेधमहाश्ववर्णनपरः तमेवाभितः श्रीरामप्रेषिताश्वम् अहोरात्रिर्देवते महिमानावन्वजायतां पूर्वसमुद्रमारभ्य यावदपरसमुद्रं वसुमत्यां श्रीराघवस्यैव शासनात् द्वयोर्समुद्रयोर्मध्ये निष्कण्टकतया न केनाप्यवरूद्धः पूर्वसमद्रात् गच्छन् अभ्याहतगतिः पश्चिमे समुद्रे लभ्यते ततश्च पूर्वे, इति कोटिशो गतागतं व्यधत विधत्ते च, श्री राघवेन्द्रस्य कोटिकोट्यश्वमेधकरणस्मृतेः। **अश्वमेघशतैरिष्ट्वा तथाबहुसुवर्णकैः**

(वा० रा० १-१-५४)

**कोटिन्ह वाजिमेध प्रभुकीन्हे। दान अनेक द्विजन्ह कँह दीन्हे॥**

(मा० ७-२४-१)

एतद्रूपान्तरम्—

**चकार प्रभु रामो हि वाजिमेधांश्च कोटिशः।**
**अनेकानि च दानानि द्विजेभ्यो दत्तवानसौ॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति मानसवचनाच्च। एवं सः देवगन्धर्वासुरमनुष्यान् इन्द्रादितुम्बुरुप्रभृतिविभीषणादि-सुमन्त्रादीन् हयवाज्यर्वाश्वरूपः अवहत् श्रीरामचरणसन्निधिं निनाय, इति भगवदीयप्रतिभाप्रसूतार्थः। तस्य समुद्रः सागरः बन्धुः बन्धनस्थानं भूमौ न बद्धुंशक्यः समुद्र एव स्थागितगमनत्वात् बद्धयत इव। तस्य समुद्र एव योनिः प्राप्तिस्थानं तत्रैव विश्रान्तत्वात्। भूमौ न केनापि ग्रहीतुं शक्यः अथवा समुद्रः परमात्मा श्रीरामः, समुद्र इव गाम्भीर्ये (वा० रा० १-१-१७) **सरसामस्मिसागर** (गीता १०-२४) इत्यादिस्थलेषु स्मरणात्। स एव बन्धुः स्वामी स एव योनिः जन्मदाता प्राप्तिस्थानं च। कुत्राप्यविरमन् सोऽश्वः। प्रतियात्रं सह विजयश्रिया श्रीराममेवाभ्युपैति श्रीरामं पुनश्चान्यस्यै यात्रायै उच्चलति इति भावः। श्रीः॥

**इति बृहदारण्यकोपनिषदि प्रथमाध्याये प्रथमाश्वमेधब्राह्मणे श्रीराघवकृपाभाष्यं सम्पूर्णम्।**
**॥ श्री राघवः शन्तनोतु ॥**

## ॥ द्वितीयब्राह्मणम ॥

अथाश्वमेधीयस्य अश्वस्योत्पत्तिं निरूपयति। अश्वयतीति अश्वः एतच्छरीरे कथमुच्छूनता कथञ्चैतस्मिन् प्रविवेश प्रजापतिः, इति सर्वं द्वितीये ब्राह्मणे निरूपयिष्यमाणं वर्तते। ब्रह्मवेदमधीते तद्वेद इति ब्राह्मणः, वेदाध्ययनशीलः तज्ज्ञानविशिष्टः सोऽस्त्यस्मिन् प्रतिपादकतया इति ब्राह्मणः—

**नैवेहकिञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्। अशनाययाशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति। सोऽर्यन्न-चरत्तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कं ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥१॥**

कारणकार्ययोः सत्तां प्रतिपादयन्ती प्राह–इह अस्यां सृष्टौ अग्रे संसारसर्जनात् पूर्वं किञ्चित् जडचेतनात्मकं नैव आसीत् दृश्यमानत्वेन नैवास्ति स्म। ननु कथमिदं विरूद्धमुच्यते, आसीत् इत्यस्य दृश्यमानत्वेन आसीत् इति कथं व्याख्यायते, नैवासीत् इत्यस्य नैवाभूत् इत्येव वाच्यम् आसीत्? इति चेन्न अनुपदमेव मृत्युनैवेदमावृतमासीत् इति वक्ष्यमाणश्रुत्यंशार्थपर्यालोचनानुरोधात् तदेव व्याख्यानमुचितम्। कथमन्यथा पूर्वत्र अग्रे किञ्चिन नैवासीत् इति कथयन्ती श्रुतिः सर्वावच्छेदेन भूयो परत्र इदं मृत्युना आवृतमिति कथयित्वा तस्यैव जगतः सावरणसत्तां निरूपयत्। नहि एकस्मिन् घटे एककालावच्छेदेनान्तरेणान्योन्याभावभावाभावत्रितये साधयितुं शक्येते, यतो हि असतो भावस्य सतश्चाभावस्य त्रिकालमपि स्थापयितुमसम्भवः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नासतो विद्यते भावो नाभावो विद्यते सतः ।**
**उभयोरपि दृष्टोन्तस्त्वनयोस्तत्त्वदर्शिभिः ।**

(गीता २-१६)

तस्मादिदं जडचेतनात्मकं सृष्टेःप्राक् तस्मिन् परमात्मन्येव आसीत् **यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति तद् विजिज्ञासश्व तदेव ब्रह्म** (तै० उ० २-१-१) इति श्रुतेः । वस्तुतस्तु सहस्रयुगपर्यन्तस्थायि-ब्रह्मदिवसमभिव्याप्य सर्गः, तदनु तत् परिमाणयुगावलम्बिनीं ब्रह्मरात्रिमभिव्याप्य प्रलयः । दिवसे परमात्मनः सकासात् भूतानि जायन्ते, रात्र्यागमे च तत्रैव लीयन्ते । यावत् रात्रिं सहस्रयुगपर्यन्तां भगवत्येव विश्रम्य पुनर्दिवसोन्मुखे जायन्ते, पुनश्च निशागमे लीयन्ते, इति कर्मतन्त्राणां बद्धजीवानां गतागतम् । **गतागतं कामकामा लभन्ते** गीता-२१ इति स्मृतेः । इदं सर्वं भगवतैव श्रीगीताया अष्टमाध्यामे प्रपञ्चितं श्लोकत्रयेण तथाहि—

**सहस्रयुगपर्यन्तमहर्यद् ब्रह्मणो विदुः ।**
**रात्रिं युगसहस्रान्तां तेऽहोरात्र विदो जनाः ।**
**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्याहरागमे ।**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ।।**

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ।**
**रात्र्यागमेऽवशः पार्थः प्रभवत्यहरागमे ।।**

(गीता ८/१-१८-१९)

नहि खलु मृदः प्रागभावे घटः उत्पादयितुं शक्यः, नवा सुवर्णस्यासत्वे कुण्डलादिकं निर्मातुं शक्यं, नवा बीज निरपेक्षं वृक्षादिकं तिष्ठति इत्यनेन शून्यवादः परास्तः । दृश्यमानत्वेन नासीत् तर्हि कीदृगासीत् ? इत्यत् आह-इदं कार्यजातं, मृत्युना मेयन्ते प्राणैर्वियुज्यन्ते येन स मृत्युः तेन कालरूपेण भगवता स्वप्राणिभ्यो वियोज्य निजयोगमायांचलेन आरात्र्यवशानं समावृतम् । अतः तेन समावृतत्वाद् इदं दृश्यामानं नासीत् परमात्मावरणपिहितं सदासीत् मृदि छन्नं रत्नमिव । अत्र तृतीयान्तेन उत्पत्तेः प्राग् कारणसत्ता आवरकरूपिणी प्रथमाविभक्तान्तनिष्ठान्तेन आवरणाश्रयसत्ता कार्यरूपिणीति ब्रह्मजीवद्वयी ध्वंसनिरपेक्षसत्ता नित्या प्रत्यपादि । नीडादिव विहङ्गा जीवा उद्भवन्ति दिवसे रात्रौ नीड इव वयांसि विलीयन्ते । इत्यनेन कार्यकारणभावयोः प्राक्सृष्टेर्सत्ता सोपपत्तिकं प्रतिपादिता । मृत्युना कालात्मना भगवता इदं सर्वं प्रलयकाले आवृतमासीत् । भगवान् हि कालात्मा, स च प्रलयकाले जीवान् संहृत्य यावत् प्रलयकालं समावृत्य सुखं विश्राम्यति । यथोक्तं भागवते—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कालात्मना भगवता शक्रदर्पं जिघांसता** (भा० १०-२५-१) **कालः कलयतामहम्** (गीता १०-३०)

इति तत्र तत्र भगवतैवोक्तत्त्वात् । कथं मृत्युत्वं भगवति ? इत्यत आह— अशनायया क्षुधया, हि यतो हि भगवतः अशनाया अशितुमिच्छैव मृत्युः तदवच्छिन्नो भगवानपि मृत्युरूपः—

**मृत्युः सर्वहरश्चाहम् तथोक्तं मानसे** (१०-३४ इति स्मृतेः ।)

**कालरुपमय तिन्हकँह भ्राता । शुभ अरु अशुभ सकल फलदाता ।।**

(मानस ७-४०-५)

एतद्रूपान्तरम्—

**तेषामहं कालरूपः पीडकानां सहोदरः ।**
**शुभानामशुभानांच फलानां हि प्रदानकृत् ।।**

अतएव अहं आत्मन्वी आत्मवान् स्याम्, अत्र आत्मशब्दः मनोपरकः शरीरार्थश्च मनोमूलकत्वात्तच्छरीरस्य इति हेतोः; आत्मा मनः शरीरं वा अस्त्यस्मिन् इति आत्मन्वी मनस्वी शरीरवांश्च स्याम् भवेयम्, इति इच्छन् तत् अन्तःकरणावच्छिन्नं शरीराधारि मनः चंद्रदैवतकं संकल्पव्यापारावच्छिन्नहृदवृत्तिविशेषम् अकुरुत अकृत । अत एव **वीक्ष्य रन्तुं मनश्चक्रे** (भा० १०-२९-१) इति श्रीशुकवचनमपि सङ्गच्छते । अथ कृतमनाः सँल्लब्धशरीरः पश्चात् किमकुरुत ? इत्यत् आह—

सः शरीरी मनस्वी अर्चन् जीवात्मानं निजस्वरूपं वा सगुणं पूजयन् भक्तोत्कृष्टतया बहुमन्यमानः अचरत् शुभाचरणं कृतवान्, एवं अर्चतः अत्र षष्ठी चानादरे इत्यनेन अनादरार्थे षष्ठी । अर्चन्तं पूजयन्तं तं समादृत्य आपः कारुण्यावच्छिन्नाः शीतलजलविशेषाः अजायन्त आकाशावाय्वग्न्यनन्तरम् अजायन्त समजनिषत । अर्चते स्वं पूजयते मे मह्यं प्रजापतये कं सुखम् जलं चाभूत् । इति एतस्य अर्कत्वम्, अर्चते कम् यस्मिन् सोऽर्कः, तदेव पूजनकाले करूपजलजायमानत्वमेव तस्य अर्कस्य अर्कत्वम् । एवम् अनेनप्रकारेण यः कश्चन अर्कस्य प्रजापतेः अर्कत्वं वेद जानाति तस्मै तदर्थं ह निश्चयेन कं सुखम् भवति ॥ श्रीः ॥

अथ अद्भ्यः पृथिव्युत्पत्तिं वर्णयति—

**आपो वा अर्कस्तद्यदपा ँ शर आसीत्तत्समहन्यत । सा पृथिव्यभवत्तस्यामश्राम्यत्तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्ततग्निः ।।२।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आप: जलानि एव अर्क: प्रजापति: जलावच्छिन्नदेवता, अपां जलानां यत् शर: सारभूतं तत्त्वम् **शरस्तडागे तत्त्वेच** । यत्तु केचन रस एव शर इति वर्णव्यत्त्ययमिच्छन्ति तदनुचितम्, यदिति नपुंसकलिङ्गप्रयोगत: तत्समानाधिकरणे शर: इति विसर्गघटक-प्रयोगात् शरशब्दस्य असन्तत्व प्रतीते: । तदेव अपां तत्त्वं रसात्मकम् समहन्यत परमात्मेच्छया संहतिमनयत् । सा संहति: पृथिवी गन्धगुणा मेदिनी समभवत् । एवं तस्यां पृथिव्यां रचितायां प्रजापति: कृतभूरिपरिश्रमो लोक इव अश्राम्यत् श्रान्तिमन्वभवत् । एवं तस्य श्रान्तस्य तप्तस्य कृततपस: तेज: रस: सारभूतं सत् अग्नि: निरवर्तत अग्न्याकार: निवर्तत निरगच्छत् परिणतोऽभूद्वा ।।श्री:।।

अथ विराडवयवे प्राच्यादि दिशो दर्शयति—

**स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयं स एष प्राणस्त्रेधा विहित: । तस्य प्रची दिक्शिरोऽसो चासौ चेर्मौ । अथास्य प्रातीची दिक्पुच्छमसौ चासौ च सक्थ्यौ । दक्षिणा चोदीची च पार्श्वे द्यौ: पृष्ठमन्तरिक्षमुदरमियमुर: । स एषोऽप्सु प्रतिष्ठितो यत्र क्व चैति तदेव प्रतितिष्ठत्येवं विद्वान् ।।३।।**

स: अग्निरूप: प्रजापति: आत्मानं निजशरीरं त्रेधा त्रिविधं व्यकुरुत विभक्तवान् अग्निवाय्वपेक्षया आदित्यं सूर्यं, तृतीयं त्रिसंख्यापूरकं अग्न्यादित्यापेक्षया वायुं तृतीयं स्वमपि द्वयोरपेक्षया तृतीयम् । एवमेष: त्रेधा विहित: अग्निवाय्वादित्याकारेण विहित: कृतविभाग: प्राण: प्राणभूत: प्रकर्षेणाननशील: किमकरोत् ? इत्यत् आह–तस्य विराड्रूपस्य प्राचीदिक् पूर्वदिशा शिर: मस्तकं प्रधानत्वात् । असौ अपसव्ये वर्तमाना आग्नेयी सव्ये च वर्तमाना ऐशानी ईर्मौ भुजौ **ईर्मौ वाहु: प्रतिष्टम्भ: दो: पाणिर्भुज:** इति कोषात् । एवं दक्षिणोदीची दक्षिणोत्तरदिशे पार्श्वे पार्ष्ण्यू, असौ च असौ च वायव्यनैरृत्यदिशे सक्थ्यौ संक्थिनी, प्रतीचीदिक् पुच्छं पृष्टभाग:, अन्तरिक्षं नभ: उदरं जठरम्, द्यौ: पृष्ठम् इयम् पृथिवी उर: हृदयस्थानं, स एष: अग्निरूप: प्रजापति: अप्सु जले घृतजगद्गर्भ: प्रतिष्ठित:, एवं विदान् जानो यत्र क्वापि एति गच्छति तत्र प्रतितिष्ठति प्रतिष्ठां लभते ।।श्री:।।

अथ वागुत्पत्तिं वर्णयति—

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनँ समभवदशनाया मृत्युस्तद्यद्रेत आसीत्स संवत्सरोऽभवत् । न ह पुरा तत: संवत्सर आस तमेतावन्तं कालमबिभ: । यावान्संवत्सरस्तमेतावत: कालस्य परस्तादसृजत । तं जातमभिव्याददात्स भाणकरोत्सैव वागभवत् ।।४।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सः अशनाया मृत्युः जिघत्सावच्छिन्नमृत्युरुपः परमात्मा मे मम द्वितीयः आत्मा अपरं शरीरं स्यात् भवतु, इति अकामयत् ऐषीत् । अनन्तरं मनसा निर्मितेन स्वान्तेन वाचं वाणीं मिथुनं कृत्वा तया संवभूव । तत्र यद्रेतः शुक्रमिवासीत् तदेव संवत्सरः संवत्सरचैतन्यावच्छिन्नदेवः अभवत् अजायत । यतोहिततः पुरा तस्मात् जन्मनः पूर्वं संवत्सरः न आस न बभूव । तं संवत्समेतावत्कालपर्यनतमविभः गर्भे अधारयत् । एतावतः कालस्य परस्तात् एतत् समयानन्तरं यावान्यत्प्रमाण आसीत् संवत्सरः तं असृजत् ससर्ज, तं जातं संवत्सरमत्तुमभिव्याददात् मुखं प्रसारितवान् । स भाण् इत्याकारकं शब्दमकरोत्, ततएव वागभवत् । ननु किमिदं भगवतश्चेष्टितं सामान्योऽपि जन्तुः स्वसंततिं न जिघित्सति सर्पादि ज्ञानविक्लवान् मूढयोनीन् विहाय, परमात्मा तु सर्वज्ञः स कथमद्यात्स्वसुतं महदसमञ्जसमेतत् ? इति चेन्न वाचमुत्पादयितुमेव परमेश्वरस्य व्यापार एषः यद्यत्तुं मुखं न व्यादास्यत् तदा संवत्सरो शब्दं नाकरिष्यत्, ततश्च वाङ्नाभविष्यत् इतिमदीयं हार्दं शेषं भगवान् जानातु ।।श्रीः।।

अथ संवत्सरात् ऋगाद्युत्पत्तिं परमात्मनोऽदितित्वं च वर्णयति—

**स ऐक्षत यदिवा इममभिमँ्स्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मनेदँ् सर्वमसृजत यदिदं किञ्चर्चो यजूँषि सामानिछन्दाँ्सि यज्ञान्प्रजाः पशून् । स यद्यदेवासृजत तत्तदत्तुमध्रियत सर्व वा अत्तीति तददितेरदितित्वम् । सर्वस्यैतस्यात्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ।।५।।**

स परमात्मा ऐक्षत व्यलोकयत्, यदि इमं संवत्सरम् अभिमंसे हनिष्ये धातूनामनेकार्थत्वात् अभिपूर्वक मनुधातोः हिंसार्थः । तदा अन्नं कनीयः अल्पं करिष्ये अत एव तमहत्वा तेन वाचा मिथुनीभूय सर्वमसृजत्, अनन्तरम् ऋग्यजुःसामानि छन्दः, यज्ञान् पशून् सर्वाः प्रजाः सर्वं कालात्मना असृजत् सृष्ट्वा सर्वं अत्तुमधृयत, अतएव **चराचरस्यात्ता** । तस्मात् एषः अदितिः अत्ति इति अदितिः एवं विद्वान् सर्वं भुङ्क्ते इति मन्त्रसारांशः । अत्राशयोऽवगन्तव्यः-अत्तुमध्रियत् इति प्रघट्टकेन श्रुतिः परमात्मनि सर्वभोक्तृत्वं साधयति, कालरूपेण परमात्मा चराचरमत्ति नकालं तस्मिन् हिंसिते अदनीयोपपत्यसंभवात् । कालो हि सर्वभूतानामायुः कालयति आयुषः संवत्सरायतत्वात् इति श्रुतिकृपया हार्दं प्रतिभाति मे । यथोक्तं श्रीमानसे—

**अग जग जीव नाग नर देवा । नाथ सकल जग काल कलेवा ।।**

**अंडकटाह अमित लय कारी । काल सदादुरति क्रम भारी ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपान्तरम्—

**नाथ नागाः नराः देवाः जीवाः सर्वे चराचराः ।**
**प्रातराशा हि कालस्य सलोका जगति स्थिताः ।।**

**अण्डरूपकटाहानाममितो लयकारकः ।**
**सदाकालकरालोऽयं विशालो दुरतिक्रमः ।।श्रीः।।**

(मा० ७,९४,७,८)

अथाश्वोत्पत्तिं वर्णयितुमुपक्रमते—

**सोऽकामयत् भूयसा यज्ञेन भूयो यजेयेति । सोऽश्राम्यत्स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशोवीर्यमुदक्रामत । प्राणा वै यशो वीर्यं तत्प्राणेषूत्क्रान्तेषु शरीरँश्वयितुमध्रियत तस्य शरीर एव मन आसीत् ।।६।।**

एवं कृतसर्गः प्रजापतिः भूयसा श्रेष्ठेन यज्ञेन यष्टुं अकामयत् ऐच्छत् । कामाकारमाह– भूयसा यज्ञेन यजेय यजनं कुर्वीय । अनन्तरं स अश्राम्यत् स श्रममन्वभवत्, तस्य श्रान्तस्य तप्तस्य तपस्यां कुर्वाणस्य प्राण रुपं यशो वीर्यम् उदक्रामत् निस्क्रान्तम् अश्वं रचयितुं लीलेयम् । अथ तेषु यशोवीर्यरूपेषु प्राणेषूत्क्रान्तेषु निष्प्राणं प्रजापतिशरीरम् अश्वयत् श्वथमगमत् । एवं श्वयितुं ध्रियमाणे शरीरे मन आसीत्, मनसः सद्भावेन प्राकृतजनस्येव तस्य मरणं न शङ्क्यम् । शरीरमश्वीकर्तुं प्राणनिर्गमनं लीलाशरीरे तस्य मन आसीत् । इत्यत्र मनः शब्दः सकलेन्द्रियोपलक्षणः मनःषष्ठेषु इन्द्रियेषु हि निर्गतेषु मरणं, प्रकृते तथात्वाभावात् न तादृशी शङ्का ।।श्रीः।।

अथाश्वमेधीयाश्वजन्म वर्णयति—

**सोऽकामयत मेध्यं म इदँ स्यादात्मन्व्यनेन स्यामिति । ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम् । एष ह वा अश्वमेघं वेद य एनमेव वेद । तमनवरुध्यैवामन्यत् । तँ संवत्सरस्य परस्यादात्मन आलभत । पशून्देवताभ्यः प्रत्यौहत् । तसमात् सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते, एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मापमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतावर्काश्वमेधौ । सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवत्येतासां देवतानामेको भवति ।।७।।**

स अकामयत् यत् इदं निष्प्राणं मे शरीरं मेध्यं पवित्रं स्यात् अतः प्राणान् प्रावेशयत् शरीरमश्वत् अतः सोऽश्वभूत् इदमेव अश्वमेधत्वम् । अत एव आत्मन्वीति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सङ्कल्पाकारः यः एनं अनेन प्रकारेण जानाति स एव अश्वमेधं वेद । अश्वे प्रजापतिधारणं कुर्वन् तम् अश्वम् अनवरुध्य अवध्यैव निरवरोधममन्यत मुमुचे । अथ संवत्सरादनन्तरमालभत् आलम्भनविषयीचकार । अन्यान् पशून् अन्यदेवताभ्यः प्रत्यौहत् आनयत् । अत एव सर्वदेवत्यं सर्वदेवमयं प्रोक्षितं जलाभिषिक्तं प्राजापत्यं प्रजापतिरूपमालभन्ते शस्त्रयुक्तं कुर्वन्ति । यः तपति सूर्यरूपः एष एव अश्वमेधः संवत्सरः आत्मा शरीरम् अग्निरेव अर्क इमौ द्वौ तस्य आत्मानौ तस्य इमे सर्वे लोकाः भूरादयः । एवं त्रेधा विभक्तोऽपि परमार्थतः स एकैव देवता मृत्युरूपा अत एनं मृत्युर्नाप्नोति न व्याप्य हिनस्ति । एषां मृत्युरेव एका देवता यतो हि स एव आत्मा ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि प्रथमाध्याये द्वितीयब्राह्मणे श्रीराघवकृपाभाष्यम् समपूर्णमृ ।**

**।। श्री राघवः शन्तनोतु ।।**

## ।। अथ तृतीयब्राह्मणम् ।।

अथोद्गीथब्राह्मणः प्रारभ्यते पूर्वयोर्ब्राह्मणयोर्वर्णितस्याश्वमेधयज्ञस्य कर्मकाण्डपरतया कर्मकाण्डप्रधानमेव पूर्वब्राह्मणद्वयवर्णनं मे प्रतिभाति । प्रसंगतः याः ज्ञानप्रतिपादिकाः श्रुतियोऽपि कतिचित् समुज्जृम्भन्ते तत्र । तद्यथा—**नैवेह किञ्चनाग्र आसीन्मृत्युनैवेदमावृतमासीत्** । (बृ० १. ब्रा० र. १) अतएव साम्प्रतं द्वयोः विशदवर्णनार्थं तृतीयब्राह्मणप्रारम्भः । अग्न्यादिदेवतानां स्वस्वरूपेण समुपस्थितिः चरममन्त्रे **तमसोमा ज्योतिर्गमय**–(बृ० उ० १-३-२०) इत्यादि मन्त्रेण स्वस्वरूपावाप्तये प्रार्थनामूलकोपासना इनिद्रयाधिष्ठातृदैवतानां प्रामुख्येन प्राणस्य जगदात्मतया समुपासनम्, एवं ज्ञानकर्मावलम्बिनो विविधविषयाः विश्लेषणविषयी करिष्यन्ते । यत्तु केचन ज्ञानेन सह कर्म न समुच्चिचीषन्ति तदनुचितम् उभयोरपि वेदमूलकत्वात् परमेश्वरप्राप्तये च समानतयैव मार्गत्वेन निर्दिष्टत्वात् । विहितकर्मणां ज्ञानप्राप्तावपि विहितकर्मणां त्यागानौचित्यस्य श्रुतिस्मृतिपुराणेतिहास-महात्मभिस्तत्रतत्र विगर्हिततया निर्दिष्टत्वात् । **कुर्वन्नेवेहकर्माणि जिजीविषेच्छतँ समाः एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे** (ईशा० उ० र.) एतत्तात्पर्यं च इह संसारे कर्माणि कुर्वन् एव फलनिरपेक्षतया फलानि वा परमात्मनि समर्पयन् कर्तव्यबुद्ध्या कर्माणि विदधन् ।

ननु कुर्वन्नित्यस्य फलनिरपेक्षतया वर्तमानकालावच्छिन्नकर्मकरणाश्रयरूपर्थः कथमवगम्यते ? श्रूयताम् कुर्वन् इति शतुर्निर्देशात् । अथ किमायातं शतृनिर्देशेन ?

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति चेत् शतुर्हि परस्मैपदमूलकत्वात् क्रिञः स्वरितेतत्वात् स्वरितेतश्च कर्तृगामिक्रियाफलकत्व एवात्मनेपदविधानस्यैव पाणिनिसमनुशिष्टत्वात् । तथा च सूत्रम् **स्वरितञितः कर्त्रभिप्रायेक्रियाफले** (१/३/७२) स्वरितेतः ञितश्च धातोः आत्मनेपदं स्यात् कर्तृगामिनि क्रियाफले इति हि तत्र वृत्तिः । अतः कुर्वन् इत्यस्य परमात्मार्थं समारभ्यमाणकर्मकर्मकफलानुकूलव्यापाराश्रय इति शाब्दबोधः । एवकारस्य अन्ययोगव्यवच्छेदकरत्वेन व्यवच्छेद्यत्वेन च विकर्मणां चाकर्मणां कर्मकर्मकव्यापारभिन्न-व्यापाराश्रयत्वस्य वा कर्मानुकूलव्यापाराश्रयकर्तृकसाम्भावनिकजीवनेच्छानुकूल-व्यापारप्रतियोगिंकभेदत्वावच्छिन्ननिष्ठव्यापारस्य वा विवक्षणीयत्वात् । न हि खलु कर्मव्यतिरेकेण जीवनेच्छानिषेधपात्रभूतस्य मृतत्वेन वर्तमानता समध्यवसीयते, कर्मकरण-व्यतिरेकेण इतरमार्गसंभावनायाश्च इतः अन्यथा न अस्ति इति वदन्त्या श्रुत्यैव निषिद्धत्वात् । कर्मकर्तरि च भोगाभावस्य श्रुत्यैव तन्मूलकपापलेपनिराशत्वाच्च, कर्म न ज्ञानसमुचितमिति कथनं हास्यास्पदम् । एवं परमात्मप्राप्तौ उभावपि परमेश्वरप्राप्तिसोपानभूतौ न खलु सोपानयोर्द्वयोः समुच्चयनिराशो लपितुं शक्यः । श्रुतिः स्पष्टं निर्दिशति जीवितुमिच्छेत् चेत् कर्तृत्वभिमानभाववर्जितकर्ता संभवन्, एवं स्मृतावपि । तथाहि **सक्ताः कर्मण्यविद्वासो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथाशक्तश्चिकीर्षुर्लोक संग्रहम्** ।। (गी० ३/२५) **योगः कर्मसुकौशलम्** (गी० २/५०) **कुरु कर्मैव तस्मात् त्वम्** (गी० ४/१५)

**एतान्यपि तु कर्माणि सङ्गंत्यक्त्वा फलानि च ।**
**कर्तव्यानीति मे पार्थ निश्चितं मतमुत्तमम् ।।**

(गी० १८-६)

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः**

(गी० १८,११)

इत्यादिस्थलेषु भगवतैव कर्मावश्कत्वप्रतिपादनात् । ननु–

**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते**

(गी० ४/३३)

**ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा ।**

(गी० ४/३७)

एवमादि भगवदुक्तवचनैः कर्मणामभाव उक्तः ? सत्यमतः कर्मणां प्रध्वंसाभाव उक्तः । न तु प्रागभावः । सोऽपि दण्डाभावेदण्डिः नास्तीतिवत् । ज्ञानाग्नौ दग्दफलकत्वेन विशेषणप्रयुक्ताभाव उक्तः, वस्तुतस्तु ज्ञानोदये सति कर्माणि शुभाशुभफलरज्वा कृतिनं न बध्नीरन् । भगवता तु ज्ञानाभिन्ना कर्माभिन्ना च निष्ठैव द्विविधा प्रोक्ता । यद्वा तृतीया

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नैवाभेदार्थिका, किं तर्हि ? स्व प्रकृतिनिष्ठसाधकतमत्त्वसूचिका। एवम् उभयोरपि निष्ठयोर्निष्ठात्वेनैकत्वम् तथोक्तम्–

**लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ।**

(गीता ३-३)

किं बहुना ज्ञानिनामिव कर्मिणामपि समानत्वेनैव भगवतैव सिद्धिप्राप्तेर्घोषितत्त्वात्। नैव भेद उभयोः—

**यत्सांख्यै प्राप्यते स्थानं तद्योगैरपि गम्यते ।**
**एकं सांख्यं च योगं च यः पश्यति सः पश्यति ।।**

(गीता ५-५)

ज्ञानस्य निष्कामकर्मणश्चापि सदृशतया परमात्मप्राप्तिसांधनत्वे समुच्चयभावं कथमनुचितम्। समुच्चयाभावो हि परस्परविरुद्धपरिणामयोर्वस्तुनोः, नहि घटेन पटस्य समुच्चयः विरुद्धपरिणामत्वात्। परन्तु घटशरावयोः समुच्चयस्त्वस्त्येव द्वयोरपि समानतया जलधारणक्रियायामुपयुज्यमानत्वात्। एवमत्रापि समानतया कर्मज्ञानयोः परमात्मप्राप्तौ समुपयुज्यमानतायां सत्यां समुच्चयाभावलपनमुभयोः प्रमत्तप्रलपितमिवोपेक्ष्यम्। वेदविरूद्धकर्मणां शारीराणां वा श्रुतिनोदनाविषयबर्हिर्भूतानां शास्त्रीयं कर्मत्वमिव नहि तेषां ज्ञानेन सह समुच्चयस्य चर्चैव न प्रसङ्गसहा। नहि त्रिविक्रमपदपद्मपरागमकरन्दमन्दाकिन्या त्रिविक्रममुखनिष्ठ्यूतसरिता सह समुच्चयः, नवा शशशृङ्गस्य गोःश्रङ्गेण सह समुच्चयः। परन्तु युगलगण्डसमुद्भवयोः श्रङ्गयोः समुच्चयस्त्वस्त्येव। परमात्मप्राप्तौ हि त्रीणि प्रतिबन्धकानि मलविक्षेपावरणानि । त्रयाणां हि श्रुतिविहितपरमात्मप्राप्तिप्रतिबन्धकविनाशकोपकरणानां कर्मोपासनाज्ञानानां निगमे च काण्डत्वेन समाम्नातानां परस्परं समुच्चयः परस्पराश्रयता च। तथा ह्यावरणनाशो ज्ञानकर्तृकः ज्ञानं च विक्षेप नाशमूलकम्, विक्षेपनाशश्चोपासनाकर्तृकम् उपासना च मलनाशप्रभवा, मलनाशश्च श्रौतकर्मकर्तृकः, श्रुतौ वेदनोपासनयोः पर्यायत्वेन वर्णितत्त्वात्, कर्मानन्तर्भावित्वेन च तस्याःसमुपस्थितेः तयोः समुच्चयः सुलभ एव। श्रुतिविहितः कर्मानुष्ठानपुण्यप्रभवैव परमात्मविविदिषा तस्या एव च ज्ञानजननीत्वात् ज्ञानस्य कर्मणा सह समुच्चयः। कृतेषु श्रुतिविहितकर्मसु तत्फलरूपं श्वत एव विषयेभ्यः परवैराग्यम्। तदनु भगवद्धर्मानुरागः इति भक्त्यापि सह कर्मसमुच्चयः । तथा चाह श्रीमानसे श्रीलक्ष्मणकुमारं प्रति भगवान् श्रीमद्राघवः श्रीरामभद्रः—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भगति के साधन कहहुँ बखानी। सुगम पन्थ मोहि पावहि प्रानी।।**
**प्रथमहि विप्र चरन अतिप्रीति। निज निज कर्म निरत श्रुतिनीति।।**
**एहिकर फल पुनि विषय विरागा। पुनि मम धरम उपज अनुरागा।।**

एतद्रूपान्तरम्—

**साधनानि च मद्भक्तेः कथयामि सविस्तरम्।**
**सुगमेन पथानेन प्राणिनः प्राप्नुवन्ति माम्।।**
**प्रथमा हि विप्रपादेषु प्रीतिश्चातिशया स्मृता।**
**अथ स्वकर्मनैरित्यं श्रुतिनीत्या सह स्मृतम्।।**
**एतत् फलं पुनः पञ्चविषयेभ्यो विरागता।**
**अनन्तरञ्च मद्धर्मेऽनुराग उपजायते।।**

न खल्वननुष्ठितश्रौतकर्मा विषयेभ्यो विरज्यते, नखल्वविरक्तो विषयेभ्यः परमात्मन्यनुरज्यते। ननु कर्मणां ज्ञानेन सह समुच्चये साधिते— **प्लवा ह्येते अदृढा यज्ञरूपा** (मु० उ० १-२-७) **कर्मचितो हि लोको क्षीयते नास्त्यकृतः कृतेन** इत्यादि कर्मनिन्दापरकश्रुतिवचनानि **श्रेयान् द्रव्यमयाद्यज्ञाज् ज्ञानयज्ञः परन्तप** (गी० ४-३) इत्यादि स्मार्तवचनानि व्याकुप्येरन्? इति चेन्न **न हि निन्दा निन्द्यं निन्दितुं प्रभवति प्रत्युद्विधेयं स्तोतुम्** इति नियमात्। कर्मनिन्दापरकश्रौतस्मार्तवचनानां भगवत्प्रीतिप्रतिबन्धककर्मफलासक्तिवैराग्यबोधकत्वेनादोषात्। यथादृष्टस्वीकारे तु वेदोदितकर्मभ्यो विरतो वेदाज्ञासमुल्लङ्घनरूपनास्तिकत्वापत्तेः। अत एव–**नियतस्य तु संन्यासः कर्मणो नोपपद्यते** (गीता–१८-७) **नियतं कुरु कर्मत्वं कर्मज्यायो ह्यकर्मणः** (गीता ३-५) **सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्** (गीता १८-४८) एवमादीनि भगवद्वचांसि सङ्गच्छन्ते। तस्मात् समानलक्षतया वर्णितयोः कर्मज्ञानयोर्ब्राह्मणयोः पूर्वयोरनन्तरं तृतीयस्मिन् भूयस्तावेव मार्गौ देवासुरस्पर्धाख्यायिकामाध्यमेन विशदयति द्वया इत्यादिना—

**द्वया ह प्राजापत्या देवाश्चासुराश्च। ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति।।१।।**

श्रुतिः विषयस्य सुखप्रतिपत्तये समतीतकालिकीमाख्यायिकां प्रस्तौति। ह जगत्प्रसिद्धमेतत् देवाः इन्द्रादयः अभयादिगुणाः दैवीं सम्पदमापन्नाः च तथा असुराः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुखं रान्ति इति सुराः तद्भिन्नाः जनेभ्यो दुःखदायिनः आसुरीं सम्पदमालम्भमानाः दम्भादिदुर्गुणाः विरोचनादयः। सौ ब्रह्मणि शोभनतया रमन्ते इति सुराः, भगवदुपाश्रयाः असुसु प्राणेसु तदोपलक्षित शरीरेषु च रमन्ते इति असुरा, प्राणोपलक्षितं देहमेव आत्मबुद्ध्या सेवमानाः देहात्मवादिनः स्वशरीरपोषकाः विरोचनादयः, इन्द्रविरोचनाख्यायिकायां विरोचनस्य तथैवानुभूतेः। **आत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोतीमं चामुं चेति।** (छा० उ० ८/८/४) अथवा असून् परेषां प्राणान् रान्ति आददते इत्यसुराः **रा दानादानयोः**। इमे द्वयाःद्वौ अवयवो येषां ते द्वयाः, उभयेऽपि प्राजापत्या प्रजापतेरनन्तरापत्यानि पुमाँसः प्राजापत्याः कस्यपस्यैव सन्ततयः। उभयेऽपि समानबलवीर्याः! उताहो न्यूनाधिकाः? इत्यत् आह–ततः अत्र आद्यादितवात् त्रार्थे तसिः। तेषु देवेषु असुरेषु च मध्ये देवाः सत्वगुणबहुलस्वभावाः विशेषेण वैदिकधर्मानुगामिनः कानीयसाः कनीयाँस एव कानीयसा अल्पतराः, असुराः ज्यायसाः उभयत्र स्वार्थेऽण् प्रत्ययः। एवम् कनीयस्त्वज्यायस्त्वमूलकपरस्परव्यधिकरणधर्मकविचारव्यवहाराचारतया एषु लोकेषु देवाः देवलोकेषु, असुराश्चाधोलोकेषु उभयेऽपि अस्पर्धन्त अन्योन्यानभिभवितुं समीहाञ्चक्रुः। कथं वयं स्वशत्रुमभिभवेम? इति। तत्र देवा उचुः यत्–हन्त! अहो एतानसुरान् यज्ञे क्रतौ उद्गीथेन उद्गीथगानेन अत्ययाम, गत्यर्थाय् धातुरतिपूर्वः अतिगच्छाम अतिक्रामयाम इति भावः। देवाः खलु स्पर्धालवः। यथोक्तं मानसे—

**ऊँच निवास नीचि करतूती। देख न सकहिं पराय विभूती।।**

(मा० २/१२/६)

एतद्रूपान्तरम्—

**उच्चो निवासो देवानां निकृष्टा च कृतिः खलु।**
**न द्रष्टुं शक्नुवन्त्येते विभूतीः परवेश्मगाः।।**

प्राञ्चस्तु—देवासुराणां वृत्तिपरतया व्याख्याञ्चक्रु, शास्त्रजनित- बुद्ध्यवच्छिन्नवृत्तयो देवाः, कर्मसु स्वाभाविकवृत्तयोऽसुराः तन्न। इतिहासपुराणानि हि वेदार्थोपबृंहणानि, ग्रन्थे नवीनता प्रतिपत्तये पुराणाविरूद्धव्याख्यानां धर्मविरुद्धम्। यथोक्तं महाभारते—

**इतिहासपुराणाभ्यां वेदार्थमुपबृंहयेत्।**
**बिभेत्यल्पश्रुताद्वेदो मामेषो प्रहरेदिति।।**

(म० भा० आ० प०)

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मात् पुराणोक्तमेव साधु ।।श्रीः।।

अथ वाचः उद्गीथगानं तदनु तस्याः पापविद्धत्वं वर्णयति । यद्यपि वाग् न देवता तदवच्छिन्नोऽग्निरेव देवः किन्तु स वागावरणेन तिरोहितमाहात्म्यः स्वावरणनिराशेऽशक्तः । अतः परमात्मना निजलीलयैव दैवीसंपदमुपासिनेष्वपि स्पर्धाभावः समजनि । एवं यथाक्रमं तत्तद्देवावच्छिन्नवाक्चक्षुश्श्रोत्रघ्राणमनोभिः उद्गीथमगायन्त । एवं देवावरणतया वाक्चक्षुश्श्रोत्रघ्राणमनःसु स्वार्थमुद्गीथं गीतवस्तु, क्षीणसत्वतया पाप्मना विद्धेष्वसुरेषु पाप्मना नापविद्धे च प्राणे, तमेव मुख्यत्वेन भजमानाः तत्कृपयैव निरस्तवागाद्यावरणाः निरावरणाः परमात्मपदशरणाः भूय एव विस्मृतचरमग्नि-वायुसूर्यदिक्चन्द्रमनःस्वरूपं समध्यगमन्, इदमेव प्रपञ्चयति—

**ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् । यो वाचि भोगस्तं देवेभ्य आगायद्यत् कल्याणं वदति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुप्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा ।।२।।**

ह इति निश्चित्य, वाचं वागिन्द्रियावच्छिन्नदेवताम्, उच्चुः प्रार्थयाञ्चक्रिरे यत्त्वं भवती, वाग्देवी, नः अस्मभ्यं देवार्थमितिभावः, उद्गाय उद्गीथगानं कुरु इति, इति शब्दः प्रार्थनाकारसूचकः । तथा एवमस्तु इति इत्थं, प्रतिज्ञाय तेभ्यः देवेभ्यः वाक् उद्गायत् उद्गीथगानमकरोत् । गाने किं वैलक्षण्यं वाचः ? इत्यत आह–यो भोज इत्यादिवाचि वाण्यां भोगः भोगात्मकं फलं प्रोयोरुपम्, तद् देवेभ्यः आगायत् । अत्र दातुमित्यद् ध्याहृत्य तद्योगे तेभ्य इति सम्प्रदाने चतुर्थी । ऊद्गीथगानजनितं वाचि प्रतिष्ठितं भाविफलं तद् देवेभ्यः दातुं आगायत्, यत् कल्याणं तद् आत्मने आत्मानं सम्प्रदानीकृत्य यत् कल्याणं वदति तत् स्वस्यै अगायत् । अभिप्रायोऽयं–यत् प्रतिशुभम्, कर्मणः द्वेधा शुभं फलम् भवति, भोगात्मकम्, भगवत्पदपद्मसंयोगात्मकं च, भोगात्मकं फलं प्रेयोरूपं स्थूलं, भगवच्चरणसयोगात्मकं फलम् श्रेयः सूक्ष्मं, प्रेयोरूपं फलम् अर्थधर्मकामाकारं त्रिवर्गम् अपवर्गं च श्रेय इति मन्यन्ते केचन । वयं तु अपवर्गं धर्मार्थकाममोक्षात्मकं पुरूषार्थचतुष्टयमेव प्रेयोरूपम् भक्तिमेव श्रेयोरूपमिति सशास्त्रीयप्रमाणं सोपपत्तिकमुद्घोषयामः । **सा तु कर्मज्ञानयोगेभ्योऽपिगरीयसी** (ना० भू० सू० २-१) **फलरूपत्वात्** (वा० भ० सू० २-२) एतद् विवरणं मन्निर्मिते श्रीनारदभक्तिसूत्रेषु श्रीराघवकृपाभाष्ये द्रष्टव्यम् । **भक्तेर्मोक्षतः श्रेयस्त्वम्** प्रणिगदति भगवान् कपिलः श्री भागवते—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।**
**जनयत्याशु वै कोशं निगीर्णमनलो यथा ।।**

(भा० पु० ३-२५-३३)

तथैवोक्तं श्रीमधुसूदन सरस्वती स्वामिपादैः भगवद्भक्तिरसायने मङ्गलाचरणे–

**नवरसरुचिरं वा केवलं वा पुमर्थं**
**परममिह मुकुन्दे भक्ति योगं वदन्ति ।**
**निरुपमसुखसम्विद्रूपमस्पृष्टदुःखं**
**तमहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि ।।**

(भ० भ० रसायन १-१)

अत एव प्राहुः अस्मत्पूज्यचरणाः श्रीगोस्वामितुलसीदासमहाराजाः श्रीमानसे भरतव्याजेन—

**अरथ न धरम न काम रूचि, गति न चहहुं निरबान ।**
**जनम जनम रति रामपद यह वरदान न आन ।।**

(मा० २/२०/४)

रूपान्तरम्—

**नार्थो धर्मो न कामो मे न मोक्षो रोचते क्वचित् ।**
**भवे भवे राम पदे रतिर्नान्य वृणे वरम् ।।**

ननु शुभफलस्य श्रेयःप्रेयोरूपयोः किं मानमिति चेच्छुतिरेवेति ब्रूमहे, तथा च श्रुतिः—

**श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः ।**
**श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते ।।**

(क० उ० १-२-२)

एवं स्वार्थकुशला वाक् प्रेयोरूपं भोगं देवेभ्यः सङ्कल्य अगायत्–यत् कल्याणं वदति तच्छ्रेयः स्वस्यै उद्गीथस्य सूक्ष्मं शुभफलं स्वार्थं वृत्तवतीति भावः । एवं वाग्रूपमुद्गातारं ते असुराः स्वार्थपरापणं देवप्रेयःसमीप्सया गायन्तं विदुः विदाञ्चक्रुः यत्–ते देवाः अनेन वाग्रूपेण उद्गात्रा गीयमानेनोद्गीथेन न असुरान् अत्येषयन्ति अतिगमिष्यन्ति, अतस्तं वाक्रूपमुद्गातारं स्वार्थसाधकतया निर्बलं पाप्मना उद्गीथसाफल्य-प्रत्यवायरूपेण पातकेन अविध्यन् सङ्गताः समताडयन् । स एव असुरप्रेषितः यः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रत्यवायरूपः सः पाप्मा पापः । तेन वाचि किमायातम् ? अत आह—इत पूर्वं वाक् शुभं वदतिस्म एतदनन्तरमेव प्रतिरूपम् अशास्त्रीयं भगवद्गुणानुवादातिरिक्तं वदति स एव असुर प्रेषितः पापः ।।श्रीः।।

एवं पापविद्धा उद्गीथगानेनासमुत्पादितदेवहितक्षमपुण्यविशेषा यदा वाग् बभूव तदा देवाः कं प्रार्थयन्त इत्यग्रिममन्त्रेण निरूपयति—

**अथ ह प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्यः प्राण उदगायद्यः प्राणे भोगस्तं देवेभ्य आगायद्यत्कल्याणं जिघ्रति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स । यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ।।३।।**

अनन्तरं प्राणः घ्राणः नासेन्द्रियावच्छिन्नदेवतेति भावः, देवैः प्रार्थितः सन् उद्गीथमगायत्, सोऽपि वागिव भोगं देवेभ्यः, यत् कल्याणं परमेश्वरपदपद्मसमर्पित-श्रीतुलसीकुसुममालासमुद्भूतपरिमलं नितान्तनिर्मलं निरस्तमनोमलं जिघ्रति तत् आत्मने, तमपि पूर्ववदसुराः पाप्मना विद्ध्यावितथप्रयत्नं कृतवन्तः । अधुना यो भगवद् विरुद्धसुरभिं जिघ्रति स एव सः पाप्मा आसुर इति सारांशः ।।श्रीः।।

अथ चक्षुरुद्गीथं वर्णयति—

**अथ ह चक्षुरूचुस्त्वं न उद्गायेति । तथेति तेभ्यश्चक्षुरूदगायद्यश्चक्षुषि भोगस्तं देवेभ्य आगायद्यत्कल्याणं पश्यति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ।।४।।**

चक्षुः चक्षुरभिमानावच्छिन्नदैवतं, कल्याणं पश्यति भगवदीयानां भगवतश्च विशुद्धबोधविग्रहं श्रीविग्रहं इदमेव चक्षुषश्चक्षुष्ट्वं । यथोक्तं श्रीभागवते श्री व्रजाङ्गनाभिः—

**अक्षण्वतां फलमिदं न परं विदामः सख्यः पशूननुविवेशयतोर्वयस्यैः ।**
**वक्त्रं व्रजेशसुतयोरनुवेणु जुष्टं यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ।।**

(भा० १०-२१-७)

व्रजेशसुतयो राधाकृष्णयोः न तु कृष्णबलयोः, तथा व्याख्याने गोपीनां सूर्पणखाया इव व्यमिचारापत्तिःस्यात् । समासश्चात्र-व्रजेशस्य वृषभानोः सुता पुत्री व्रजेशसुता वृषभानुनन्दिनी श्रीराधा, व्रजेशस्य श्रीनन्दस्य सुतः पुत्रः व्रजेशसुतः श्री कृष्णः, व्रजेशसुता च व्रजेशसुतश्च इति व्रजेशसुतौ **पुमान् स्त्रिया** (पा० अ० १-२-६७)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यनेनैकशेषः। तयोः व्रजेशसुतयोः अनुरक्तेषु, कटाक्षमोक्षं यस्य अनुरक्तानां कटाक्षमोक्षं वा यस्मिन्, अनुरक्तः कटाक्षः यस्मै सोऽनुरक्तकटाक्षः अनुरक्तकटाक्षः मोक्षोऽपि येन तदनुरक्तकटाक्षमोक्षम्, एतादृक् वक्त्रं यैः निपीतं पीतरूपरसम् तेषामेवाक्ष्णां सार्थिका अक्षिमत्ता, शेषं पूर्ववत्। तेन पाप्मना चक्षुः प्रतिरूपं भागवत्स्वरूपव्यतिरिक्तं जगत् पश्यति ।।श्रीः।।

अथ श्रोत्रोद्गीथं वर्णयति—

**अथ ह श्रोत्रमूचुस्त्वं न उद्गायेति । तथेति तेभ्यः श्रोत्रमुदगायद्यः श्रोत्रे भोगस्तं देवेभ्य आगायद्यत्कल्याणं शृणोति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं शृणोति स एव स पाप्मा ।।५।।**

श्रोत्रं श्रोत्राभिमानिनी देवता, कल्याणं शृणोति कल्याणश्रवणं भगवत्कथा-सुधासमाकर्णनं वैदिकवाङ्मयश्रवणनञ्च, अप्रतिरूपं भगवद्विरूद्धचर्चा श्रवणम् ।।श्रीः।।

अथ मन उद्गीथगानं वर्णयति—

**अथ ह मन ऊचुस्त्वं न उद्गायेति । तथेति तेभ्यो मन उद्गायद्यो मनसि भोगस्तं देवेभ्य आगायद्यत्कल्याणं संकल्पयति तदात्मने । ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन्स यः स पाप्मा यदेवेदमप्रतिरूपं संकल्पयति स एव स पाप्मैवमु खल्वेता देवताः पाप्मभिरूपासृजन्नेवमेनाः पाप्मना विध्यन् ।।६।।**

मनसः कल्याणं सङ्कल्पः परमेश्वरचिन्तनं, आयुः देवताः असुराः पाप्मभिः उपासृजन् समयोजयन्। अत एव ते देवाः कार्यसाधने न समर्थाः बभूवुरिति-भावः ।।श्रीः।।

अथ प्राणोद्गीथगानं वर्णयति—

**अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति । तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्सन् । स यथाश्मानमृत्वा लोष्ठो विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन्परासुराः । भवत्यात्मना परास्य द्विषन्भ्रातृव्यो भवति य एवं वेद ।।७।।**

अथ एवं वाग्घ्राणचक्षुश्श्रोत्रमनोऽवच्छिन्नाः देवताः उद्गीथगाने भग्नसफलताकाः विभाव्य, देवाः इमं मुख्यम् आसन्यं आस्ये भवं आसन्यं आस्यशब्दस्य आसन्न

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आदेश: हि निश्चयेन ऊचु: निवेदयाञ्चक्रुः, यत् त्वं न: अस्मत् कृते उद्गाय उद्गीथगानं कुरु, स: तथा इति स्वीकृत्य पूर्णकामतया किमप्यनपेक्ष्येण समग्रेण फलेन सह तेभ्य: देवेभ्य: सङ्कल्प्य अगायत् । पूर्ववत् तदुदगातृकर्मणा स्वप्रराभवं विभावयन्त: असुरा: अभिद्रुत्य त्वरेण समभिगम्य अव्यत्सन् पाप्मना ताडयामासु:, किन्तु यथा अश्मानं पाषाणम् ऋत्वा प्राप्य लोष्ठ: मृत्पिण्डखण्ड: विध्वंसते विनष्टो भवति, एवं प्राणमासाद्य विध्वंसमाना: निजपारप्मनैव निश्यन्त: विष्वंञ्च: विष्वक् सर्वत्र अञ्चन्ति गच्छन्ति ये तथाभूता:, परित: पलायमाना: विनेशु: विनष्टा: बभूवु: अदर्शनं जग्मुर्विशेषेण इति भाव: । यतोहि पूर्णकामतया प्राणेन स्वस्मै किमपि नेप्सता समुद्गीतमुद्गीथं, तत्पुण्येन च जिघांसुरासुर:पापस्तानेव जघान, तत: अनन्तरं देवा: अभवन् ज्यायांस: असुराश्च परा अभवन् पराबभूवु: । य: एवं वेद अस्य भ्रातृव्यश्चेत् भ्रातृव्यो विमातुरात्मज: सोऽपि यदि द्विषन् द्वेषं करोति तदा पराभवति । अत्र **व्यवहिताश्च** इत्यनेन व्यवहितस्यापि परशब्दस्य अभवन् भवति इत्यादावन्वय: । एवं जानन् द्वेषं कुर्वन् भ्रातृव्योऽपि तस्मात् पराभवति, द्विषन्निति विशेषणेन अवगम्यत इत्थं यदि चेत् भ्रातृव्योऽस्य द्वेष्टि तदा स तस्मात् पराभूतो भवति, यदा भरत इव स्निह्यति श्रीरामं तदातु ततोऽप्युत्कृष्टतरो भवति यथा—

**नियुज्यमानोराज्याय नैच्छद्राज्यं महाबल: ।**
**स जगाम बनं वीरो रामपादप्रसादक: ।।**

**गत्वा तु स महात्मानं रामं सत्य पराक्रमम् ।**
**अयाचत् भ्रातरं राममार्यभाव पुरष्कृत: ।।**

(बा० रा० १-१-३४,३५)

एवं जानन् अस्य द्विषन् द्वेषं कुर्वन् आत्मन: निजपापेनैव भ्रातृव्य: विमातृतनयोऽपि पराभवति ।।श्री:।।

अथाङ्गिरसो नामोपपत्तिमाह—

**ते होचुः क्वनु सोऽभूद्यो न इत्थमसक्तेत्ययमास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानां हि रसः ।।८।।**

ते देवा: ह निश्चयेन ऊचु: अन्विच्छन्तुमिमामाशाञ्चक्रिरे । अन्वेषणा प्रकारमाह— यो असक्ते असमर्थेऽपि देहे एति स: कुत्र उपलभ्य: ? अयम् आस्ये मुखे तदुपलक्षित हृदये । य: आस्ये अन्तरित: तिरोहित: स एव अङ्गानां रस: अतो आङ्गिरस:, अङ्गे निवासो यस्य स: अङ्गी स चासौ रस इति आङ्गिरस: ।।श्री:।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मृत्योरतीतत्वमाह प्राणस्य—

**सा वा एषा देवता दूर्नाम दूरं ह्यस्या मृत्युर्दूरं ह वा अस्मान्मृत्युर्भवति य एवं वेद ।।९।।**

वा प्रसिद्धो सा एषा पूर्वप्रसिद्धा प्राणाख्या दवेता दूर्नाम, यतो हि मृत्युः मरणम् अस्याः प्राणदेवतायाः दूरम् दविष्ठमेवं यः वेद जानाति स एव अस्मान्मृत्योः मरणधर्मतः दूरं दूरतरं विमुच्यते ।।श्रीः।।

अथ देवतानां पापनाशमाहः—

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयाञ्चकार तदासां पाप्मनो विन्यदधात्तस्मान्न जनमियान्नान्तमियान्नेत्पाप्मानं मृत्युमन्ववायानीति ।।१०।।**

सा एषा अस्पृष्टासुरपाप्मा पराभूतासुरा देवता प्राणनाम्नी एतासां देवतानां वाग्घ्राणचक्षुःश्रोत्रमनोऽमिमानात्तच्छन्नानाग्निवायुसूर्यदिक्चन्द्रमात्राभिमानवतीनां मृत्युं स्वस्वरूपविस्मारकं पाप्मानं पातकम् अपहत्य आसां दिशां यदन्तम् एतद् अभिमानकल्पितदिक्परिसरपारं गमयाञ्चकार निनाय आत्यन्तिकतया नासितवतीति भावः । तत्र आसां पाप्मनः जन्ममरणहेतोर्विन्यदधात् अन्तं नीतवती, अतो हेतोः मृत्युरूपं पाप्मानम् अन्ववयानि, अनु अव अयानि इति पदच्छेदः । अनुः आनुकूल्यार्थ अवोऽवमानसूचकः तच्चावमानमनुगन्तृनिष्ठमेवमनुकूलतया, अवमानितः तं गच्छानीति मन्यमानो देवतासमूहः जनिं जन्म न अयात् नालभत् ।

अत एव जनिम् अन्तं च न इयात् न गच्छेत् अर्थात् अन्त्यं क्षणभङ्गुरपदार्थं जनं जननमरणस्वभावसंसारिणमपि न व्रजेत् । अन्यथा मृत्युपापसम्पर्कों दुर्वारः ।

**अन्त्यं त्यक्त्वा बुधोऽनन्तं जनं त्यक्त्वा जनार्दनम् ।**
**यायादिति श्रुतेर्शिक्षा पाप्मामृत्युरतोऽन्यथा ।।श्रीः।।**

अग्नि वागादीनामतिमृत्युतां वर्णयति—

**सा वा एषा देवतैतासां देवतानां पाप्मानं मृत्युमहपहत्याथैना मृत्युमत्यवहत् ।।११।।**

एषा सा अपहतपाप्मा समतिक्रान्तमृत्युः प्राणनाम्नी परमात्मसंज्ञादेवता **स उ प्राणस्य प्राणः** (के० उ० १-३) इति श्रुतेः । एतासाम् उद्गीथगाने समधिकमसफलानां वाक्देवतानां वाक्प्रभृतीनां मृत्युं पाप्मानं स्वस्वरूपावाप्तिप्रतिबन्धकपरमात्म-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रुतिवियोजकमद्यम् अपहत्य विनाश्य, एताः पञ्चापि वागादिदेवताः अति मरणमतीत्य परमात्मानमवहत् स्वांशिनमदर्शयदिति भावः। ननु मृत्युमति इति श्रुतिसकलेन परमात्मेत्यर्थः कथमवगतः ? इति चेच्छृणु अवहदिति प्रापणार्थक वह् घातोः मुख्यकर्म जिज्ञासायां मृत्योःपारे केनाचिद् भवितव्यमेव स च परमात्मैव नान्यः। यथोक्तं मन्त्रार्णवे—

**तमेव विदित्वा अति मृत्युमेति** (शु० य. ३१/१/१८)

अतिमृत्युमित्यत्र अतिक्रान्तः मृत्युम् अतिमृत्युः तमतिमृत्युमिति, **अत्यादयः क्रान्त्याद्यर्थे द्वितीययोः** इति समासः। एवम् अतीतमृत्युपरमात्मैव तमवहत् सेवकसेव्यभावसम्बन्धबोधद्वारेण भगवत्सामीप्यं प्राप्य अग्न्यादिरूपेणोपस्थापितवती इतिभावः ॥श्रीः॥

अथ पञ्चमत्रान्वयी वाक्यार्थः—

**स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते ॥१२॥**

**अथ प्राणमत्यवहत्स यदा मृत्युमत्यमुच्यत स वायुरभवत्सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते ॥१३॥**

**अथ चक्षुरत्यवहत्तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत्सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति ॥१४॥**

**अथ श्रोत्रमत्यवहत्तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवंस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः ॥१५॥**

**अथ मनोऽत्यवहत्तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत्सोऽसौ चन्द्रः परेण मृतयुमतिक्रान्तो भात्येवं ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद ॥१६॥**

अथ प्राणदेवता प्रथमं वाचम्, पारेमृत्युमनयत् सा अग्निरभवत्। अत एव मृत्योः परेण परस्तात् दीप्यतेऽग्निः प्रकाशते भगवद्भाषैव।

अनन्तरं प्राणः घ्राणसंज्ञकं प्राणं मृत्योरमुमुचत् स यदा मृत्युममुच्यत घ्राणत्वं जहौ अनन्तरं मृत्युमतिक्रान्तः अतीतः पवते पुनाति।

अथ चक्षुः मृत्योः पारंगतम् आदित्यः सूर्यः भूत्वा मृत्युमतीतः परमात्मनस्तेजसा तपति। एवमेव श्रोत्रं मृत्युमतीत्य दिशः अभवन् शेषं पूर्ववत्। एवं मनोऽपि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मृत्युमतिक्रान्तं चन्द्रो भूत्वा मृत्योः पारं भाति भगवदीय विभया । वस्तुतस्तु भगवदीयातिरिक्तसम्बन्ध कल्पनमेव मृत्युरिति मे प्रतिभाति । तथा हि अग्नेरग्नित्वम्, वायोर्वायुत्वम्, आदित्यस्यादित्यत्वम्, दिशां दिक्त्वम्, चन्द्रस्य चन्द्रत्वं पञ्चानामपि देवतानामिमे पञ्चापि धर्माः भगवदीयाः, भगवदीयनिष्ठाः वा भगवद्विभूतिनिष्ठत्वात् । तस्मादेतत् दवच्छिन्ना इमे अग्न्यादयः मृत्युमत्यक्रामन् । वाक्त्वादयो धर्माः मृत्युधर्मिणो जन्तोर्धर्माः तदवच्छिन्नत्वाद् वागादयो मृत्युना गृहीताः । प्राणेन हि पूर्वोक्तानां पञ्चानामपि पाप्माऽपहतोऽतएव स आत्मा अपहतपाप्मत्वरूपगुणकत्वाद् । एवं ज्ञात्वा यः प्राणानुपास्ते एनमपि सा देवता मृत्युमतिवहति मृत्योः पारं गमयतीति भावः ।।श्रीः।।

अथ प्राणस्य अन्नाद्यगानं वर्णयति—

**अथात्मनेऽन्नाद्यमागायद्यद्धि किञ्चान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ।।१७।।**

अथ आत्मने जीवाय परमात्मनिवेदनाय वा उद्गीथेन अन्नाद्यमागायत् । उद्गीथं नाम सामवेदस्य भक्तिवर्णनस्तोत्रविशेषः, उद्गात्रा सत्यसङ्कल्पेन यत् सङ्कल्प्योद्गीतं तदेव पूरयति । एवं यत् किमपि अद्यते खाद्यते तत् अनेनैव एवं जानन् यः उपास्ते स प्रतितिष्ठति ।।श्रीः।।

अथ देवानां प्राणे प्रवेशनं वर्णयति—

**ते देवा अब्रुवन्नेतावद्वा इदँ्सर्वं यदन्नं तदात्मन आगासीरनु नोऽस्मिन्नन्न आभजस्वेति ते वै माभिसंविशतेति तथेति त ँ्समन्तं परिण्यविशन्त । तस्माद्यदनेनान्नमत्ति ते नैतास्तृप्यन्त्येव ँ्ह वा एन ँ्स्वा अभिसंविशन्ति भर्ता स्वाना ँ्श्रेष्ठः पुर एता भवत्यन्नादोऽधिपतिर्य एवं वेद य उ हैवंविद ँ्स्वेषु प्रति प्रतिबुभूर्षति न हैवालं भार्येभ्यो भवत्यथ य एवैतमनु भवति यो वैतमनु भार्यान्बुभूर्षति स हैवालं भार्यैभ्यो भवति ।।१८।।**

ते देवाः अग्न्यादयः प्राणम् अब्रुवन् व्यजिज्ञपन् यत् त्वम् आत्मनः कृते यद् अन्नं भोग्यपदार्थम् आगासीः अगायः एतावदेव एतद् प्रमाणमेव इदं सर्वं वर्तते अस्माकं कृते किमपि नास्ति । अतः नः अस्मानपि अस्मिन् अन्ने आभजस्व आभाजयस्व भागिनः कुरु । यत्तु छान्दसोऽयं णिच् नार्थोऽनेन तत्र, आपूर्वक भज् धातोः विभागार्थ द्योतनसामर्थ्याश्रुतेः आभाजयस्व वयम् आभजाम त्वं प्रेरय इति आभाजयस्व । अथ प्राणःप्राह—ते भवन्तः मा माम् प्राणं अभिसंविशत सर्वतः प्रविशत् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतच्छ्रुत्वा तथा तथास्तु इत्थं प्रतिज्ञाय ते समन्तं सम्यग्भोक्तारं प्राणं परिण्यविशन्त परितः प्रविष्टाः ।

अतएव अनेन पुरुषेण यदद्यते यच्चापि भुज्यते तेन भोजनेन एता अग्न्यादयो देवताः तृप्यन्ति तृप्ताः भवन्ति । कथमित्यत आह—यतो हि स्वाः आत्मीयाः भूत्वा एवं प्राणेव ताः अभिसंविशन्ति परितः प्रविशन्ति । एवं यः एवं वेद सः स्वानां निजज्ञातीनां सर्वेंपां अग्रगन्ता भवति । ननु स्वानामित्यनुपपन्नं तस्य सर्वनामत्वात् आमि सुडापत्तेरितिचेन्न **स्वमज्ञातिधनारव्यायाम्** (पाणि० अ० १/१/३५) इतिसूत्रेण ज्ञातिधनान्यवाचिनः स्वशब्दस्य सर्वनामसंज्ञाविधानानुशासनात् । प्रकृते जात्यर्थतया स्वशब्दस्य विवक्षणेनादोषात्। एवं विदमेवं ज्ञातारं जनं यः प्रतिबुभूर्षति प्रतिकूलं भर्त्तुमिच्छति सः भार्येभ्यः भरणार्हेभ्यः अलं न भवति पर्याप्तो न जायते । अलं भार्येभ्यः इत्यत्र **नमःस्वस्तिस्वाहा स्वधाअलंवषट्योगाच्च** (पा०अ० २/३/१६) इत्यनेन चतुर्थी । यः एनमनुभवति अनुकूलं वर्तते सः भार्यान् भरणीयान् बुभूर्षति भार्येभ्यः भरणयोगेभ्यः अलं भवति पर्याप्तः भवति ।।श्रीः।।

अथ प्राणस्याङ्गिरसत्वं साधयति—

**सोऽयास्य आङ्गिरसोऽङ्गाना ँ् हि रसः प्राणो वा अङ्गानां रसः प्राणो हि वा अङ्गाना ँ् रसस्तस्माद्यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुयत्येष हि वा अङ्गाना ँ् रसः ।।१९।।**

एष प्राणः अयास्यः आस्य भिन्नः अयनशीलश्च आङ्गिरसः, यतोहि प्राणः अङ्गानामवयवानां रसः सारः । उपपत्तिमाह—यस्मात् कस्मात् अपि यतः कुतश्चित् करात् चरणात् अन्यस्मादवयवाद् वा प्राणः उत्क्रामति उज्झित्वा गच्छति तदेवाङ्गं शुष्यति प्राणरूपरसहीनत्वात् अतः प्रत्यक्षतः प्रमाणितं तद्रसत्वम् ।।श्रीः।।

अथ नन्वाङ्गिरसत्वं बृहस्पतेः शास्त्रे प्रसिद्धमङ्गिरसः पुत्रत्वात् तदभेदं प्रतिपादयति प्राणस्य—

**एष एव उ बृहस्पतिर्वाग्वै बृहती तस्या एष पतिस्तस्मादु बृहस्पतिः ।।२०।।**

एषः प्राण एव, उ निश्चयेन बृहस्पतिः । निरुक्तं संगममति—बृहत्याः वाण्याः पतिः बृहस्पतिः, बृहतीशब्दस्य बृहादेशः वागेव बृहती सर्वेषामर्थबोधनात् तस्याः पतिः अतो बृहस्पतित्वेनाऽपि प्राण एवाङ्गिरसः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकारान्तरेण प्रशंसति—

**एष उ एव ब्रह्मणस्पतिर्वाग्वै ब्रह्म तस्या एष पतिस्तस्मादु ब्रह्मणस्पतिः ।।२१।।**

एष प्राण एव वाचः पतित्वेन ब्रह्मणस्पतिः, वागेव ब्रह्म तस्याः पतित्वेन तथात्वम् ।।श्रीः।।

सामत्वेन प्राणं स्तौति—

**एष उ एव साम वाग्वै सामैष सा चामश्चेति तत्साम्नः सामत्वम् । यद्वेव । समः प्लुषिणा समो मशकेन समो समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्य ँ सलोकतां य एवमेतत्साम वेद ।।२२।।**

अयं प्राण एव साम, कथं ? स्त्रीलिङ्गत्वात् वाक् सा प्राणः व्यापकत्वात् द्वयोः समाहारे साम । इतरथापि साम्यमाह—समा एव सामः प्राणः सर्वैः समः, प्लुषिः पिपीलिका तया, मसकैः नागैः सकलजन्तूनां शरीरानुसारमेव तत्र विराजमानत्वात् ।।श्रीः।।

प्रकारन्तरेण स्तौति—

**एष उ वा उद्गीथः प्राणो वा उत्प्राणेन हीद ँ सर्वमुत्तब्धं वागेव गीथोच्च गीथा चेति स उद्गीथः ।।२३।।**

एषः प्राण एव उद्गीथः, उद्गीथशब्दे द्वै खण्डौ उत् गीथ इति, सर्वे प्राणैः उत्तम्भन्ते अतः प्राणः उत् गीयमातत्वात् वागेव गीथः अतः द्वयोरुद्गीथत्वम् । वाचोऽतिरिक्तं प्रणास्तित्वम् नास्तीति ।।श्रीः।।

प्रस्तूयते आख्यायिका—

**तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन्नुवाचायं त्यस्य राजा मूर्धानं विपातयताद्यदितोऽयास्य आङ्गिरसोऽन्येनोदगायदिति वाचा च ह्येव स प्राणेन य चोदगा दिति ।।२४।।**

तदेव चेकितानस्य अपत्यं चैकितानिः, तस्यापत्यं चैकितानेयः चेकितानपुत्रः ब्रह्मदत्तः, राजनं सोमरसं भक्षयन् पानेन भुञ्जानः आह—शपथेन यदि आङ्गिरसः प्राणः वाचा सह न उद्गायत् अन्येन उद्गायत् तदा अस्य ब्रह्मदत्तस्य मूर्धानं शिरः राजा सोम एव विपातयतात् निपातयतु, इति शपथेन उद्गानकर्तृनिश्चयः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ स्वरनिष्पत्तिं वर्णयति—

**तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन्वाचिस्वरमिच्छेत तया वाचा स्वरसम्पन्नयार्त्विज्यं कुर्यात्तस्माद्यज्ञे स्वरवन्तं दिदृक्षन्त एव । अथो यस्य स्वं भवति भवति हास्यं स्वं य एवमेतत्साम्नः स्वं वेद ।।२५।।**

एतस्य साम्नः स्वं धनं प्राणरूपं यः वेद उपास्ते अस्य स्वं भवति । स्वर एव स्वं धनमत एव आर्त्विज्यम् ऋत्विजः कर्म आर्त्विज्यं, स्वरसम्पन्न एव करिष्यन् विधास्यन् तस्मात् यज्ञेषु स्वरवन्तं सस्वरपाठवन्तं दिदृक्षन्ते द्रष्टुमिच्छन्ति नहि स्वरविहीनं, शेषं सरलम् ।।श्रीः।।

अथ साम्नः सुवर्णं स्तौति । मन्त्रेषु स्वरवर्णयोर्माहात्म्यं स्वराः ह्रस्वदीर्घप्लुतोदात्तानुदात्तस्वरितप्रचयानुचयाः वर्णाः अकारादयः —

**तस्य हैतस्य साम्नो यः सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ।।२६।।**

सुवर्णं सुष्ठुवर्णोच्चारणं यः वेद, स सुवर्णः लोकेऽपि सुस्पष्टवर्णोच्चारणक्षमो भवति ।।श्रीः।।

अथ प्रतिष्ठां निरूपयति—

**तस्य हैतस्य साम्नो यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ।।२७।।**

अस्य साम्नः प्रतिष्ठां यः वेद जानाति वाग्रूपां सः प्रतितिष्ठति प्रतिष्ठां लभते । तस्य साम्नः प्राणस्य वागेव प्रतिष्ठा आस्पदं, प्राणः वाचि प्रतिष्ठितः आश्रितः, एके अन्ये आहुः अन्ये अदनीय एव प्राणः ।।श्रीः।।

अथ पवमानाभ्यारोहे जपं विधित्वेन प्रस्तौति—

**अथातः पवनमानमेवाभ्यारोहः । स वै खलु प्रस्तोता सामप्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेत् । असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति । स यदाहासतो मासद्गमयेति मृत्युर्वा असत्सदमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह । तमसो मा ज्योतिर्गमयेति मृत्युर्वै**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तमो ज्योतिरमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येवैतदाह । मृत्योर्मामृतं गमयेति नात्र तिरोहितमिवास्ति । अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मादु तेषु वरं वृणीत यं कामं कामयेत त ँ् स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत्साम वेद ।। २८।।**

अथ अनन्तरं साममहत्त्ववर्णनानन्तरं पवमानानां द्वादशमन्त्राणां अभ्यारोहः अभ्यासः । तत्र प्रस्तोता प्रस्तावं कुर्वन् त्रीणि जपेत्—असतो मा सद्गमय असतः सद्भिन्नात् संसारतः मा मां सद्गमय सद्भूतं परमात्मानं प्रापय, तमसो मा ज्योतिर्गमय तमः मोहात्मकं जगत् तस्मात् ज्योतिः परमप्रकाशरूपं परमात्मानं मा मां प्रापय, मृत्योः असत्वेन तमस्त्वेन च संकीर्तितात्, मा माम् अमृतम् अमृततत्वं परमात्मानं प्रापय । इतराणि अन्नाद्याय आगायत् यजमानः वरं वृणीत, अस्मात् सर्वं लभते व्रियमाणम् । एवं यः इत्थं जानाति स लोकजित् लोकं जयतीति लोकजित् लोकविजेता अलोक्यतायाः कृते अयं न भवति, भगवतः सालोक्यतां प्राप्नोति इति भावः ।।श्रीः।।

**इति बृहदरण्यकोपनिषदि प्रथमाध्याये तृतीय उद्गीथब्राह्मणे श्रीराघवकृपाभाष्यं संपूर्णम् ।**

**।। श्री राघवः शन्तनोतु ।।**

## ।। चतुर्थब्राह्मणम् ।।

**ब्राह्मणानां प्रभुं ब्रह्म ब्राह्मणानामुपासकम् ।**
**चतुर्थे ब्राह्मणेऽध्येमि रामं ब्राह्मणवत्सलं ।**

इतः पूर्वमपूर्वतया कर्मकाण्डाङ्गभूतत्वेन हयमश्वमेधीयं तदङ्गे तत् तत् सुरभावनया सविस्तरं वर्णयित्वा द्वाभ्यां ब्राह्मणाभ्यां, तृतीये पुनः समुचितयोर्ज्ञानकर्मणोः ससमारोहं प्रतिपादनं विधाय, अन्ते त्रिभिर्मन्त्रैः असद्रूपात्तमोरुपाच्च मृत्योः सद्रूपं ज्योतिरूपञ्च अमृतं समधिजिगमिषोः जपविधानम् । अथ किन्नाम तदमृतं यन्मृत्योर्व्यावर्त्यात्मानं जिगमयिषति साधकं, को नामेनं तदमृतं गमयितुं क्षम इति सर्वां जिज्ञासां समुपशमयितुं ब्रह्मोपदेशसुधया चतुर्थोऽयं ब्राह्मणः प्रारभ्यते सप्तदश मन्त्रात्मकः—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**आत्मैवेदमग्र आसीत्पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत्सोऽहमस्मीत्यग्रे व्याहरत्ततोऽहंनामाभवत्तस्मादप्येतर्ह्यामन्त्रितोऽहमयमित्येवाग्र उक्त्वाथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्तस्मात्पुरुष ओषति ह वै स तं योऽस्मात्पूर्वोबुभूषति य एवं वेद ॥१॥**

सृष्टि प्रक्रियां वर्णयति, यत् अग्रे सृष्टेः पूर्वमथवा अग्रे सर्गादौ परमात्मनःपुरस्ताद् वा आत्मा एव अव्याकृतनामरूपतया केवल आत्मा जीवात्मा अस्थूलोऽनणुः आसीत्। अथवा इदमिति लीनशरीरगणकजगत्परामर्षकं तस्मात् आत्मा एव इदमासीत्। अत्रोभयत्र समानविभक्तिधर्मावच्छिन्नत्वरूपप्रथमात्वनिर्देशात् समानाधिकरणयोर्नामार्थयोरभेदान्वयः सिद्धधान्तानुरोधेन। नीलो घटः इत्यत्र नीलाभिन्नो घट इतिवत् अभेदत्वावच्छिन्नाभेदसंसर्गद्वारेण नीलत्वावच्छिन्ननीलविशिष्टघटत्वाविच्छिन्नघट इवात्रापि आत्मत्वावच्छिन्नात्माभिन्नेदंत्त्वावच्छिन्नेदमित्याकारकः । अभेदसंसर्गेण वा आत्मविशिष्टेदमित्याकारकः शाब्दबोधः। प्रलयकाले स्वकीयानि नामरूपाणि दूरतो विहाय नद्यः समुद्रमिव जीवाः परमात्मानं प्रयन्ति, पुनश्च प्रलयावसाने मेघसहायं जलमिव जायन्ते नदीभूय लभन्ते च तत्तन्नदीसंज्ञाम्, तथोक्तं मुण्डकश्रुतौ—**यथानद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्।**

(मुण्डक-उ० ३/२/८) अथवा सृष्टेः पूर्वमिदमेतज्जीवजातमात्मैव आत्मनि एव अव्याकृतनामरूपतया निर्लीनमासीत्। ननु आत्मेत्यत्र प्रथमा स च समानाधिकरणतया विभक्तिनिर्देशः, कर्त्र्यभिन्नः कथं सप्तम्यन्तार्थं बोधयिष्यतीतिचेन्न, **सुपांसुलक्** इत्यनेन ङे स्वादेशे सु लोपे नकारलोपे दीर्घे आत्मा इतिसिद्धम् । एवमिदं जीवजातं समव्यक्तनामरूपमात्मनि सर्वव्यापके परमात्मनि सर्गादग्रे आसीत् स्वसत्तापूर्वकं समुपातिष्ठत्। आसीदिति क्रियापदमस्धातुप्रकृतिकमसिश्च भुवि (अस भुवि) इति पाणिनीयधातु पाठात् , सा च त्रिकालावाध्यत्वेन वर्तमानता। तथा हि आत्माधिकरणिका इदं शब्दवाच्यजीवाधारकसत्ता इति फलितार्थः। **तत् सृष्ट्वा तदेवानुप्राविषत्** (एत० उ० २/१) **संविशन्ति** (तै० उ० २/२) इत्यादिश्रुतेः । ननु जीवब्रह्मणो तदेकत्वबोधकश्रुतीनां व्याकोपः ? इति चेन्सम्बन्धननिबन्धनैकत्वव्याख्यानेन तत् समाधानात्। तथाहि **नेहनानास्ति किञ्चन, आत्मैवेदमग्रआसीत् एकैवाभूदविजानतः वाचारम्भणं विकारोनामधेयम् मृत्यिकेत्येवसत्यम्** इत्यादि श्रुतयः परमात्मनि कल्पित संसारसम्बन्धमेव निरस्यन्ति। **नेहनानास्ति किञ्चन** इति श्रुतौ अनेके स्वरत्वनिषेधः, एकत्वमित्यत्र सम्बन्धतः **एकमेवाद्वितीयम्** इत्यत्र भगवतः सादृश्याभावसूचना सर्वं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सद्वितीयं स्व प्रतियोगिकसादृश्यवत् । एकं ब्रह्मैव निरुपमं न तस्य प्रतिमास्ति न तत्समोऽस्त्यभ्यधिकश्च दृश्यते इत्यादिश्रुतिवचनेभ्यः न त्वत्समोस्त्यधिकस्कुतोऽन्यः इत्यादिस्मृतेः । यथाश्रीमानसे—

**जेहिसमान अतिसय नहिं कोई । ताकर सील कस न अस होई ।।**

रूपान्तरम्—

**नास्य सदृशः कोऽपिं नैतस्माच्चातिरिच्यते ।**
**तस्य चैतादृशं शीलं कथं न स्यात् परात्मनः ।।**

**निरुपम न उपमा आन राम समान रामनिगम कहै ।**

रूपान्तरम्—

**रामो निरूपमो ब्रह्म तस्य नास्त्यूपमा विभोः ।**
**रामेणतु समो रामः संशन्ति निगमा इति ।।**

इत्यादि मानसवचनाच्च परमात्मप्रतियोगिकसादृश्याभाव एव निश्चितः । एवं प्रलयकाले संपूर्णजीवजातं परमात्मन्येव लब्धावासमितिफलितम् । अथवा इदमग्रे जीवजातमात्मैव आसीत्, सृष्टेः पूर्वं तत्तत् कर्मणामलब्धफलपरिपाकतया तज्जनितशरीरवियोगात् आत्मा शरीरव्यतिरिक्तएव आसीत् । यतो हि अग्रे तत्तच्छरीराणामभावात् । अथवा अग्रे परमात्मानि, अङ्ग राति स्वशरीरं भक्तायार्पयति यः सोऽग्रः, तस्मिन् परमात्मनि इदं जीवजातम् आत्मैव बुद्धीन्द्रियशरीरवर्जितं क्षेत्रविकार-शून्यं भगवद्दासस्वभावम् आत्मत्त्वमेवासीत् । शरीरे प्राप्ते किमाकारोऽभवत् ? इत्यत् आहः—पुरुषविधः पुरुषः पुंस्त्वावच्छिन्नशरीरविशेषः, पुरुष शब्दस्य निरुक्तमनुपदमेव श्रुत्यैव करिष्यते । पुरः त्रीण्यपि शरीराणि सिनोति बध्नाति उ निश्चयेन इति पुरुषः, अथवा पुरयति पिपर्ति वा भक्तानां मनोरथं यः सः पुरः परमात्मा, तमेव उ निश्चयेन सिनोति प्रणयरसनया बध्नाति यः सः पुरुषः, स एव विधा प्रकारः स्वभावः भगवद्दास्य रूपः यस्य सः पुरुषविधः ।

**अहं दासः हरिः स्वामी स्वभावं च सदा स्मर**

इति हारीतवचनात् । जीवः खलु भगवतः सेवकः परमात्माभिन्नसत्ताकः इत्येव तस्य विद्या, अथवा पुरुषः पुरुषार्थप्राप्तिक्षमः सैव विद्या यस्य सः पुरुषविधः । अथवा पुरुषः परमात्मा **अङ्गुष्ठ मात्रः पुरुषो मध्य आत्मनि तिष्ठति** (क०उ० २/१/१२) इति श्रुतेः । तत्प्राप्तिरेव विधा स्वभावः यस्य स पुरुषविधः अथवा पुरुषेण परमात्मना विधीयते निजाधिकारे नियुज्यते इति पुरुषविधः प्रजापतिः ब्रह्मा । स किमकरोत् ? इत्यत् आह—सः पुरुषः अनुवीक्ष्य चतुर्णां दिशां वीक्षणं चक्रे । यथा श्री भागवते—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तल्लोकपद्मं स उ एव विष्णुः, प्रावीविशत्सर्वगुणावभासम् ।**
**तस्मिन् स्वयं वेदमयो विधाता, स्व भुवं यं स्म वदन्ति सोऽभूत् ।।**

**तस्यां स चाम्भोरूहकर्णिकायामवस्थितो लोकमपश्यमानः ।**
**परिक्रमन् व्योम्नि विवृत्तनेत्रश्चत्वारि लेभेऽनुदिशं मुखानि ।।**

(भागवत् ३/८/१५/१६)

एवं विवृत्तनेत्रः परितो वीक्ष्य तदा तस्मिन् काले आत्मनः स्वस्मात् अन्यत् अतिरिक्तं किमपि वस्तुजातं न पश्यत् न दृष्टवान् । सः अग्रे अहमस्मि इति अग्रे व्याहरत् परमात्मन अग्रे अब्रवीत् , ततः तस्मादेव कालात् अहंनामा, अहोति सर्वं व्याप्नोति इति अहम् , अहङ्कारस्य सर्वजगद्व्यापकत्वाद अहमेव नाम परमात्मदत्ता संज्ञा यस्य स अहंनामा यदा परमात्मनोऽग्रे जगदनवलोक्य सोऽहमस्मि, स भवतो लब्धजन्मपुरुषविधः अहमस्मि मदन्यन्नास्ति किमपि, तदा परमेश्वर एव त्वम् अहम् इति सार्धद्वयाक्षरनामवानसि इति स्वयमेव नामकरणं चकार । ततः तस्मात् परमात्मनः सकाशादेव अहंनामा अहं संज्ञः अभवत् । अत्र पुरुषविध इत्यनेन रूपम् , अहंनामा इत्यनेन नाम, इदमुपाधिद्वयं जातम् , इतः पूर्वं नामरूपोपाधरहितम् आत्मसत्तामात्रं भगवदाधारमासीत् । यथोक्तं भागवते—

**क्वाहं तमोमहदहंखचराग्निवार्भू-**
**संवेष्टिताण्डघटसप्तवितस्तिकायः ।**
**क्वेदृग्विधाविगणिताण्डपराणुचर्या-**
**वाताध्वरोमविवरस्य च ते महित्वम् ।।**

(भागवत १०/१४/११)

वितास्तिर्द्वादशाङ्गुलः **अर्धहस्तो वितस्ति स्यात् द्वादशाङ्गुल एवहि** तत्रा मप्रत्यक्षानुभवार्हः । तस्मात् प्रजापतेरहंनाम्नः एतर्हि अस्मिन्कालेऽपि आमन्त्रितः जनैराकारितः अयम् एषः श्रुतिस्मृतिप्रसिद्धः अहमस्मि इति इत्थम् ब्रूते, तदनु नाम जिज्ञासवे स्वकीयं नाम कथयति, यस्य जनस्य यन्नाम भवति पितृदत्तं मातृदत्तं वा तदेव । यतोहि एतस्मात् पूर्वस्मात् जन्मान्तरीयात् प्रजापतेरपि पाप्मनः ओषति पूर्वमेव भष्मसात्करोति, एतस्मादपि पूर्वं यः औषत् पापान् एवम् यः प्रजापतिं भवितुमिच्छति स एव प्रजापतिर्भवति ।।श्रीः।।

अथैकनानात्वं पश्यन् ईशदत्तः सत् त्रासाकारमाह—

**सोऽबिभेत्तस्मादेकाकी बिभेति स हायमीक्षां चक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्ध्यभेष्यद् द्वितीयाद्वै भयं भवति ।।२।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सः प्रजापतिः हिरण्यगर्भो ब्रह्मा अबिभेत् भयभीतोऽभूत्। कथम् ? असहायत्त्वत् तस्माद् तस्माद्धेतोः अद्यापि प्रजापतिरचितप्राणिः एकाकी एकलः बिभेति **एकादाकिनीचा सहाय** (पा०अं० ५/३/५२) । इत्यनेन असहायार्थे आकिनी प्रत्ययः । इत्यनेन आद्यशङ्करव्याख्यानं निरस्तं । यदि प्रजापतिः परमात्मैव तर्हि कथमविभेत् ? भयस्य हि जीवधर्मत्वात् परमात्मनश्चाभयत्त्वात् **अभयं निर्जरं ब्रह्म** इति श्रुतेः । यदि चेत् अविद्ययारोपितं तत् तदपि न परमप्रकाशरूपे भगवति अविद्यायाः सर्वथैवानुपपत्तेः । यत्तूक्तं **तस्य प्रजापतेर्यद्भयं तत्केवलाविद्यानिमित्तमेव** तदनर्गलम् । **तमेव भान्तमनुभाति सर्वम् तस्य भासा सर्वमिदं विभाति** (क०उ० २/२/१५) इत्यादि श्रुतेः ।

**न तद्भासयते सूर्यो न शशाङ्को न पावकः** । (गीता १५/६) इत्यादि स्मृतेश्च । समालोचनेन **सत्यं ज्ञानमनन्तं ब्रह्म** इत्यादि श्रुतिभिश्च प्रतिपादिताखण्डज्ञानवति भगवति कथमियमविद्या । अहो कियानयमद्वैतवादवर्शनदुराग्रहावग्रहः यत्र सूरयो मुह्यन्ति यत्र त्रिसर्गोऽमृषा येन च धाम्ना समस्तकुहकानि निरस्तानि, तस्मिन् कोऽयमविद्याप्रसङ्गः । यथोक्तं श्रीभागवते प्रथमे प्रथमश्लोकेन—

**जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वविज्ञः स्वराट्**
**तेने ब्रह्महृदा य आदि कवये मुह्यन्ति यत्सूरयः ।**
**तेजो वारि मृदां यथा विनिमयो यत्रत्रिसर्गोऽमृषा**
**धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहि ।।**

तथैवोक्तं मानसे भगवता गोस्वामी तुलसी दासेन ।

**निज भ्रम नहि समुझहिं अज्ञानी ।**
**प्रभु पर मोह धरहिं जड पानी ।।**
**यथा गगन धन पटल निहारी ।**
**झांप्यो भानु कहहिं कुविचारी ।।**
**चितव विलोचन अङ्गलि लाए ।**
**प्रगट जुगल शशि तिनके भाए ।।**
**उमा राम विषयिक अस मोहा ।**
**नभ तम भूरि धूम जिमि सोहा ।।**

एतद्रूपान्तरम्—

**मूढा नैवावगच्छन्ति ज्ञानहीना निजं भ्रमम् ।**
**प्रभावारोपयन्त्येव मोहं प्राणभृतो जडाः ।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यथा नभस्तले वीक्ष्य मेघमालां विजृम्भिताम् ।**
**भानुश्छन्न इति प्राहः कुविचारपरायणाः ।।**
**पिधायाञ्जलिना नेत्रे पश्यन्तो मूढचेतसः ।**
**एकं चन्द्रमसं द्वेधा मन्यन्ते भ्रमकरणात् ।**
**उमे श्रीरामविषयस्तथा मोहो ह्यमूलकः ।**
**यथा धूलिकणाद् धूमो नभः स्पृष्टुं न वै क्षमा ।।**

(मानस १/११७/२/३/४)

न खलु—परमात्मा असहायः स चैकः नैवैकाकी, जीवस्तु एकाकी विस्मृतभगवद् कैङ्कर्यस्वभावात् प्रपत्यभावाच्च भयं जगाम । प्रपन्नो हि न बिभेति । सः प्रजापतिः अयम् एषः ईक्षाञ्चक्रे ईक्षणं कृतवान् । किम् इत्यद् आह-यत् मत् प्रजापतेः अन्यत् किमपि नास्ति, अतोऽहं निष्प्रतिद्वन्दः नान्यस्य शरीरिणोऽधुना यावत् मदतिरिक्तस्य समुत्पत्तिः भगवद्दास्यस्वभावनात्मतत्त्वसामान्यं मम सर्वत्र विचकास्ति । तर्हि कस्मात् कुतो हेतोर्बिभेमि भयं करोमि, को नाम भय हेतुः । कं ब्रह्म खं ब्रह्म इति श्रुति-प्रतिपादितात् कस्माद् ब्रह्मणो बिभेमि सर्वथैवानुचितमेतत् । अज्ञानाज्ञानपरिस्थितिः जीवस्य, नतु परमात्मनः, यस्माद् भयं बिभेति स कथं बिभेतु । नित्येक्षणशीलस्य परमात्मनः ईक्षणावरोधो न विचारसहः । जीवस्य धर्मः न तु परमेश्वरस्य भयं, विनाशशङ्कया भवति अविनाशिनो विनाशशङ्कानोपपत्तेर्न तत्र भयोत्पत्तिः । ननु जीवत्वेऽपि प्रजापतिर्नहि तत्र भयोपपत्तिस्तस्यापि विना प्रागभावतत्वश्रवणात् ? इति चेत् नैवम् स्वरूपेणाविनाशित्वेऽपि देहावच्छेदेन दण्डिनो यान्ति इतिवत्, दण्डरहिते व्यवहारस्य विशेषणप्रयोगाभावदृष्ट्या विनाशस्य वक्तुं शक्यत्वात् । अणीयस्त्वाच्च तस्य नितरामबोधविक्लवत्वात् । विरोचनस्येव प्रसभमज्ञानवशेन देहमेव स्वात्मानं मन्यमानस्य देहात्मबुद्धेर्भयं सूपपन्नमेव, विकारो हि भयम् , क्षेत्र विकारेषु तस्यापि पञ्चविंशतिसंख्या-पूरणत्वेन गणितत्वात् भगवता, तथा हि—

**महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ।**
**इन्द्रियाणि दशैकंच पञ्चचेन्द्रियगोचरा ।।**
**इच्छा द्वेषः सुखं दुःखं संघातश्चेतना घृतिः ।**
**एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ।।**

(गीता—१३/५/६)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नहि निर्विकारे भगवति विकारभूतस्य भयस्यासुरभावस्य सुरेश्वरे कोसलेश्वरे श्रीरामे ब्रह्मणि सम्भावनालेशोऽपि । **भीरपि यद् विभेति** (भागवत् १/८/३१) इति स्मृतेः जीवत्त्वं स्वीकारे तु सर्वं सङ्गतम् । जीवो हि क्षेत्रज्ञः तस्य क्षेत्रे ममत्वं तस्मात् स्वरूपतो निर्विकारोऽपि **यवघुणन्यायेन** क्षेत्रविकारसम्बन्धतो विकारी संसारीभयाक्रान्तोऽपीति सूपपन्नः शास्त्रार्थः । अथ कथम् भयं व्यपगच्छेदिति तमेव भक्तभयहारिणं हरिं प्रपद्यते इति इति शब्देन सूच्यते । मदन्यत् किमपि नास्ति यद् भगवता त्रातव्यं स्यात्, तस्मात् तं शरणं प्रपद्ये, भीतो हि शरणं प्रद्यते । यथा गजेन्द्रः—

**यः कश्चनेशो बलिनोऽन्तकोरगात्**
**प्रचण्डवेगादभिधावतो भृशम् ।**
**भीतं प्रपन्नं परिपाति यद्भया-**
**न्मृत्युः प्रधावत्यरणं तमीमहि ।।**

(भागवत—८/२/३३)

अथ किमियमशास्त्रीयावधारणा । औपनिषदवाङ्मये भगवच्छरणागतेः कुत्राप्यनुलब्धेरिति ? मैवं वादीः, श्वेताश्वतरे सुस्पष्टमेव कण्ठरवेण श्रुत्यैव शरणागतेः संकीर्तितत्वात् । यथा **यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै तँ ह वेदमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये** (श्वे० उ० ६/१८) न चायं मन्त्रो जीवात्मपर इति वाच्यम् ? आत्मबुद्धिप्रकाशम् इत्यस्य देवमिति शब्दविशेषणत्वेन श्रुत्वोक्तशङ्कायाः दूरापास्तत्त्वात् । न चात्मशब्दस्याहंकारार्थत्वेन देवमिति जीवात्मपरमर्थमभिधत्ते इति वाच्यम्, पूर्वत्र पदयोर्ब्रह्मविधातृत्ववेदप्रेषकत्वेति धर्मद्वयस्य जीवात्मनि सङ्घटनानुपपत्तेः, **न हि भिक्षुको भिक्षुकान्तरं याचते** इत्याकारकन्यायस्य प्रसरेण जीवात्मनश्च क्षोदिष्ठत्वेन तत्र विधातृविधातृत्वस्य च सर्वथैवायोगात् । आत्मनोऽहङ्कारार्थत्वेऽपि तमोबहुलत्वेन तस्मिन् प्रकाशस्याप्रासङ्गिकत्वात् । बुद्धेः पूर्व प्रयोगाच्चात्मशब्दस्य तत्राभ्यर्हितत्त्वद्योतनात् । अहङ्कारे च तद्धर्मानवच्छेदकत्वात् **बुद्धे रात्मा महान् परः** (क०उ० १/३/१०) इति श्रुतेः । आत्मनो बुद्धेरभ्यर्हितत्त्वे सिद्धे तत्पूर्वप्रयोगसूपपन्न एव, एवं **तदेतत्पदनीयमस्य सर्वस्य** (वृ०उ० १/४/७) इति श्रुतावपि । पदनीयं पत्तव्यं । सर्वस्य अस्य प्राणिमात्रस्य शरण्यत्वेन श्रयणीयमिति भावः । **बुद्धौ शरणमन्विच्छ** (गीता २/४) **निवासः शरणं सुहृत्** (गीता ८/१८) **तमेव शरणं गच्छ** (गीता १८/६२) **मामेकं शरणं व्रज** (गीता १८/६६) इत्यादयः स्मृतिवादा अपि भगवच्छरणागतिम् समुपपादयन्ते । किं बहुना ज्ञानवतोऽपि भगवत्प्रपत्तेरेव भगवता चरमलक्ष्यत्वेनैव निर्धारितत्वाच्छरणागतौ नावैदिकत्वं शङ्कनीयम् । एवं श्रुतिस्मृति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सहस्राधिकवचनबलेन विभाव्यम्। शरणागतिमेव परमलक्ष्यं। अथ ज्ञानवतः शरणागतिश्चरमलक्ष्यत्वेनोक्ता किं प्रमाणबलेन भवति ? इति चेच्छृणु—

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मः सुदुर्लभः ।।**

(गीता ७/१९)

भगवद्विमुखकुमतिदुर्बोधतया दुरूहतयातिसामान्यधियाम्, अन्वयोऽप्येतदीयः सावधानं प्रदर्शमानो विभाव्यताम् विद्यारसिकैः व्याकरणप्रक्रियाचुञ्चुभिश्च। अथान्वयः सर्वं वासुदेवः, इति सः सुदुर्लभो महात्मा ज्ञानवान् बहूनां जन्मनाम् अन्ते मां प्रपद्यते। आशयोऽयम् यत् सर्वं वासुदेवः चराचरं भगवद्रूपम् इति एवं सर्वत्र ब्रह्मदर्शनः सुदुर्लभः पुण्यपुञ्जैकलभ्यः महात्मा पूजनीयमना ज्ञानवान्, निश्चितविज्ञानो बहूनां जन्मनां भवानामन्ते मां प्रपद्यते शरण्यत्वेन स्वीकरोति। न च पूर्वार्ध एकवाक्ये उत्तरार्धश्चापर- वाक्ये अन्वयेन दोषाभावः ? इति चेत् **न सम्भवत्येक वाक्यत्वे वाक्यभेदो न युज्यते** इति वाक्यभेदानौचित्यात्। कृतेऽपि वाक्यभेदे ज्ञानप्रवृत्तेर्दुर्निवारत्वात्। तदर्थं शास्त्रविरुद्धकल्पनाया एवायोगात्। अत एव भगवन्तं शरण्यत्वेन स्वीकुर्वन् भयं समपनयति प्रजापतिः, यतो हि प्रपन्नायैव दीनेभ्योऽभयं दीयते कृपालुना भगवता परमात्मना। यथोक्तं वाल्मीकीये—

**सकृदेव प्रपन्नाय तवास्मीति च याचते ।**
**अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ।।**

(वा०रा० १/६/१९/३३)

कस्मात् परमात्मतयैव। ननु क शब्दस्य परमात्मैव कथमर्थोऽस्तीति चेत् **कस्मै देवाय हविषाविधेम** इतिमन्त्रवर्णएव। कं ब्रह्म इत्यपि। ननु ब्रह्मवाचककशब्दस्य नैव सर्वनामसंज्ञा तदभावे कथं स्मात् आदेशः ? इति चेत् **बहुलं छन्दसि** (पा०अ० २/४/३९) इत्यनेन सर्वनामसंज्ञाव्यतिरेकेऽपि स्मादादेशो पत्तेः। इति इत्थं भगवन्तं शरणं प्रपन्नः, ततः परमात्मनः कृपया एव अस्य प्रजापतेः भयं भीतिः आत्मविनाशमूलिका वीयाय विशेषेणगता निर्भयोऽभूत् प्रजापतिः। हि यतो हि कस्मात् अत्र हेतौ पञ्चमी। के हेतुना अभेष्यत् भयस्य न कोऽपि हेतुरिति भावः। भयहेत्वभावे बीजाभावेऽङ्कुर इव न भयं, कथं वै निश्चयेन **द्वितीयाद् भयं भवति**, आत्मनोव्यतिरिक्तात् भयं जायते नात्र तदात्मव्यतिरिक्तःकोऽपि। ननु भवतां मते अस्ति तु परमात्मा द्वितीयः ? नैष द्वितीयः कस्तर्हि ? अद्वितीयः, तर्हि आगतो मेऽद्वैतवादः नायमागन्तुं प्रभवति द्वितीयशब्दस्य स्वसत्ताप्रतिकूलसत्ताकत्वे व्याख्यानात्। अत एव **एकमेवाद्वितीयम्** (छा उ० ६/२/१)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यस्य अद्वितीयं, निरूपमम् आत्मीयमिति तस्मात् परमात्मा न द्वितीयः । अतस्तत् सत्त्वात् द्वितीयताया अभावाच्च न भयमिति भावः । अतएव मदन्य इत्यस्यापि आत्मजातिव्यतिरिक्तनिषेधः । एवमदन्यदित्यस्य अस्मद्पदाभिधेय-प्रत्यगात्मजात्यवच्छिन्नं नास्ति इति भावः तस्मात् द्वितीयं नाम स्वसत्ताप्रतिकूलसत्ताकं तच्चात्र नास्ति । ननु परमात्मा नित्यज्ञानवान् जीवश्च परिच्छिन्नज्ञानयुक्तः अतस्तस्मात् कथन्नप्रतिकूलो परिच्छिन्न आत्मा ? इतिचेच्छृणु यथा संकलितासीमजलरा-शिर्वारान्निधिर्न प्रतिकूलो निम्नागां स्वल्पपयसां, तथैवाखण्डज्ञानराशिरपि परमात्मा न प्रतिकूलः स्वल्पज्ञानवतोऽपि जीवस्य । ननु जीवेऽणुत्वं किं प्रमाणकं सिषाधयिषति भावान् **एषोऽणुरात्मा चेतसावेदितव्यः** (मु०उ० २/१/९) यद्वा द्वितीयशब्दः आत्मीयभेदवच्छिन्नवाची द्वितीयः आत्मीयभिन्नः परमात्मा तु न द्वितीयः किंतर्ह्यात्मीय एव । अत एव श्रीभगवते प्रह्लादः स्वतः परमात्मानं द्वितीयं न जानन् तस्मान्न बिभेति । तस्मिन् भगवदात्मीयत्निश्चयदृढत्वात्। यदपि नित्यसहचर्यापि श्रीर्बिभेति तत्र भगवदात्मीयत्वनिश्चयदृढत्वाभावात् । तथोक्तम् —

**साक्षाच्छ्रीः पोषितादेवैर्दृष्ट्वा तन्महदद्भुतम् ।**
**अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शङ्किता ।।**

(भा०पु० ७/९/२)

परन्तु प्रह्लादो न बिभेति तत्र द्वितीयपरमात्मनः स्वात्मीयत्व बोधनिश्चयात्, तस्मात् ब्रह्मणा प्रेषितः प्रह्लादो निर्भयो जगाम माधवं नारसिंहवपुर्दधानं, तथोक्तम् —

**प्रह्लादं प्रेषयामास ब्रह्मावस्थितमन्तिके ।**
**तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ।।**

**तथेति शनकै राजन् महाभागवतोऽर्भकः ।**
**उपेत्य भुविकायेन ननाम विधृताञ्जलिः ।।**

(भा० ७/९/३/४)

तस्मात् प्रजापतिरपि निजरक्षकत्वेन परमात्मानमध्यवस्यन् निर्भयोऽभत् ।।श्रीः।।

अथ प्रजापतेः सृष्टिप्रक्रियामवतारयति—

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् । स हैतावा नास यथास्त्रीपुमाँ सौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्व इति ह स्माह याज्ञवल्य-स्तस्मादयमाकाशः स्त्रियापूर्यत एव ताँ समभवत्ततो मनुष्या अजायन्त ।। ३ ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं स प्रजापतिः विगतभयोऽपि एकाकी असहायः न रेमे न चिक्रीड विहारं न चकार इति भावः। सकलप्राणिमयस्य प्रजायतेरनुपपन्ने विहारैकत्वे तत्प्रभाप्रतिबिम्बितत्वात्, प्राणिष्वपि तादृक्स्वभावो निरूप्यते श्रुत्या तस्मात् ब्रह्मणारमणाभावात् एकाकिने प्राण्यपि एकाकी एकलो न रमते न क्रीडति। एवं जगत्स्रष्टुर्जगतो निजतुल्यस्वभावत्वात् परमात्मा क्रीडार्थमेव द्वितीयं तुल्यम् ऐच्छत ज्ञानचक्षुषा समैक्षत। ननु को मिलेत्तस्य द्वितीयः सर्वत्रैव तेनैव पूर्यमाणत्वात् जगतः, इति हेतोः स्वकीयशरीरमेव निजशक्तिबलेन एतत्प्रमाणकः कल्पितयुगलरूपः समभवत्। ननु कल्पनायां मिथ्यात्वम्। अत्र संभावना या न मिथ्या। भावनाप्रकारमाह—यथा स्त्रीपुमांसौ नारीनरौ सम्परिष्वक्तौ समालिङ्गितौ अन्तरं ब्रह्मैव आत्मानं स्वं द्वेधा द्विप्रकारेण पातयामास प्रकटयामास। तात्पर्यमेतत् यत् ब्रह्मा सर्वजीवमयः सव जीवात्मानं द्वेधा द्वाभ्यां लिङ्गाभ्यां विषमाभ्यां प्रकारावच्छिन्नतया दृश्यमानं प्रकटयाम्बभूव। ततः तस्मादेव प्रकटीकरणात् पतिः भर्ता मनुरूपः पत्नी शतरूपाख्या अभवताम् अजायेताम्। यत्तु भगवत्पादैः प्रजापतिरेवमनुः इत्यभ्यधायि तत्तु पुराणानभिज्ञत्वादेव पुराणेषु मनुशतरूपयोः ब्रह्मण एव समाविर्भावज्ञापनोपलब्धेः। तथा च भागवते—

**कस्य रूपमभूद्द्वेधा यत्कायमभिचक्षते।**
**ताभ्यां रूपविभागाभ्यां मिथुनं समपद्यत॥**
**यस्तु तत्र पुमान्सोऽभून्मनुः स्वायम्भुवः स्वराट्।**
**स्त्री यासीच्छतरूपाख्या महिष्यस्य महात्मनः॥**

(भा० ३/१२/५२/५३)

तथोक्तं मानसेऽपि—

**स्वायम्भुव मनु अरु सतरूपा। जिन्हते भए नरसृष्टि अनूपा॥**

(मा० १/१४२/१)

रूपान्तरम्—

**स्वायम्भुवो मनुर्जातः शतरूपा च नार्यभूत्।**
**याभ्यां मिथुनतो जज्ञे नरः सृष्टिरनुत्तमा॥**

तस्मात् अत एव इदम् आकाशमर्धवृगलमिव दलीभूतमर्धफलमिव, स्वः आकाशमित्येव याज्ञवल्क्यः। यज्ञवल्क्यस्य गोत्रापत्यं याज्ञवल्क्यः, अथवा यज्ञे वल्को वल्कलो यस्य स यज्ञवल्क्यः तत्र भवः याज्ञवल्क्यः, अथवा यज्ञस्य वल्के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जातः याज्ञवल्क्यः इत्थमाह अतएवआकाशम् आकाशवदरिक्तं पुरुषवस्तु स्त्रियापूर्यते, एवं तां सतरूपां स मनुः समभवत् समगच्छत्; ततः मनुष्याः ताभ्यां मनुशतरूपाभ्यां मानवः समजायत जन्मगृहीतवा न् । यथोक्तं भागवते—

**तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे ।**

(भा० ३/१३/५४ ।।श्रीः।।)

अथ मिथुनसृष्टिं प्रपञ्चयति । प्रजापतिरेव आत्मनो रूपद्वयं विधाय तत्रैव जन्यजनकभावं कल्पयित्वा सृष्टिं समचीचलत् । ततः पश्चात् शरीरावच्छेदेन इयं जननी, आयं जनकः, अयं भ्राता, इयं स्वषा, अयं पुत्रः, इयं पुत्री, एष पतिरेषा, पत्नीति व्यवहारः परम्परया प्रावर्तताभ्युपगमवादाकारः । परमार्थतस्तु एक एव आत्मा छरीरभेदेन स्त्रीपुंक्लीबव्यवहारभाक् स च यावच्छरीरधर्मः परिपालनीय इति व्यवस्था । यद्यपि मनुशतरूपयोर्मध्ये आत्मावच्छेदेन नहि कोऽपि भेदः परन्तु शरीरावच्छेदेन तु भिदास्त्येव । परन्तु भगवल्लीलावशंवदचेतस्तया शतरूपया निरूपितमर्धजरतीयन्यायेन किमभिप्रायमेतत् ? इति चेत् समवधत्स्व, शतरूपा खलु वृतस्यार्धमंशं स्वाभिगमनमूलकं पारमार्थिकं स्वसंभवरूपं व्यावहारिकञ्च विमृष्टवती मनुमेव प्रजापतित्वेन निश्चित्य, तत्र पितृत्वं सम्भाव्य स्वाभिगमे शंकमाना तिरोधातुं निश्चिकाय । ननु परिकलितविवेकपुञ्जायां तस्यां कथमेतावद्विवेकः ? इति चेत् सृष्टिविस्तारसमीहया कृतमिदं परमकुतुकनिपुण-परमेश्वरलीलाविलासकौतुकमेवेति गृहाण । शतरूपा शतानं रूपाणां निर्माणव्यस्तचित्ततया बहुशाखा अनन्ता बुद्धिरेवाव्यवसयिनी, मनुश्च एकव्यवसायात्मकबुद्ध्यवच्छिन्न-चैतन्यराशिरणुर्जीवात्मेति शास्त्रनिर्णयः । अतस्तदभिगमने पापंशङ्कमानाः तां तां जातिमुत्पादपितुं तत्तद्रूपधरां भार्यां तत्तद्रूपधरः समभिगच्छति, मिथुनधर्मेण च तत्तज्जात्यवच्छिन्नप्रजां तत्तज्जातिरूपमत्याः शतरूपायाः सकाशात् याः निखिलानि जातिबीजरूपाणि सत्वानि संजनयतीति निर्दूषणोऽयं शस्त्रार्थः ।

**सो हेयमीक्षाञ्चक्रे कथं नु मात्मन एव जनयित्वा सम्भवति हन्त तिरोऽसानीति सा गौरभवदृषभ इतरस्ता ँ समेवाभवत्ततो गायोऽजायन्त वडवेतराभवदश्ववृष इतरो गर्दभीतरा गर्दभ इतरस्त ँ समेवाभव त्तत एकशफमजायताजेतराभवद्बस्त इतरोऽविरितरा मेष इतरस्ता ँ समेवाभवत्ततोऽजावयोऽजायन्तैवमेव यदिदं किञ्च मिथुनमा पिपीलिकाभ्यस्तत्सर्वमसृजत् ।।४।।**

सा शतरूपा, उ वितर्कयन्ती, इयमेषा गृहीतनारीभावा हि निश्चयेन ईक्षाञ्चक्रे व्यलूलुकत् । हन्त विस्मयोऽयं यदयम् आत्मानः स्वस्मादेव ब्रह्मरूपात् मां जनयित्वा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समुत्पाद्य पुनर्ब्रह्मरूपं विस्मृत्य भूयो मयि पत्नीभावमाश्रित्य कथं सम्भवति कथं समागमविषयां कुरुते, अधर्मोऽयं तस्मात्तिरोसानि तिरोभवानि इति इत्थं विचार्य सा गौरभवत्, मनुरपि गोभूतः सम्भूय गावमुत्पादयामास, एवं तत्तच्छरीरधरायां तत्तच्छरीरावच्छिन्नः अजायाम् अजीभूय अजं, मेषीभूयमेषं अश्वायाश्वमेवं मिथुनधर्मेणैव सम्पूर्णचराचर मजीजनत् । इतिमन्त्रसारः ।।श्रीः।।

अथ सृष्टिफलमाह—

**सोऽवेदहं वाव सृष्टिरस्म्यहँ्हीदँ् सर्वमसृक्षीति ततः सृष्टिरभवत्सृष्ट्याँ् हास्यैतस्यां भवति य एवं वेद ।।५।।**

सः मनुः, अवेद ज्ञातवान् यत् अहमेव सृष्टिः, असृज्यत इति सृष्टिः सर्जनाश्रया अथवा सृजति सर्वं या सा सृष्टिः इति कर्त्रर्थे बहुलं छन्दसीइत्यनेन क्तिन् । ननु कथं स्त्रीलिङ्गव्यपदेशः ? इति चेज्जीवभूतायाः प्रकृतेर्बीजभूतत्वनिर्देशाय यथोक्तं गीतासु—

**अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।**
**जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।**

(गीता ७/५)

एवं यः वेद जानाति सः प्रजापतिः भगवल्लीलया सृष्टिकर्तृत्वाभिमानमेव संजयति इत्थं जानन् प्रजापतेः सृष्टौ स्रष्टा भवति ।।श्रीः।।

एवं एतस्य प्रजापतेः एतस्यां जगद्रूपायां सृष्ट्यां रचनायां प्रजापत्यभिन्नत्वेन विभावयन्नात्मानं प्रजापतिरिव स्रष्टा भवति । यद्यपि मुख्यस्रदृत्वम् परमात्मनि **यतो वा इमानि भूतानि जायन्ते** इत्यादि श्रुतेः । एवं गुणगणविशिष्टः मद्वशीभूतः प्रजापतिः स्वसमानां सृष्टिमेवास्राक्षीत् उताहो काञ्चित् विलक्षणामपि ? इत्यत् आह—

**अथेत्यभ्यमन्थत्स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तष्मादेतदुभयमलोमकमन्तरो लोमका हि योनिरन्तहतः । तद्यदिदमाहुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवाः । अथ यत्किञ्चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदँ् सर्वमन्नं चैवान्नादश्च सोम एवान्नमाग्निरन्नादः सैषा ब्रह्मणोऽति सृष्टिः । यच्छ्रेयसो देवानसृजयताय यन्मर्त्यः सन्नमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्याँ् हाष्यैतस्यां भवति य एवं वेद ।।६।।**

एवं तत्तद्रूपधरायां शतरूपायां स्वांशभूतायां स्त्रियां स्वांशेन मनुना मिथुनधर्मेण तत्तज्जातीः समुत्पाद्य सम्प्रति सनातनधर्मस्य स्तम्भभूतान् चतुरोऽपि वर्णान् कथं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

व्यरीरचदित्याह—अन्वयोऽप्येतदीयः, इति इत्थं रचितमिथुनधर्मसृष्टिः सः ब्रह्मयोनिभूतात् मुखात्, हस्ताभ्याम् उपलक्षणतया ऊरूभ्यां, पादाभ्याञ्च अभ्यमन्थत् अभिमन्थनमकरोत्। अलोमत्वेन, सादृश्यं, अनन्तरं मुखादेव अग्निं ब्राह्मणं च व्यरचयत्। हस्ताभ्याम् इन्द्रं तद्दैवतं, क्षत्रि ञ्च। ऊरूभ्यां वसुदैवतं वैश्यम्, पद्भ्यां सोमदैवतं शूद्रञ्च रचयामास। ननु श्रुतावस्यामग्निमात्रस्य रचनासंकेतनात् कथमन्येषां परिकल्पनेति चेत् श्रुतिस्मृतिवचनान्येव प्रमाणानि। तथा हि–**मुखादग्निरजायत** (शु०प०वे० ३१/११) **ब्रह्मणोऽस्यमुखमासीद्बाहू राजन्यः कृतः उरूतदस्ययद्वैश्यः पद्भ्यां ँ शूद्रो** अत्र मुखमित्यत्र ङसेः स्वादेशे सोरम् पूर्वसर्वर्णदीर्घः। ऊरू इत्यत्र ङसेरपि पूर्वसवर्णदीर्घः। सुपां सुलुक् पूर्वावर्णाच्छेयाडाड्याजालः। (पा० अ० ७/१/३९)। अमुं यज, अग्निं यज अमुमिन्द्रं यज, इति ब्राह्मणाय अग्निं, क्षत्रियाय इन्द्रम् एकैकं देवं यष्टुं, यदाहुः तदनुचितम्। एतस्य ब्रह्मण एव इयं विसृष्टिः विसर्गः वैषिष्ट्यं च मैथुननिरपेक्षप्रजननसामर्थ्यरूपम्। उ निश्चेन एषः प्रजापतिरेव सर्वे देवाः सकल देवांशिभूता, एवं यत्किञ्च इदं दृश्यमानम् आर्द्रं द्रवशीलम् असृजत् तद्रेतसः शुक्रात् तदेव सोमसंज्ञम् एवं सोमाग्निभ्याम् अन्नान्नादाभ्यां भक्ष्यभक्षकाभ्यां पूरितमेत्। यतो हि मर्त्यधर्मापि अमर्त्यान् असृजत् तस्मादियम् अतिसृष्टिः अतिशया सृष्टिः। एवं विभावयन् साधारणस्यापि ब्रह्मणो निजातिशायिरचनासामर्थ्यं भगवत्कृपाप्रसादरूपम्। सोऽप्यतिसृष्ट्यां प्रजापतिरिव परमेश्वरकृपाभाग् भवतीति मन्त्रासारः। नन्विदं विरूद्धं गीतातः, अत्र ब्रह्मणो मुखतः अग्निर्ज्येष्ठस्य ब्राह्मणस्य समुद्भवनिदर्शनम्? तत्र—

**चातुर्वण्यं मया सृष्टम्** (गीता ४/१३) इति वर्णचतुष्टयस्य भगवदुद्भवस्मरणम्? मैवं अत्र विरड् रूपस्य ब्रह्मणः तदुद्भावने मुखाद् मन्थनरूपा बाह्यक्रिया। मया सृष्टमित्यत्र प्रजननसामर्थ्यरूपा काचिदान्तरक्रियेति गृहाण। एवं **चातुर्वर्ण्यं मया सृष्टम्** (गीता ४/१३) इत्यत्र भगवता प्रयुक्तस्तृतीयैकवचनान्तोऽस्मच्छब्दः परिपूर्णमपरात्परनिस्तसकलदोषनिखिलसद्गुणकोषपरमात्मवाचकः। तथैव **अग्निमसृजत** (वृ०उ० १/४/५) इत्यत्र सृजेः कर्तृत्वेनाध्याहृततच्छब्दाभिधेयः प्रजापतिः विराट्परकः। तथा परब्रह्म विरजो जनयितृजन्यभावनया सम्बन्धत ऐक्यावधारणात् ब्रह्मभिन्नतया विरजस्तदुत्पादितचातुर्वर्ण्यजनकत्वे मयेति व्यवहारो न विरुद्धः। यद्वा चातुर्वर्ण्यजनकत्वे मयेति व्यवहारो न विरुद्धः। यद्वा चातुर्वर्ण्यजनने अभिन्ननिमित्तोपादानकारणं भगवान् सहकारिकारणं ब्रह्म इति न विरोधः, नैयायिकदृष्ट्या घटं प्रति दण्डादेरिव निमित्तकारणत्वं भगवति कपालद्वयसंयोगादेरिव असमवायिकारणत्वं प्रजापतावेत्यवगच्छ ॥श्रीः॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं परमात्मानमेव सृष्टेरभिन्नोपादानकारणतया निरूप्य मन्त्रेऽग्रिमे तच्छ्रयणीयतां श्रुतिरपूर्वतया कोटि कोटि जन्मान्तरीयकुत्सितसंसारमलीमसमानसानां समनादिकालीन-कुवासनासर्पिणीसंदष्टभगवद्भजनोपयोगिधिषणानां नितान्तमनर्गलाभेदवादप्रेत-समभिभूतविवेकानां प्रच्छननबौद्धजल्पितकोटिकोटिकुतर्ककल्पनाजल्पवान्तिदुर्गन्धदूषित-भगवदीयभद्रभावतद्रागानां सततमनियन्त्रितदुराग्रहग्रहिलप्रजल्पकप्रोद्गीर्णश्रुतिसिद्धान्त-विरूद्धचर्चाश्रवणसंजातकोटिकोटिकल्पपर्यन्तरौरवनरकप्रदप्रबलपातकसंमुष्टसत्संगमहामणीनां कपोलकल्पितकल्पनाकुटिलकरवालीविलूनपरमेश्वरभक्तिप्ररोहसमधिकाशान्तदुर्दान्तसंपर्क-भार्ष्ट्रसंभर्जितपरमात्मभजनबीजानां सामान्यजनानां कृते ससमारोहं विधेयतया विदधाति। शरणागतौ हि शरण्यस्य माहात्म्यज्ञानं पूर्वमावश्यकं, **विज्ञायप्रज्ञां कुर्वीत** इत्यादिश्रुतेः। एवं श्रुतिसहस्रतो निर्धूतमहामानसमलेन लब्धसद्गुरुकृपाबलेन समर्जितसत्संगकृपासंबलेन निराकृतभगवद्भक्तिप्रतिबंधकप्रबलप्रत्यूहसमूहबाधकेन सत्साधकेन सर्वशरण्यत्वेन विज्ञाय निश्चिते परिचिते च परमात्मनि षड्विधायाः शरणागतेः स्वत एव संभावना जागर्ति। अतस्तदुपबृंहणार्थं परमकरुणामयी माता श्रुतिः समुपदिशति मादृक्षान् निजस्वान्तसंलालित-श्रीसीतापतिपतितपावनपदपद्मनखचन्द्रज्योत्स्नादिदृक्षान् करालकलिकालकष्टकरवाल-व्रणितविवेकग्रीवान् जीवान्—

**तद्धेदं तर्ह्यव्याकृतमासीत्तन्नारूपाभ्यामेव व्याक्रियतासौनामायमिदꣳ रूप इति तदिदमप्येतर्हि नामरूपाभ्यामे व्याक्रियतेऽसौनामायमिदꣳ रूप इति। स एष इह प्रविष्टः। आनखाग्रेयो यथा क्षुरः क्षुर धानेऽवहितः स्याश्विम्भरो वा विश्वम्भरकुला ये तं न पश्यन्ति। अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति। वदन्वाक्पश्यꣳश्चक्षुः शृण्वञ्श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामान्येव। स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोऽत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एकं भवन्ति। तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत् सर्वं वेद। यथा ह वै पदेनानुविन्देदेवं कीर्तिꣳ श्लोकं विन्दते य एवं वेद॥७॥**

परमात्मैव जीवमात्रस्य शरणं, किन्तु प्रबलाविद्यावशात् तमजानन् खरसूकरकूकर इव विषयलम्पटो भ्राम्यन् भ्राम्यति दिशि दिशि। अतः श्रुतिराह यत् तावको न नवीनो परिचयः परमात्मना, परं मायया वञ्चितधियस्ते विस्मृतं परमशाश्वतं, नित्यं निरातङ्क-नित्यसुखावहं सकलकल्मषभयापहं चिरन्तनं सनातनं शरणमतोऽज्ञातज्ञापकतया विधिरेषोऽपूर्वः। ह निश्चयेन इदं, प्रलयस्य पश्चात् प्राक् सृष्टेः प्रलीनगुणकर्मपरिणामभूतकाल-कल्यर्वतकलेवरतया इदं साम्प्रतं प्रत्यक्षतया दृश्यमानं तत् पूर्वकल्पे सशरीरकं परं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रसिद्धं जडचेतनात्मकं जीवजातम् । तर्हि तस्मिन् परमात्मनि अव्याकृतं भग्ननाम-रूपकं भगवदीयदासमात्रनामकमेव नान्यत् किंचित् आसीत् । तस्मिन् परमात्मनि मातुरङ्के पुत्र इव परिश्रान्तेन्द्रियः समुज्झितसकलकार्यकलापो विगतसन्तापः शयान एवावर्तत, अर्थात् प्रलयेऽपि जीवसत्ता न विनष्टेति श्रुतेर्हार्दम् । अव्याकरणप्रकारमाह– अयं असौ नामा रामदासादिनामकः इदं रूपकः गौरादिवर्णावच्छिन्नमानवाद्यवयवविशिष्ट इति, अव्याकृतं परमात्मना निजचरणकमलतो न पृथक्कृतम् । श्रुतिरप्याह नदीसमुद्रदृष्टान्तेन यथा स्यन्दमानाः सरितः समुद्रसंगमात् प्राक् गंगादिनामवत्यः शुक्लादिरूपवत्यः परं सागरेण संगच्छमानाः, तत्रैव नामरूपे त्यक्त्वा कोटिकोटिनिजधाराप्रवाहन् विश्रमय्य विश्रान्तगतिका भवन्ति, तथैव जीवः सामग्र्येण प्रलये विसर्जितनामरूपो भगवत्येव प्रलीयते । पुनः सृष्टिकाले भगवत इव प्रबोधितः पूर्वाभुक्तकर्मविपाकजनित-भोगवासनास्मरणः विहितभगवतसानिध्यविस्मरणः अयम् असौ नामा यज्ञदत्तादिः इदं रूपः नामरूपाभ्यां निजकर्मविपाकलब्धाभ्यां जीवजातमेतलब्धदेवमानवदानवादियोनिकं परमात्मनैव व्याक्रियते । अयं पुरूषः, इयं स्त्री, इदं फलमित्यादि भिदा विभज्यते इदमेव तदिदमित्यादिमन्त्रसकलेन निर्दिश्यते । पुरूषार्थव्याकरणादिसामर्थ्यशून्यत्वं द्योतयितुं तत् इदमिति नपुंसकलिङ्गव्यवहारः । नामरूपाभ्यां परमात्मनैव व्याक्रियते पृथक् क्रियते । अत्र नामरूपाभ्यामिति **इत्थं भूतलक्षणे** (२.३.२१) इति पाणिनीय-सूत्रेण जटाभिस्तापसः इतिवत् तृतीया । व्याक्रियते इत्यत्र तर्हीति तच्छब्दवाच्यपरमात्मना इति कर्तृपदमध्याहृत्य कर्मवाच्यप्रयोगः । यत्तु कर्मकर्तृप्रयोगः इत्याहुः प्राञ्चः तदसंगतं, नपुसकलिङ्गव्यपदेश्ये जीवजाते नामरूपव्याकरणसामर्थ्याभावात् । एवं व्याकृतनामरूपे जीवजगति किमभूत् ? इत्यत आह—स एष इत्यादि आनखाग्रेभ्यः नखानामग्राणि नखाग्राणि तानि अभिव्याप्य मर्यादीकृत्य वा इति आनखाग्रेभ्यः नखाग्राणि मर्यादीकृत्य संपूर्णे शरीरे जीवस्य सः श्रुतिप्रसिद्धः । एषः श्रुतेः प्रत्यक्षभूतः तत्पतित्वेन संभावितः परमात्मा इह अस्मिन् पुरोदृश्यमाने तत्तच्छरीरावच्छिन्ने जीवे स्वाधिकरणतया प्रविष्टः इति श्रुतेः सरलार्थः । ननु प्रपूर्वकस्य विश्धातोः सकर्मकतया उत्तरदेशसंयोग-रूपफलकत्वेन गेहं प्रविशति इतिवत् इह इत्यत्र कथं न द्वितीया ? इति चेत् सत्यमत्र आधाराधेयभावस्य स्पष्टप्रतिपत्तये आधाररूपाधिकरणविवक्षा, गेहं प्रविशतीत्यादौ गमनक्रियाप्राधान्येन तिरोहिताधारत्वम्, अत्र तु जगदाधारस्यापि भगवतो जीवेन सह नित्यसख्यनिर्वहणधिया व्यापकत्वादैश्वर्यत्यागपुरःसरं क्षोदिष्ठस्यापि क्षणभंगुरस्य शरीरस्य आधारत्वेन स्वीकारः । अहो भगवतः संबन्धनिर्वहणप्रक्रिया इति शरण्यशीलगुणवर्णनाय द्वितीयामनादृत्य इहेत्यत्र विवक्षायामधिकरणस्य श्रुति भगवत्याः हार्दं प्रतिभाति । आनखाग्रेभ्यः इत्यत्र **आङ् मर्यादावचने** (१-४-८९) पाणिनीयसूत्रेण द्वितीया । स

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इह प्रविष्ट इत्यनेन प्रपित्सुप्रपत्तव्ययोर्दविष्ठत्वं निराकृत्य नेदिष्ठत्वं प्रत्यपादि । अथ सृष्टावेश्वरप्रवेशे किमपि प्रमाणान्तरं न वा ? अस्तीति ब्रूमः, **तत्सृष्ट्वा तदेवानुप्राविशत्** (तै० उ० २-१-६) इति श्रुतिरेव । अस्याअर्थः तत् प्रलीनगुणकर्मविपाकशरीरं प्रसुप्तशक्तिकं जीवजातं सृष्ट्वा सर्गप्रारंभे नामरूपाभ्यां संयोज्य तज्जीवजातमेव उपभोगक्षमं विधातुं नित्यमैत्रीं च निर्वोढुमनु आनुकूल्येन प्रविशत्, तमवाधमानो तस्मिन्विशे । अथ जीवशरीरे ईश्वरप्रवेशः सावयवतया निरवयवतया वा ? सावयवतयेति समुद्घोषयामः । ईश्वरस्य निरवयवत्वे कुत्रापि मानाभावात् । तदवयवित्वप्रतिपादकशताधिकश्रुतिव्याकोपाच्च । ननु भगवतः सावयवत्वे तत्र जननमरणादि षडूर्मिकाद्यान्तरविकारशरीरानित्यवादि दूषणानि दुर्वाराणीति चेत्, नैव नैव सावयवत्वेऽपि पूर्वोक्तदूषणानां भगवति प्रसराभाव एव तदीश्वरतया । यथोक्तं श्री भागवते—

**एतदीशनमीशस्य प्रकृतिस्थोऽपि तद्गुणैः ।**
**न युज्यते सदात्मस्थैर्यथा बुद्धिस्तदाश्रया ।।**

(भागवत—१-११-३८)

तात्पर्यमेतत् यत्—षोडशसहस्रपत्नीवल्लभोऽपि भगवान् श्रीकृष्णः तासां काममोहकोद्दामहावकटाक्षहाससुरतशौण्डचेष्टाभिः संयोज्यमानोऽपि नाभवत् तद्वसंवदः । इति न चित्रम् ईशस्य इदमेवेश्वरत्वं, यत् प्रकृतौ शरीरे जीवशरीरे च स्थितोऽपि तद्गुणैः सदाशरीरस्थैरपि तथैव न प्रभाव्यते, यथा तच्छरणमुपेता वैष्णवमतिः । न च यद्यदत् सावयवं, तत्तदनित्यं कार्यत्वात् घटादिवत् इत्याद्यानुमानबलेन परमेश्वरेऽनित्यता साधयितुं शक्येति वाच्यम्, **आकाशशरीरं ब्रह्म नित्योनित्यानां** इत्यादि श्रुतिप्रामाण्यबलेन बलीयस्त्वादनुमानाच्छाब्दस्य परमेश्वरे पूर्वोक्तानुमानप्रसरासंभवात् । शंखमध्वादौ श्रुतिविहित-शुद्धताविषये वान्तित्वादिहेतुकाशुचित्वसाध्यकाद्यनुमानवत् । एवमेकस्मिन्नेवशरीरे जीवात्मना सह परमात्मनोऽपि सद्भावस्य **समानं वृक्षं परिषस्वजाते** इत्यादि श्रुतिभिः सावयवत्वेनैव कण्ठरवेणोक्तत्वात् । तन्निरवयवता प्रतिपादनदुराग्रहस्तु श्रुतेः सुस्पष्टमवमानना **सर्वतः पाणिपादं तत्, रूपं रूपं प्रतिरूपोबभूव, प्रजापतिश्चरति गर्भे, सहस्त्रशीर्षापुरूषः** इत्यादि सहस्त्राधिकमन्त्रब्राह्मणात्मकवेदभगवद्वचनबलेन स्पष्टं भगवतः जीवशरीरे सावयवप्रवेशः निष्प्रत्यूहं सिद्धान्तित एव । दिव्यो मूर्तः **अरूपमस्पर्शमगन्धमव्ययम्** इत्यादिवचनानि तु भगवतः प्राकृतशरीरत्वमेव निराकुर्वन्ति । दिव्यशरीरतां तुं श्रुतयः समर्चन्त्येव । यत्तु मायावादिभिर्भगवत ऐन्द्रजालिकस्येव मायामया एव देहा इति भणितं, तत् सन्निपातजल्पितमेवोपेक्ष्यम् । **अजायमानो बहुधाभिजायते** इत्यादि श्रुतीनां प्रबलविरोधात् । न खलु निरवयवस्य परिष्वङ्गजननगर्भचरणादीनि संभाव्यन्ते, येषां

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**परिषष्वजाते बहुधाभिजायते चरतिगर्भे** इत्यादि श्रुतिसकलैः कण्ठरवतः प्रतिपादनम्। न च सावयवप्रवेशे एकस्मिन्नेव शरीरे जीवसंकीर्णतानुभूतिशंकेति वाच्यम् ? अनुप्राविशत् इति जीवानुकूल्यवाचकानुपसर्गश्रवणात् आनुकूल्येन प्राविशत् अनुप्राविशत् इत्यर्थः। जीवशरीरं प्रविशन्नपि भगवान् जीवस्यानुकूल्यमपि रक्षति । शरीरपरिणामानुसारि रूपधारणक्षमत्वात्। महत्तमे हस्त्यादौ तद्हृदयकोषानुसारं महत्तमरूपं बिभ्रत्, पिपीलिकादेः क्षुद्रतमे हृदयकोशे क्षोदिष्ठं रूपमादधानो विराजत इति हार्दमनूपसर्गस्य। ननु व्यापकः सन् कथमव्यापको भवतीति चेन्न, तस्योभयत्र सामर्थ्याक्षतेः अणोरणीयान् महतो महीयान् इत्यादि श्रवणाच्च। अथ सर्वेषां हृदयं प्रविष्टः सन् कथं न प्रत्यक्षं दृश्यते ? इति जिज्ञासायामाहसूक्ष्मत्वात् जीवानामज्ञाननाशितनेत्रत्वाच्च, तत्प्रतिपादयितुं दृष्टान्तद्वयं दृष्टान्तयति। यथा यथेत्यादि क्षुरधाने क्षुरिकाकोषे नापितादेः क्षुरो यथाश्मश्रुनिकृन्तनं नावलोकयते, यथा वा विश्वम्भरः विश्वं विभर्ति तथाभूतः विश्वम्भरकुलाये विश्वम्भर स्य अग्नेः कुलाये नीडे अवहितः न विलोक्यते तथैव ब्रह्मादेः पिपीलिकादेश्च हृदयकोशे क्षुरधानकाष्ठरूपे क्षुराग्न्यादिरिव योगमायासमावृतत्वात् न दृष्टिगोचरो भवति। अत आह तथैव तं न पश्यन्ति भगवद्विमुखाः अतः श्रयणीयः। यथोक्तं श्री गीतासु—

**नाहं प्रकाशः सर्वस्य योगमाया समावृत्तः ।**
**मूढोऽयं नाभि जानाति लोको मामजमव्यव्यम् ।।**

(गीता ७-२५)

नन्वत्र श्रुतौ एकस्यैव ब्रह्मणः पिधानवर्णनाय किमभिप्रायकमुदाहरणद्वयं यथा क्षुर इत्यादि—उच्यते । हृदयकोशो द्वेधा भवति बुभुक्षुविषयः मुमुक्षुविषयश्च, बुभुक्षुहृदयकोशेषु विराजमानब्रह्म समावृणोति। कठिनतमकपटपटेन महामोहवत्यविद्या। तेषामेव हृदयं श्रुत्या विश्वम्भरकुलायेनोपमितम्। द्वितीयश्चोपमानं मुमुक्षुहृदयकोषविषयकं, तत्र क्षुरधानमिव विद्यया कृतं साधारणमावरणं यन्मुमुक्षुणा भगवच्छरणैषुणा प्रयासमन्तरेण शीघ्रमुदघाटयितुं शक्यम्। अतः सुगमनिराकरणतया पूवमविद्याकृतावरणोदाहरणम्। यथा क्षुर इत्यादि, क्षुरं केशवपनाय नापितेन गृहीतं किमपि लघुलौहशस्त्रं तद् ब्राह्मणः उपमानं, नापितस्तत् कस्मिश्चिद् पटस्यौतके निक्षिप्य समावृत्य गच्छति खरधारमपि तत्क्षुरमावरणं छेत्तुं न प्रभावति। किन्तु तन्नापितः निस्प्रयासं निर्गमयति स्मश्रुवपनाय, तथैव मुमुक्षुहृदयकोशे विराजमानो भगवान् समावृतो योगमायाञ्चलेन साधकस्य साधनाप्रयासमपेक्षते । स साधकश्मश्रुवर्धन इव श्रीराममन्त्रराजजपादिसाधनप्रयासेन निराकृत्याविद्यावरणं क्षुरेणैव ब्रह्मणा सक्रियेण केशरूपस्वकीयभगवद्भजनसाधना-प्रत्यवायसमूहान् समूलं समुच्छिनत्तीति हार्दम्। अत आह, यथेत्यादि। क्षुरः धीयते

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निक्षिप्यते यस्मिन् तत् क्षुरधानं धारणार्थक डुधाञ् धातोः **करणाधिकरणायोश्च** पा० (अ० ३-३-११७) इति सूत्रेण अधिकरणे ल्युट् प्रत्यये अनुबन्धकार्ये अनादेशे क्षुरधानं तस्मिन् क्षुरधाने, अवहितः निक्षिप्तः यथा क्षुरः स्यात् न सर्वेषां दृष्टिगोचरः तथैव भगवानपि। किन्तु नापितस्तं क्षुरं निर्गमयति तथैव साधकोऽपि निराकृताविद्यावरणः पश्यति परमेश्वरपादपल्लवम्।

द्वितीयमुदाहरणं विषयासक्तहृदयस्थपरमेश्वरविषयम्। यथा विश्वम्भरः अग्निः परमात्मा च। अग्नौ गौणं विश्वम्भरत्वम्, परमात्मनि मुख्यम्। विश्वम्भरस्य कुलाये नीडे अवहितः तिरोहितदाहकत्वशक्तिःसन्निक्षिप्तः। स च मथ्यमानः सन् प्रकटीभवति। एवमेव विषयिणां हृदयेषु तिष्ठन्नपि परमात्मा तिरोहितपतितपावनत्वादिमाहात्म्यो मथ्यमानः पावक इव ज्ञानभक्त्यरणिभ्यां प्रकटो भूत्वा झटिति दहति प्रणतदुरितदारूणदारुवनम्। आवरणद्वितयेऽपि श्रीगोस्वामिपादाः ऊचुः——

**तेहि कर भेद सुनहु तुम सोउ। विद्या अपर अविव कूपा।।**
**एक रचई जग गुन वस जाके। प्रभु प्रेरित नहि निज बल ताकै।।**
(मा० ३-१५-४,५,६)

एतद्रूपान्तरम्—

**माय याः किल तस्यास्त्वं द्वौ भेदौ शृणु लक्ष्मण।**
**एका विद्या द्वितीया च अविद्या अपरा स्मृता।।**

**अविद्या नितरां दुष्टा दुःखरूपा भयावहा।**
**यस्या वशंवदाः जीवाः भवकूपे निपातिताः।।**

**एका सृजति संसारं सा विद्या त्रिगुणाश्रया।**
**प्रभुणा प्रेर्यमाणा हि न हि तस्याः निजं बलम्।।**

एवं सप्तम सोपानेऽपि भुषुण्डिः प्राहः गरुडम्—

**हरि सेवकहि न व्याप अविद्या। प्रभु प्रेरित तेहि व्यापक विद्या।।**
**ताते नास न होई दासकर। भेद भगति बाढहि विहङ्गवर।।**
(मानस ७-७८-२-३,)

एतद्रूपत्तरम—

**न वा हरेः सेवकमम्बरोक व्याप्नोत्यविद्या धृतघोरपाशा।**
**सम्प्रेरिता श्रीरघुनन्दनेन व्याप्नोति विद्या तमथाल्पकष्टा।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तस्मान्न नाशो भवतीह कुत्रचित् श्रीरामदास स्य च वैष्णवस्य ।**
**तस्मिन् सदा व्योमचराधिनायक सा भेदभक्तिः भगवत्यथैधते ।।**

एवं भगवत्या श्रुत्या मुमुक्षुविषयिहृदयानुसारम् अन्तर्यामिणः परमेश्वरस्यापि निवासोपमाद्वयी निरूपिता ।।श्रीः।।

स खलु परमात्मा सर्वेषां हृदयस्थः कथमुपास्यः यत्किञ्चिद्वैशिष्ट्योपलक्षितः उताहो सर्वात्मा शरण्यत्वेन वरणीयः ? इत्यपेक्षमाणं प्रत्याह अकृत्स्न इत्यादि ।

एकैकया क्रियया समुपलक्षितस्य परमेश्वरस्य समुपासने न सम्पूर्णता, हि यतो हि सः यत्किञ्चित्क्रियोपलक्षितः, अकृत्स्नः न सम्पूर्णक्रियाविशेषावच्छिन्नत्वात् तदेव विवृणोति । प्राणान् इत्यादिभिः यद्यपि जीवात्मना सह तच्छरीरे तदानुकूल्येन निवसन्नर्न्तर्यामिरूपः परमात्मा जीवात्मनः प्राणवाक्चक्षुश्श्रोत्रमनःप्रभृतीनि बाह्यान्तः करणानि निजचेतनाशक्त्या समवच्छिनत्ति, संजीवयति च । यथोक्तं श्री भागवते ध्रुवेण—

**योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां ।**
**संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।।**
**अन्यांश्चहस्तचरणश्रवणत्वगादीन् ।**
**प्राणान्नमो भगवते पुरुषाय तुभ्यम् ।।**

(भा० पु० ४-९-६)

तथापि तत्तदिन्द्रियावच्छेदेन तत् परिच्छेदसम्भावनया सर्वात्मनैव स उपास्य इति हार्दम् । इदमेव स्पष्टयति–प्राणन् निःश्वसन् स प्राणनामा भवति । वदन् वाक् क्रियां स्वीकृर्वन् वाक् वागिन्द्रियावच्छिन्नो भवति । पश्यन् रूपं साक्षात्कुर्वन् चक्षुः, शृणवन् शब्दान्, श्रोत्रं कर्णेन्द्रियमिति व्यवह्रियते । मन्वानः सङ्कल्पयन् मनः ।

एवं प्राणवाक्चक्षुश्रोत्रमनसां न स्वातन्त्र्येण काचित् सत्ता, परमेश्वरचेतनयैव तेषां प्राणत्ववाक्त्वचक्षुष्ट्वश्रोत्रत्वमनस्त्वविशेषाः सक्रियाः । एतानि तानि अस्य परमेश्वरस्य जीवात्मनः सखस्य कर्मनामनि, कर्मानुरुपनामानि कर्मनामानि शाकपार्थिवादित्वात् मध्यमपदलोपिसमासः । अर्थात् परमात्मैव जीवात्मकरणैः तत्तत् क्रियया तत्तद् विषयान् स्वीकुर्वन् तत्तदिन्द्रियनामभाग् भवति ।

तथा हि जीवात्मनः शरीरे सख्युर्गृह इव सखा न स्वोपकरणान्युपयुङ्क्ते । जीव-घ्राणेनैव प्राणति, जीवजिह्वयैव वदति, जीवचक्षुषैव चष्टे, जीवश्रोत्रेणैव शृणोति,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जीवमनसैव मनुते। अथवा प्राणवाक्चक्षुश्श्रोत्रमनःसु निजचेतनां संयोज्य निजं सखायं जीवात्मानं प्राणाद्यवच्छिननं विधाय गोस्वामिनं कृत्वा गवातीतोऽपि गोपालो गोरूपस्तिष्ठति सेवक इव, अतः इमानि प्राणवाक्चक्षुश्श्रोत्रमनांसि परमात्मनः परिच्छेदद्योतकनि कर्मनामानि, तैर्नोपास्यो भगवान् व्याप्यत्वात्। प्रपित्सुभिः शरणागतौ नामरूपलीलाधाम्नां चिन्तनमावश्यकम्। प्रपद्यमानसे कृते तत्र नाम मुख्यं, तच्च मुख्यं गौणमिति द्विधा, मुख्यं परमात्मनः सामग्यप्रतिपादकम् रामः कृष्णः नारायणः विष्णुः ब्रह्म परमात्मा भगवान् परमेश्वर इत्यादि। अवतारकाले च नामकरणसंस्कारे वशिष्ठ गर्गादिभिर्व्याहृतम् रामः कृष्ण इत्यादि।

गौणश्चापि द्विधा, गुणमाहात्म्यसूचकं गौणं, तच्च प्रथमं गुणकृतं पतितपावनः भक्तवत्सल इत्यादि। कर्मकृतं द्वितीयं रावणारिः कंससूदन इत्यादि एषु मुख्यनाम्नैव श्रयणीयो भगवान् इति श्रौताभिप्रायः।

अतः कर्मनाम्ना उपासनं निराकरोति, स इत्यादिना—यः सः शरणम् गच्छन् कश्चन साधकः एकैकम् एकैकेन्द्रियकर्मावच्छिन्नं प्राणादिष्वेकैकभावनया उपासते न स वेद, स न सामग्र्येणोपास्ते वेदनोपासनयोरत्र समानार्थकता। न च ज्ञानार्थकविदेः उपासनार्थकेन उपस्तिना सह कथं सामान्यमिति वाच्यम्? धातूनामनेकार्थत्वात्। हि यतो हि एषः परमात्मा एकैकेन प्राणादिकर्मणा अकृत्स्नः असम्पूर्णः तस्मात् कृत्स्नतायै कात्स्न्र्येन समुपासनीयो भगवान् प्रपद्यमानेन। अत आह–आत्मा सर्वव्यापकः आप्नोति-चराचरं व्याप्नोति इति आत्मा इति व्युत्पत्तेः। अत्र आत्मा इत्यनेन भगवतो व्यापकत्व-निर्देशः। अर्थात् तेनैव नाम्ना परमेश्वरमुपासीत, येन भगवतः षडैश्वर्यसम्पन्नता सर्वव्यापकता पतितपावनत्वभक्तवत्सलत्वकृपालुत्वकरूणालयत्वादयः समनुभूयेरन् निरस्तनिखिल-दुरितदूषणाः श्रीवैष्णवाः भावभूषणाः निरवधिककल्याणगुणगणाः। उपपत्तिमाह—आत्मा सर्वव्यापको भगवान् इत्येव भावनया उपासीत उपासनाँ कुर्वीत, उपासीत इति सर्वभावनोपासनाविधौ विधिलिङ्। यतो हि अत्रैव व्यापके एते सर्वे समाहृत्य एकं परमात्मतत्वं भवन्ति। अथ सर्वभावेनोपासनायां श्री भगवनपि श्रीगीतासु पार्थमसकृन् निर्दिशति।

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद् भजति मां सर्वभावेन भारत॥**

(गीता १५-१९)

**तमेव शरणं गच्छ सर्वभावेन भारत॥**

(गीता १८-६२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्री भागवतेऽपि श्रीराघवमन्दिरमानसमङ्गलमूर्तिः श्रीमन्मारूतिरपि गन्धर्वान् प्रति गायति—

**सुरोऽसुरो वाप्यथ वानरो नरः सर्वात्मना यः सुकृतज्ञमुत्तमम् ।**
**भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत् कोशलान्दिवम् ।।**

(भा० पु० ५-१९)

श्रीमानसेऽपि मुशुण्डिनं प्रति श्रीरामः—

**पुरुष नपुंसक नारिवा जीवं चराचर कोई ।**
**सर्वभाव भज कपटतजि मोहि परमप्रिय सोई ।।**

(मा० ७/८७)

रूपान्तरम्—

**पुमानुतोहो नितरां नपुंसको नारी जनो वाप्यथवा चराचराः ।**
**यः कोऽपि मां ध्यायति सर्वभावतः स निश्चलो मे परमप्रियो मतः ।।**

चाणक्यनीतावपि—

**पृष्ठेन सेवयेदर्कं जठरेण हुताशनम् ।**
**स्वामिनं सर्वभावेन परलोकममायया ।।**

अथ तर्हि केन नाम्ना भगवतसर्वभावसूचकेन भगवानुपास्यः । इति चेत् राम–नाम्नेति ब्रूमः—

**रामेति द्व्यक्षरं नाम चापभङ्गपिनाकिनः ।**
**गर्वभङ्गो भार्गवस्य प्राणभङ्गस्तु बालिनः ।।**

नन्विदं नितरामनुपपन्नम् औपनिषद व्याख्यानेषु कुतो राम नाम चर्चा ? इति चेन्मेवं वादीः अत्र व्यासवचनेनैवोत्तरयामः ।

**न संहिता सा नहि यत्र रामो नासौ हि वेदो नहि यत्र रामः ।**
**न सोऽस्ति मन्त्रो नहि यत्र रामो न तत् पुराणं नहि यत्र रामः ।।**

अथ तर्हि वेदेषु कुतोरामनाम्नश्चर्चा ? इति चेत् ऋग्वेद एव दर्शयामः ।

**भद्रो भद्रया सचमान आगात्स्वसारं जारो अभ्येति पश्चात् ।**
**सुप्रकेतैर्द्युभिरग्निर्वितिष्ठन्नुषद्भिर्वर्णैरभिराममस्थात् ।।**

(ऋग्वेद मं० १० सं० ३ मंत्र ३)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अस्यार्थो रामपरकः—भवद्रमयति भद्रः इति यास्कः । एवं भद्रो रामभद्रः भद्रया कल्याणरूपया सीतया सचमानः, सीतायाः कलयाणरूपत्वं स्वयंमहर्षिणा वाल्मीकिना श्रीचित्रकूटकुलपतिमुखेन प्रतिपादितम्—

**कुतः कल्याण सत्त्वायाः कल्याणाभिरतेः सदा ।**
**चलनं तात वैदेह्यास्तपस्विषु विशेषतः ।।**

(वा० रा० २-११६-९)

सचमानः संगच्छमानः, पितुरादेशात्, अ अरण्यम् आ आरात् अयोध्यातः सुदूरं दण्डकारण्यम् अगात् । पश्चात् त्रयोदशवर्षवनवासानन्तरम् जारः परदारलम्पटो रावणः स्वसारं भगिनीमिव अभ्येति अपहृत्य लङ्कां नयति स्म । अनन्तरं सुप्रकेतैः शोभनानि प्रकेतानि येषां तैः वानरैः अथवा शोभनानि प्रकेत नि अग्रभागाः येषां तथा भूताः श्रीरामशराः तैः, द्युभिः द्योतन्ते इति द्यवः तैः द्योतनशीलैः वाणैः वितिष्ठन् रावणं हन्तुं लङ्काम् आक्रम्य तिष्ठन् आसीद्रामः । हते रावणे द्युभिः दीप्तिमद्भिः सुप्रकेतैः शोभनस्फुलिङ्गैः युक्तः अग्निः उषद्भिः चमत्कुर्वद्भिः वर्णैः नीलपीतशुक्लादिवर्णोपलक्षितभूषणैरूपेतां सीतां गृहीत्वा अग्निः आज्यै रज्यमानो रूपवान् पावकः राममभि अस्थात् न्यासरूपां सीतां समर्पयितुमुपस्थितोऽभवत् । एवमौपनिषदमपि प्रमाणपुञ्जं प्राचुर्येण जागर्ति उपनिषत्सु । श्रीरामतत्वप्रतिपादिकाः सन्ति बह्वयः श्रीरामतापनीयोपनिवत् श्रीरामोत्तरतापनीयोपनिषत् श्रीरामरहस्योपनिषत् श्रीरामोपनिषत् श्रीसीतोपनिषदादयः । ननु भोः आसु काचिदपि न श्रुतिपथं नीतास्माकं नैव श्रीमदाद्यशंकराचार्यवर्यैव्याख्याता ? इति चेत् तेन किम् अष्टोत्तरशतसंख्यासु प्रायशः उपनिषत्सु दशैव व्याख्यातास्तैः । तर्हि किं तैरव्यारव्यातासूपनिषत्वं नास्ति । तैरपि स्वेन न व्याख्यातानां कौशीतिकीजाबालानृसिंहतापनीयोपनिषत्प्रभृतीनां वह्वीनामप्युपनिषदां निजसिंद्धान्तसमर्थनाय समुपन्यस्योदाहरणानि भूयांसि तासामुपनिषत्वं कंठरवेण मनसा च समङ्गीकृतमेव । तस्मात् भगवत्पादैरव्याख्यातानामुपनिषदां नास्ति प्रामाणिकत्वमिति कथमपि कथयितुं नशक्यते । वस्तुतस्तु ते विभ्यतिस्म वैष्णवोपनिषद्व्याख्यानात् कदाचित् तत्र रिङ्गत्तुङ्गतरङ्गविहितभवभयभङ्गभगवद्भक्तिगंगायां तेषामद्वैतवादप्रासादोऽपि वारिसात् न स्यात् । तिष्ठतु तावत्, सर्वभावेन आत्मत्वेन भगवदुपासनं निर्दिश्य साम्प्रतं विधित्वेन शरणागतिमेव प्रत्ययेनानीय प्रतिपादयति तदित्यादि मन्त्रशकलेन—तत् तस्माद्धेतोः एतत् इदमस्माभिः श्रुतिभिः प्रत्यक्षीक्रियमाणं भक्त्या परमसुलभं समस्तकल्याणगुणगणैकनिलयं सकलसुरेन्द्रमुनीन्द्रयोगीन्द्रपरमहंस-परिव्राजकाचार्य परिचर्यमाणचारुपदपद्मं श्रीरामाख्यं ब्रह्म अस्य पुरोदृश्यमानस्य सर्वस्य जगतः कर्तृभूतस्य पदनीयं प्रपत्तव्यम् । यत्तु कैश्चित् अस्य सर्वस्य इत्यत्रं निर्धारणेषष्ठी

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उक्ता तत्पूर्णमशास्त्रीयं प्रमत्तप्रलपितम् पूर्वं त्विदं विचारणीयं यत् केषां निर्धारणमत्र **यतश्च निर्धारणम्** (इति पा० अ० २-३-४१) पाणिनीयसूत्रस्य व्याख्यानावसरे भगवान् महाभाष्यकारः पतञ्तजलिः निर्धार्यमाणानां काञ्चिद् व्यवस्थां व्यवातिष्ठपत् । तत्र जातिगुणक्रियासंज्ञाभिर्यत्रनिर्धारणम् तेषु निर्धार्यमाणेषु बहुषु षष्ठी सप्तम्यौ यथा— बालकानां बालकेषु बा मैत्रः प्रतिभावत्तमः । अत्र बालकत्वजातेर्निधारणम् । किन्तु प्रकृते परमात्मनः का जातिः ? जातिर्नाम सामान्यं तच्च नित्यत्वेसत्येकत्वेसत्यनेकसमवेतत्वं, यथा ब्राह्मणत्वं तत् नित्यमनेकसमवेतञ्च । यदि ईश्वरः एकस्तर्हि तद् धर्मस्यानेकसमवेतता कथम् ? **एकोदेवः सर्वभूतेषुगूढः एकमेवाद्वितीयम्** इत्यादि सहस्त्राधिकश्रुतयः परमात्मनि एकत्वमेव साधयन्ति । भवतामेकत्वं तु एतावद्विशालं यत्र अनेकेषां नित्यानां जीवानामनेकतापि क्रोडीचिकीर्षिता । वयं तु परमेश्वरस्यैकत्वं जीवानामनेकत्वञ्च निःशङ्कं निःसंदेहं मन्महे । एवं भवतां मते ब्रह्मणो निर्धर्मतया अस्माकमपि मते विवच्छेदक जात्यादिवर्जिततया उभयेषाञ्च मते अस्माकं युष्माकमपि परमेश्वरस्यैकत्वे राद्धान्तिते कथं तत्र निर्धारणम् ? बहूनां मध्ये एकस्य निर्धारणम् भवति, यदि युष्माकं मते ह्यातिरिक्ता काचित्सत्तैव नहि सर्वत्राद्वैतं तर्हि बहुत्वंसमागतं कुतः, अहोपराकाष्ठा बालिशतायाः यस्यां शाखायां तिष्ठसि सैव स्वेन कुठारेण छिद्यते । यतो निर्धारणं भवति तत्र षष्ठी बहुवचनमायातीति सार्वजनीनव्याकरणसिद्धान्तः । इह तु अस्य सर्वस्येति स्पष्टं षण्ठ्येकवचनमहो दुराग्रहविक्षिप्ततायाः दुष्परिणामः यदस्य येषामिति एकवचनबहुवचनयोरपि अन्तरं न प्रतिभाति, भवतु, वृद्धास्ते न विचारणीयचरिताः । वस्तुतस्तु अत्र "पदगत्याम्" इति पाणिनीयधातुपाठानुसारं गत्यर्थकपदधातुः तस्मात् **अर्हे कृत्यतृतत्श्च** (पा० अ० २-३-१६९) इति पाणिनीयसूत्रेण शरण्यस्य शरणागतरक्षारूपार्हत्वप्रतिपादनाय, पद्यते इति पदनीयम् इति कर्मवाच्यलिङ्लकारप्रथमपुरूषैकवचनार्थे **तत्यतव्यानीयर** इति सूत्रेण अनीयरप्रत्ययः । एवं कर्तुरनुक्तत्वात् कर्मणि प्रत्ययेनानीयरा **कर्तृकरणयोस्तृतीया** इति सूत्रेण तृतीया प्राप्ता कर्तरि, तां प्रवाध्य कृत्यानां कर्तरि वा इति पाणिनीयसूत्रेण अस्य सर्वस्य इति कर्त्रर्थे षष्ठी । एवमनेन सर्वेण चराचरेण ब्रह्मादिपिपीलिकापर्यन्तेन श्रेयस्कामेन जीवजगता जगन्नियामको जगन्निवासो जगनमङ्गलनामधेयो जगन्मोहनो जगन्नाथो रघुनाथो ब्रह्म, तदेव अनेन सर्वेण पदनीयम् **आनुकूल्यस्य सङ्कल्पं गोप्तृत्व वरणं तथा । कार्पण्यं आत्मनिक्षेपं षड्विधां शरणागतिं**, विधाय हृदि महाविश्वासं विधाय सत्यसन्धस्य भगवतः कारुण्यसौलभ्याद्यपरिमितदिव्यकल्याणगुणगणाननुसन्धाय पदनीयं पद्भ्यां गन्तव्यमिव शरणयत्वेन श्रयणीयमिति हार्दम् । यतो हि भगवानेव सर्वलोकशरण्यः । यथोक्तं विभीषणेन वाल्मीकीयरामायणे—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**निवेदयत मां क्षिप्तं राघवायमहात्मने सर्वलोकशरण्याय बिभीषणमुपस्थितम् ।।**
(वा० रा० ६,१७,१७)

एवं शरणागतरक्षणयोग्यता भगवति, अस्य सर्वस्य इत्युक्त्या सर्वेषामपि प्राणभृतां शरण्यत्वेन भगवन्तमेव निश्चिकाय श्रुतिः । पदनीयत्वे हेतुमाह—यत् यतोहि अयं जीवमात्रस्य प्रपत्तिविषयः परमात्मा जीवानामभयदाता **अभयं निर्जरं ब्रह्म** इत्यादिश्रुतेः । आत्मा आप्नोति सर्वं व्याप्नोति तथाभूतः सर्वव्यापी, अतति सततं गच्छति सकृदपि स्मर्यमाणमन्दाकिनीजनकपदपल्लभग्नभक्तविपल्लवः संसारघोरसागरप्लवः करूणार्णवः श्रीराघवः भक्तानां कल्याणं करोति इत्यात्मा, अतः कल्याणकामेन प्रपत्तिविषयः करणीयः । आदत्ते भक्तदत्तपत्रपुण्यफलजलानि यः स आत्मा । यथोक्तं श्री गीतासु—

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।।**
(गी० ९-२६)

अत्र मे संग्रहश्लोकः—

**पत्रं श्री विदुरोऽददाद्भगवते पुष्पं गजेन्द्रो ददौ ।**
**प्रेम्णादाच्छबरी फलं खरभिदे श्रीरन्तिदेवो जलम् ।।**
**पत्रं पुष्पमथो फलं किल जलं प्रीत्या किराताः वने ।**
**श्रीरामाय समर्प्य भक्तिसहिता भूम्नोऽभवन् भूरिदाः ।।**

अथ परमात्मनि शरण्यत्वेन स्वीकृते अन्येषां देवानामुपासनं करणीयं न वा ? इत्यपेक्षायामाह–अनेनेत्यादिना अनेन शरण्यत्वेन स्वीकृतेनात्मना, यद्वा अनेन प्रपत्तिरूपेण भगवदुपासनेन हि एतत् तदतिरिक्तं सर्वं जीवजगत् वेद उपास्ते तरुमूलनिषेचनेन शाखा इव भगवदुपासनेन सर्वेषामुपासनं स्वयमेवाध्यवसीयते । सिद्धान्तं स्पष्टयितुमुदाहरणमाह यथा पदेनेत्यादि—यथा भ्रष्टानां गवां तासां पदेन खुरचिह्नेन ताः अनुविन्देत, अत्र शक्यार्थे लिङ् लब्धुं क्षमत इति भावः तथैव पदेन शरणागतिरुपेण मार्गेण संसारचक्रपरिभ्रमणपरिश्रमतो नितरां विस्मृतपदपाथोजं गामिव भक्तवत्सलमनुविन्देत आनुकूल्येन लब्धुं समर्थो भवति । यद्वा पदं व्यवसितं तेन शरणागतिव्यवसितेन जीवः परमात्मानं प्रापनोति अथवा पदं लक्ष्मलक्षणं तेन शरणागतिलक्षणेन पदेन तदुपलक्षितेन वेदनेन तं प्राप्नोति । एवं ज्ञानकाण्डीयश्रुतावपि भगवत्प्रपत्तव्यता प्रतिपादनात् कर्मोपासनाज्ञानानामपि वेदस्य त्रयाणां काण्डानां लक्ष्यभूता भगवच्छरणागतिरेव सा च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सेवकसेव्यभावमूलिका स च द्वैतमूलः तच्च जीवात्मपरमात्मभेदमूलकमिति धूलिसाद्भूतोऽयमद्वैतवादप्रासादः । एक एव कथं प्रपत्तृप्रपत्तव्यरूपतामाटीकते कथं, वा **यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः सत्यं ज्ञानमनन्तं ब्रह्म** इत्यादि श्रुतिशिखामणिभिः संसाधितसत्यानन्ताखण्डज्ञानधनस्य सर्वज्ञस्य सर्वसर्वेश्वरस्य अनन्तादित्यतेजसः पार्श्वे प्रसरेदविद्यातमः । कथं वा तस्यनित्यस्मृतिस्वस्वरूपविस्मृतिमन्तरेण तदेतत्पदनीयमस्य सर्वस्य इति श्रुतिरुपदेशः संघटेत । अहो उपदेशोगुरूणां सर्वज्ञशिखामणेः जगद्गुरोः परमेश्वरस्य तत्पत्नीभिः श्रुतिभिः दत्तोपदेशः मर्यादावहः किम् ? इति भगवत्पादाः एव विभावयन्तु तदनुयायिनो वा । कान्तासम्मितोपदेशः पत्न्या दीयत एव ? इति चेत् नैवं, स उपदेशः काव्ये, नैवोपनिषदः काव्यम्, उपनिषदस्तु वेदान्तः स च वेदस्यान्तिमोभागः सिद्धान्तरुपः । अतो वेदस्य अन्तः सिद्धान्तः यस्मिन् तद् वेदान्तं, यद्वा अति बन्धने इत्यस्माद् सनुमोच् प्रत्ययः । वेदमन्तति तात्पर्यप्रतिपादनेन निबध्नाति तथाभूतं वेदान्तदर्शनम् इति व्याचक्ष्महे वयं व्याकरण चुञ्चवः । वेदो हि प्रभुसम्मितोपदेशकृत्श्रुतिर्हि भगवतः पत्नी । न खलु परमप्रभोः प्रभुः प्रबुभूषति पत्नी । कान्तासम्मितोपदेशः पथोभ्रष्टाय पत्ये पत्न्या दीयते न खलु सत्पथादीनां प्रवर्तकः परमात्मा पथोभ्रष्टो यस्मै पत्नी प्रपत्तिमुपदिशेत् । **कान्तासमिमतोपदेशः** मन्दबुद्धीनां राजवंश्यादीनां घटते । न खलु भगवान् मन्दबुद्धिः । कान्तासम्मितोपदेशः काव्यं तच्च पौरूषेयं किन्त्वपौरूषेयोऽयं वेदस्य उपनिषदो भागः । यथोक्तं मम्मटेन काव्यप्रकाशे—

**काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।**
**सद्यः परनिर्वृतये कान्ता सम्मिततयोपदेश युजे ।।**

(का० प्र० १-२)

न खलु भगवत्पत्नी प्रगल्भा भगवन्तमुपदेष्टुं प्रभवेत् । श्रीमद्रामायणे वाल्मीकीये सीता विनीता स्वयं प्राह—स्मारये न तु शिक्षये । किञ्च भगवानेकः तत्कृते सर्वस्य इति प्रयोगो न संगच्छते । तस्मात् त्यक्त्वा दुरवग्रहं दुराग्रहं सर्वशरण्यं श्रीराममेव शरणं व्रजन्तु परिव्राजकाः । तत्फलमाह—एवं श्रुत्युक्तप्रकारेण शरणागतो भूत्वा यः कश्चन सेवकसेव्यभावेन सर्वभावतो भजते भगवन्तं वेद समुपास्ते सः कीर्तिः विभीषणादिव यशः श्लोकं भगवद्भजनोपयोगिसद्गुणसंघातं विन्दते लभते ।

**धूलिधूसरसर्वाङ्गः केलिबाणधनुर्धरः ।**
**लोलकान्तालको बालो राघवः शरणं मम ।।श्रीः।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ पूर्वमन्त्रे शरण्यत्वेन श्रेयस्त्वेन च आत्मापरपर्यायं परमात्मानं निरूप्य साम्प्रतं प्रेयस्त्वेनापि तमेव निरूपयति । जीवात्मा हि परमात्मनः प्रथमा विभूतिः **अहमात्मा गुडाकेश सर्वभूताशयस्थितः** (गी० १०-२) इति भगवदुक्तेः । सच जीवात्मा सर्वापेक्षया समधिकंप्रियः तदपेक्षया परमात्मनि निरतिशयप्रियता तस्मात् प्रेयस्कामेनापि परमात्मैव श्रयणीयः । श्रेयः प्रेयसोरत्रैव समुपलब्धेः इममेव सिद्धान्तं पल्लवयति प्रस्तुतमन्त्रेण—

**तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा । स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यतीतीश्वरो ह तथैच स्यादात्मानमेव प्रियमुपासीत । स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति ।।८।।**

तत् श्रुतिप्रसिद्धमेतत् इदं परमात्मतत्वमात्मतत्वादपि प्रियतरमिदमेव विवृणोति– पुत्रात्प्रेयः, पुत्रोहि प्रीतिभाजनं तदपेक्षया प्रियमात्मतत्वं तसमाद्पि प्रियतरं वित्तात् रत्नादेः कलत्रादपि स्त्रियोऽपि रत्नत्वेन व्यवहारात् तस्माद्पि प्रियमात्मतत्वं तस्मात् प्रेयः, एवम् अन्यस्मात् सर्वस्मादपि प्रीतिभाजनात् संसारात् अन्तरं निकटमात्मतत्वं ततोऽपि निकटतरत्वात् । एवं यः आत्मनः परमात्मनः प्रियं ब्रुवाणः वदन् ईश्वरः भगवत्प्रीतिभाजनं शपति तव प्रियं रोत्स्यति प्राणहीनं भविष्यति तथा तथैव भवति भगवता भक्तवचनं रक्ष्यते । प्रह्लादगिरं सत्यां कर्तुं स्तम्भादपि प्रादुर्बभूव भगवान् नृसिंहः इति श्रुतिस्मृतिपुराणादिषु प्रसिद्धम् । यथोक्तं श्री भागवते—

**सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ।**
**अदृश्यतात्यद्भुतरूपमुद्वहन् स्तम्भे सभायां न मृगं न मानुषम् ।।**

(भा० ७-८१७)

एवं यः उपास्ते तस्य प्रियं प्रमायुकं मरणशीलं न भवति । भगवदुपासकस्य प्रह्लादकस्य कुलमवध्यं भगवता प्रीतिपरमेश्वरेणैव स्वयं वरोदत्त इति पुराणेतिहासेषु प्रसिद्धम् ।। श्रीः ।।

अथ ब्रह्मजिज्ञासाप्रकरणे ब्रह्मणि समेषां समाहारः तर्हि ब्रह्म किमजानात् इति ब्राह्मणाः स्वाचार्यें पप्रच्छुः—

**तदाहुर्यद् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते ।**
**किमु तद् ब्रह्मावेद्यस्मात्तत्सर्वमभवदिति ।।९।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ जननमरणचक्रे परिकलितषड्वर्गनक्रे घोरे संसारसागरे निमज्जन्तो मुमुक्षवो ब्राह्मणाः समित्पाणयः तत् तस्मादेव ब्रह्मतत्त्वजिज्ञासवः आहुः स्वाचार्यं पप्रच्छुः। प्रश्नाकारमाह—मनुष्याः मननशीलाः मनवाः लब्धब्रह्मज्ञानाधिकाराः मन्यन्ते समवधारयन्ति निश्चिन्वन्तीति भावः। ब्रह्मविद्यया अतिशयेन ब्रह्मति इति ब्रह्म। बृंहयति सम्पूर्णान् भक्तान् यत् तत् ब्रह्म। तद् विद्यते ज्ञायते यया सा ब्रह्मविद्या, तया ब्रह्मविद्यया सर्वं भविष्यामः इति कल्पयन्ति भविष्यत्कालिकसत्रनिर्देशात् भविष्यन्तः समग्रतां लप्स्यमानाः भविष्यामः इति मन्यन्ते, तर्हि किं इतः पूर्वं श्रुत्यनुसारम् **सर्वं खल्विदं ब्रह्म सर्वं समापनोऽसि ततोऽसि सर्वः** इति श्रुतिस्मृतीभ्याम् एवं सर्वभावसम्पन्नं ब्रह्म किमवेत्, किमज्ञाषीत् किमुपासत वा येन ज्ञानेनोपासनेन वा वा सर्वमभवत्। ज्ञानमुपासनं वा स्वस्मादन्यस्य, निजात् वयसो वा क्रियते, ब्रह्मणः किमन्यत् किं वारीयः **त्वमस्य पूज्यश्च गुरुर्गरीयान्** इति स्मृतेः इति प्रश्नबीजम् ॥श्रीः॥ अथोत्तरमाह आचार्य—

**ब्रह्म वा इदमग्र आसीत्तदात्मानमेवावेत्। अहं ब्रह्मास्मीति। तस्मात्तत्सर्वमभवत्तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभव ँ् सूर्यश्चेति। तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं ँ् सर्वं भवति। तस्य ह न देवाश्च नाभूत्या ईशते। आत्मा ह्येषा ँ् स भवति। अथ यो ऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवँ् स देवानाम्। यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरूषो देवान्भुनक्त्येकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥१०॥**

वा निश्चयेन अग्रे सृष्टेः पूर्वमिदं श्रुत्या वर्ण्यमानं साधकानामतिसन्निकृष्टं ब्रह्म परमात्मैव प्रलीनसकलजीवजातं निजोदरे **यत्प्रयत्यभिसंविशन्ति** इति श्रुतेः, असीत् प्रधानसत्तया वर्तत। ततः परमात्मा आत्मानं निजं भक्तानां कृते सतत मननशीलं अवेत् अजानात्। किमितः पूर्वमात्मत्वेन तस्य ज्ञानं नासीत् ? ओमिति ब्रूमः। पूर्वं तत् निजभक्तब्रह्मरूपं गुणं विस्मृतवदिव पश्चात् भक्तैः स्मारितं निजोदरस्थैः अजानात्। वेदनाकारमाह—अहं ब्रह्मास्मि अहं प्रलीनजीवसत्ताकं परमात्मतत्त्वं ब्रह्म निजप्रपन्नजीववर्धनक्षमम् अतो इमान् बृंहयेयम्। तस्मात् एतज्ज्ञानादेव सर्वं सर्वान्सृष्ट्वाताननुप्रविश्य सर्वान्तर्यामितया सर्वमभवत्। देवानां मध्ये यः यः अहं ब्रह्मास्मि अहं जीवभूतः भगवदंशः ब्रह्मास्मि ब्रह्मणे परमात्मने अस्मि। अत्र तादर्थे चतुर्थी **सुपां सुलुक्** इत्यनेन सोर्लुक् दीर्घश्चः न खलु जीवः ब्रह्मो भवति **सोऽश्नुतेसर्वान् कामान्**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सद्ब्रह्मणा विपश्चिता** (तै० उ० १-१) इति श्रुतेः । सः ब्रह्मणा विपश्चिता इत्यत्र जीवस्य ब्रह्मणा सह नित्यसद्भाव उक्तः । तस्मात् अहं ब्रह्मणे अस्मि अहं ब्रह्मणा अस्मि अहं ब्रह्मणः सकाशादस्मि अहं ब्रह्मणोऽस्मि अहं ब्रह्मण्यस्मि इति पञ्चधा विग्रहः करणीयः । टा, ङे ङसि, ङस् ङि, विभक्तीनां **सुपां सुलुक्** इत्यनेनैव पूर्वोक्तप्रकारेण लुक् । एवं ब्रह्मणा सह आत्मनः सेवकसेव्यसम्बन्धं विभावयन् तदभवत् तस्य अभवत् इति भावः, षष्ठ्याःलुक् पूर्वोक्तरीत्या, तथैव ऋषीणामहं ब्रह्मास्मीति वाक्येन पञ्चविभक्तिविपरिणामेन यथारूचि पञ्चसु कतममप्येकं भावं विभाव्य तदीयोऽभवत् । ऋषीणां नारदिदिसनकादिः मनुष्याणां ध्रुवादिः भरतादिः गोपिकादिः श्रीमदाद्यरामानन्दाचार्यः तुलसीदासादयश्च । एवमेतद् ब्रह्म आराध्यत्वेन ऋषिर्वामदेवः सर्वात्मभावनया प्राह प्रतिपेदे निश्चिकाय । अहं ब्रह्मणो दासभूतः मनुरभवम् अहमेव सूर्योऽभवम्, एतर्हि अस्मिन्समयेऽपि अहं ब्रह्मास्मि अहं ब्रह्मदासोऽस्मि य एवं वेद जानाति सः सर्वं भवति सम्पूर्णतामेति ।

अत्रेदमवधेयम्—अहं ब्रह्मास्मीत्यत्र ब्रह्मशब्दो नैव प्रथमैकवचनान्तः । कथं ज्ञातमिति चेच्छृणु–अत्रैव मन्त्रे ऋषिवामदेववचनात् । स आत्मनो मनुतां सूर्यतां च प्रतिपादयति, अहं मनुरभवम् अहं सूर्यश्च इत्यादि । यदि जीवः ब्रह्म भवितुं शक्नुयाद् तदा ऋषिवामदेवः कथं न ब्रह्म भवेत् स आत्मनः ब्रह्मभावं कथं न प्रतिपादयेत्, यतो नाभूत् ब्रह्म ततो नावदत् । तद् भावं तस्माद् देवा अपि विभूत्या ऐश्वर्येण न ईशते न नियच्छन्ति वैष्णवानां खलु सर्वतः स्वातन्त्र्यात् । सः एष येषां जनानां देवानां आत्मा प्रियः व्यापको वा भवति । एतद् विपरीतः अन्यदेवतोपासकः अहं भगवदीय-व्यतिरिक्तोऽस्मीति भावना न सम्यक् जानाति, स तु पशुरिव देवानां बलिबाहकः, यथा बहवः पशवः मनुष्यान् पालयन्ति तथैव ते देवान् भुञ्जन्ति । भगवदीयत्वे देवाः खिन्नाः भूत्वा तेषूपद्रवमुत्पादयन्ति । तथाहि यः असौ अयम् देवत्वविशिष्टः अन्यः विभूत्यपरिच्छेदेन परमात्मा व्यतिरिक्तः अहम् अन्यः सम्बन्धावच्छेदेन परमात्मतः-अन्यः इति धारणया परमात्मतोऽन्यामिन्द्रत्वाद्यवच्छिन्नां देवतामुपास्ते सः पशुः ।

पश्यति ब्रह्मातिरिक्तभावनाया सर्वं यस्तथाभूतः । पाश्यते बध्यते ज्ञानसुखकर्मसङ्गनिद्रालस्यप्रमादाख्यैस्त्रैगुण्यैः षड्भिर्बन्धनैः यस्तथाभूतः । पशुत्वं नाम धर्महीनत्वम् आहरनिद्राभयमैथुनेषु सामान्यत्वेऽपि पशुमनुष्यौ धर्म एव विशिनष्टि । तत्र पशुधर्महीनः मनुष्यो धर्मवेत्ता । धर्मस्त्रिधा प्रवृत्तिलक्षणो निवृत्तिलक्षणः प्रपत्तिलक्षणश्च । प्रपत्तिलक्षणस्तावत्—सकामो नित्यनैमित्तिकप्रायश्चित्तोपासनादिश्रुत्युक्ति-कर्मानुष्ठानजनितापूर्वविशेषः । निवृत्तिलक्षणश्च—स एव सह मुमुक्षया निष्काम इति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्राञ्चः । नव्यास्तु धर्मो द्विधा–सामान्यो विशेषश्च, सामान्यः खलु प्रवृत्तिनिवृत्तिलक्षणो मोक्षपर्यन्तो द्विधा । विशेषश्च ततो व्यतिरिक्तो भगवत्प्रपत्तिरूपो भागवत धर्मः । ननु भागवतधर्मे लोकातिशायिनि किं मानमिति चेत् श्रुतिस्मृतिवचनान्येव । श्रुति वचनं यथा **मुमुक्षेवै शरणमहं प्रपद्ये** (श्वे० उ० ६-१८) **तदेतत् पदनीयमस्य सर्वस्य** (बृ० उ० १-४-७) । स्मृतेर्यथा **सर्व धर्मान् परित्यज्यमामेकंशरणं व्रज** (गीता १८-६६) । अत्र सर्वधर्माः सर्वे: च ते लोकधर्माः तेषां सामान्यतया परित्यागः मामेकं शरणं व्रजेति, व्रज धातोः स्वीकारार्थो विशेषतया भगवच्छरणागतिरूपः धर्म स्वीकारे विधिः । ननु विधित्वं कथमागतमितिचेत् "व्रज" इति **विधि निमन्त्रणामन्त्रणाधीष्ट संप्रश्नप्रार्थनेषु लिङ्** (पा० अ० ३-३-१६१) इति सूत्रस्य परिशेषभूत**लोट् च** (पा० अ० ३-३-१६२) इत्यनेन विधावेव लोट्लकारस्य विधानात् । अप्राप्तप्राप्तिज्ञापकवचनतया विधिरेषोऽपूर्वः । ननु धर्मत्यागे अधार्मिकत्वापत्तिः प्रत्यवायश्च ? इत्यत् आह—**अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामिमाशुचः** (गीता १६-६६) । सामान्यधर्मस्य हि विशेषधर्मेण बाधे पूर्णतः शास्त्रीयनियमापालनात् पापानि पीडयिष्यन्त्येव । न हि इति चेत् अज्ञानतया पीडयिष्यन्ति तदा तटस्थोऽपि धर्मसंस्थापनाय गृहीतावतारोऽहं मध्यस्थो भूत्वा तेभ्यः मोक्षायिष्यामि चिन्तां मा कुरु, विशेषधर्मपरिपालनात् त्वं नाधार्मिको भविष्यसि इति भगवदीयो आशयः । पाद्मेऽपि गोकर्णः धुन्धुकारिकुकृत्यतो जातनिर्वेदं वनं परिव्रजन्तं पितरमात्मदेवंलोकधर्मत्यागपुरःसरं भागवत धर्म एव प्रवर्तयति । यथा—

**धर्मं भजस्व सततं त्यज लोकधर्मान्**
**सेवस्व साधुपुरूषाञ्जहि कामतृष्णाम् ।**
**अन्यस्य दोषगुणचिन्तनमाशु मुक्त्वा ।**
**विष्णोःकथारसमहो नितरां पिव त्वम्।।**

(प० पु० उ० ४-८०)

अत्र प्रथम चरणे लोकधर्मत्यागं भगवद्धर्मस्वीकारञ्च विधित्वेन प्रतिपाद्य शेषेषु त्रिषु द्वयोर्विवरणमुक्तम् । एवं जीवस्य भगवद्भजनपूर्वकपरमेश्वरप्रपत्तिरेव मुख्यो धर्मः इत्थम् प्रपत्तिलक्षणोऽयं धर्मः विशेष इति जगद्गुरु श्रीमदाद्यरामानन्दाचार्यचरणपङ्कज-मधुव्रतस्य मे मतम् । तमनन्यभावनया भक्तिधर्ममुज्झित्वा विविधदेवोपासनाव्यस्तः पशुरेवेति श्रौतो राद्धान्तः । सः देवानां पशुः परतन्त्रः धर्महीनस्स्वार्थसाधकः तेभ्यो देवाः हस्तिभ्य इव भारं वाहयन्तो गृह्णन्ति भूयो ददति श्वभ्यः इवाल्पम् । यथोक्तं विनयपत्रिकायां श्रीगोस्वामिपादैः—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्वारथके साथी मेरे हाथी स्वान लेवादेई ।**
**काहू के न पीर रघुवीर दीन जनकी ।।**

(वि० प० ७५)

एतद्रुपान्तरम्—

**स्वार्थस्य मित्राणि च मामकानि आदानकाले मयि हस्तिभावम् ।**
**दाने तु मां कुक्कुरएव मत्वा तुदन्त्यहो कोऽपि न दीनपक्षः ।।**

तदेव विवृणोति यथेत्यादिना—ह वै इति निश्चयार्थौ निपातौ, यथा येन प्रकारेण बहवः पशवः हस्तिगवाश्वमहिषीवृषभकुक्कुरादयः निजनिजयोग्यतानुसारं मनुष्यं भुञ्ज्युः अपालयन्, अत्र **व्यत्ययो बहुलम्** (पा० अ० ३-१-८५) इत्यनेन लडर्थेलङ् अडभावः झेरुसादेशश्च पालयन्तीत्यर्थः । एवम् एकैकः वैष्णवधर्मवर्जितः पुरूषः हस्त्यश्वादिरिव देवान् भुनक्ति, तत्तत्कामप्रेर्यमाणः धूपदीपादिबलिभिः पालयति । अत एव देवाः इमान् भगवद्भजने न नियोजयन्ति । उपपत्तिमाह—एकस्मिन् पशौ हस्त्यादौ आदीयमाने आह्रियमाणे मनुष्यस्य अप्रियं भवति, बहुषु आह्रियमाणेषु किम् । तातपर्यं यत् कस्यचिद् गृहस्थस्य कस्यांश्चित् सेवायां भग्नायां स कियत् खिद्यते, यदि कदाचित् तस्य तत्तत्कार्यनियुक्ताः बहवोऽपि पशवः अन्यत्र गच्छेयुः तदा तस्य मनसि कियती वेदना स्यात् स्वार्थैकचक्षुष्ट्वात् । तस्मात् कारणात् यदि मनुष्या एतत् ब्रह्म आत्मीयत्वेन स्वाराध्यत्वेन च विद्युः अवगच्छेयुः तदा एषां देवानां न प्रियं, एभ्यो न रोचते इमे विभावयन्ति यत् यदि सर्वे मनुष्याः भगवदीयाः भविष्यन्ति अन्यदीयाः पशव इव तदा कोऽस्माकं बलिमाहरिष्यति, यतो हि वैष्णवाः न खलु केषांचिदपि सुराणां किङ्करा ऋणिनो वा । यथोक्तं भागवते निमिं प्रति नवयोगेश्वरसम्वादप्रकरणे योगेश्वरेण भगवता करभाजनेन—

**देवर्षि भूताप्तनृणां पितॄणां न किङ्करो नायमृणी च राजन् ।**
**सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम् ।।**

(भा० पु० ११-५-४१)

अत एव देवाः अन्यत्र गच्छतः स्वपशून् असहमानो मनुष्य इव, अहं ब्रह्मास्मि इति महावाक्यानुसारमहं ब्रह्मणे अस्मि इति ब्रह्मार्थभावनया शान्तवात्सल्यदास्य-सख्यमधुरभावेषु एकतमेन केनचित् भगवन्तं भजतो जनान् निरोद्धुं कोटिशः प्रयत्नान् उपद्रवरूपान् आचरन्ति । यथोक्तं श्रीमानसे सप्तमे सोपाने—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इन्द्रिय सुरन न ज्ञान सोहाई, विषय भोगपर प्रीति सदाई ।**

(मा० ७-११८-१५)

एतद्रूपान्तरम—

**ऐन्द्रियेभ्यो हि देवेभ्यो न ज्ञानं रोचते हरेः ।**
**तेषां विषयभोगेषु प्रीतिरेव निरन्तरम् ।।**

अत एव स्वस्वसेवकांस्ते न निवारयन्त्युन्मार्गगामिनोऽपि । यथा प्रह्लादं तुदन्तुं हिरण्यकशिपुं न न्यषेधत् विधाता । निजभक्तमपि कदाचित् शिवोऽपि श्री रामं द्विषन्तं श्रीसीताहरणप्रवृत्तं स्वसेवकमपि दशशीर्षं न निवारयामास । इमामेवावधारणामौपनिषदीं कयाचिदपूर्वया काव्यचातुर्या तुरीयचरणारविन्दमकरन्दरसास्वादनसमातुरस्तुलसीदास-महाराजः प्राह श्री विनयपत्रिकायाम् । तत्सम्पूर्णमपि पद्यप्रसूनं सरूपान्तरमनुपदमेव निदर्शयामि सुधियां सतां श्रीवैष्णवानामनधीतब्रजभाषाणाञ्च सुस्पष्टप्रतिपत्तये—

**हरि तजि और भजिए काहि ?**
**नाहिन कोउ राम सो ममता प्रनत पर जाहि ।।**

**कनक कसिपु विरंचिको जन करम, मन अरू बात ।**
**सुतहिं दुखवत बिधि न वरज्यो काल के घर जात ।।**

**संभु सेवक जान जग, बहु बार दिए दस सीस ।**
**करत राम-विरोध सो सपनेहुँ न हटक्यो ईस ।।**

**और देवनकी कहा कहौं स्वारथहिं के मीत ।**
**कबहुँ काहु न राखि लियो कोउ सरन गयउ सभीत ।।**

**को न सेवत देत संपति ? लोक हू यह रीति ।**
**दास तुलसी दीन पर एक राम ही की प्रीति ।।**

(विनयपत्रिका २१६)

एतद्रूपान्तरम्—

यथासंभवं सामग्र्येण निजरचितेषु श्लोकेषु निदर्शयितुं पद्यस्य रूपान्तरश्लोकाः—

**भजे कमन्यं हरिमन्तरेण कृपालुचित्तं करूणासमुद्रम् ।**
**न कोऽपि रामेण समस्त्रिलोक्यां यस्यास्ति नित्यं प्रणते ममत्वम् ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भक्तो हिरण्यकशिपुः किलपद्मयोने
वाचा तथैव मनसा खलु कर्मणा च ।
प्रह्लादमात्मजमहो नितरां तुदन्तं
यान्तं कृतान्तसदनं न विधिर्न्यषेधीत् ।।

जगद्विजानाति जनं त्रिशूलिनो
पौलस्त्यजं पङ्क्तिशिरांसि योऽसकृत् ।
समर्पयामास भवाय सोऽपि ना
स्वप्ने न्यषेधीदपि रामवैरतः ।।

का कथेतरदेवानां स्वार्थसख्यमुपेयुषाम् ।
क्वापि कोऽपि न पान्तिस्म सभीतं शरणं गतम् ।।

कः सेवकाय न ददाति धनं निजाय
लोके प्रसिद्धिमगमत् किल रीतिरेषा ।
दीने परन्तु वितनोति हि राम एकः
प्रीतिं परां तुलसिदास इति ब्रवीति ।।

अहं ब्रह्मास्मि वाक्यस्य आस्वयं ब्रह्मणेऽस्म्यतः
ब्रह्मदासो भजेद् भूत्वा विपरीतः पशुस्मृतः ।।
इत्थं स्वाचार्यपादानां पादपद्मप्रसादतः ।
रामभक्तार्था सिद्धान्ते व्याख्यातेयं श्रुतिर्मया ।।श्रीः।।

अथ ब्राह्मणक्षत्रियसम्बन्धं परस्पराश्रयं निर्वक्ति ब्रह्मेत्यादिना—

ब्रह्म वा इदमग्र आसीदेकमेव तदेव ँ सन्नव्यभवत् । तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणीन्द्रोः वरूणः सोमो रूद्रः पर्जन्यो यमो मृत्युरीशान इति । तस्मात्क्षत्रात्परं नास्ति तस्माद् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म । तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एन ँ हिनस्ति स्वा ँ स योनिमृच्छति स पापीयान्भवति यथा श्रेया ँ स ँ हिँ सित्वा ।।११।।

अग्रे भगवतो नारायणस्य नाभिकमले भगवदिच्छयैव समुत्पादितं ब्रह्म चतुर्मुखाख्यं सृष्टिरचनाशक्त्यावच्छिन्नमेकमसहायं प्रथमं वा सृष्टावासीत् । ननु भगवन्नाभिकमलोत्पन्नो

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधाता पुरूषः तत् कृते ब्रह्म इति नपुंसकलिङ्गनिर्देशोऽनुचितः ? इति चेन्न, तस्य सृष्टिरचनासामर्थ्यरूपपौरूषाभावद्योतनायैव ब्रह्म इति क्लीबत्वनिर्देशः । तपसा पूर्वं नारायणनाभिकमलजातोऽपि क्लीबः प्रजाजननाक्षम आसीदिति भावः । इदमेव स्पष्टयति एकमसहायं सृष्टिरचनापाटवप्रतियोगिकाभाववत् सत् सत्तामात्रेणैव वर्तमानं न व्यभवत् सृष्टिरचनै न क्षमोबभूव । वि पूर्वस्य भू धातोः सामर्थ्यार्थकत्वात् व्यभवदित्यस्य ब्रह्माभिन्नैकर्तृकभूतकालावच्छिन्नसामर्थ्यानुकूलव्यापार इति शाब्दबोधः । अनन्तरं तद् ब्रह्म भगवच्छक्त्युपबृंहितं क्षत्रं क्षतात् कष्टात् त्रायते इति क्षत्रम् । क्षत्रिय जात्यभिमानावच्छिन्न-चैतन्यविशिष्टं श्रेयः प्रशस्यत्तरं रूपमवयवसंस्थानमत्यसृजत् व्यरचयत् । देवत्रा देवेषु एतानि यानि यावन्ति क्षत्रियावयवावच्छिन्नानि, इन्द्रः सुराणामधिपः वरूणो जलचराणां स्वामी, सोमः ब्राह्मणानां राजा चन्द्रमा, रुद्रः सर्पादीनामधीश्वरः पर्जन्यश्चपलापतिः, यमः पितृणामीश्वरः मृत्युरोगाणामधिशासी, ईशानः पशूनां नियन्ता, इमानि सर्वाणि शासकस्वभावानि एतत् परिणमनभूतानि । तस्मात् शासकस्वभावान् क्षत्रात् राजन्यात् परम् उत्कृष्टरक्षकं किमपि नास्ति । **शस्त्रेण रक्षिते राष्ट्रे शास्त्रचिन्ता प्रवर्तते** इति नीतिवचनानुरोधात्, कुशलशासके जाग्रति राष्ट्रे च रक्षमाणे तेन ब्राह्मणो निश्चिंतं ब्रह्मशास्त्राणि च सेवते । यथोक्तं रघुकाव्ये कौत्सेन—

**सर्वत्र नो वार्तमवेहि राजन् नाथे कुतस्त्वय्यशुभं प्रजानाम्**
**सूर्ये तपत्यावरणाय दृष्टेर्लोकस्य कल्पेत कथं तमिस्रा ।**

(रघुवंशमहाकाव्यम्-५-१३)

वार्तं कुशलं, क्षत्रस्य परत्वं समर्थयति—तस्माद्धेतोः राजसूये एतन्नामके यज्ञे महोच्चसिंहासने राजपदे अभिषिच्य अधस्तान् नीचैरुपविश्य क्षत्रियमुपास्ते वर्णाभिमानं त्यक्त्वा राष्ट्ररक्षायै नियुयुक्षुस्तस्मै सगौरवमधिकारं ददाति । एवं ब्रह्मतेजोमयं यशः क्षत्र एव राजन्ये ददाति दशरथादौ वशिष्ठादिर्यथा । सा एषा ब्रह्मजातिरेव क्षत्रस्य द्वितीयवर्णस्य योनिः प्रजननहेतुः । यद्यपि राष्ट्ररक्षार्थं ब्राह्मणेन नियुज्यमानो राजा परमतां गच्छति राजसूये सर्वतः पूज्यो भवति । तथापि राजसूयस्यान्ते ब्रह्मैव उपनिश्रयति ब्राह्मणमेव समाश्रयते सुयोनित्वात् लब्धाधिकारोऽपि श्रीरामादिवत् ब्रह्मण्यदेवः । एवं लब्धाधिकारो यो राजा एनं ब्राह्मणं हिनस्ति इन्द्र इव विश्वरूपं, सहस्रार्जनपुत्रा इव जमदग्निं, स स्वां योनिं निजमातरमेव ऋच्छति मातरमेव निहन्ति इति भावः । स्वस्माच्छ्रेयांसं राजाधिकारमदेन ब्राह्मणं हिंसित्वा निहत्य पापीयान् ब्रह्महत्यादि पातकवान् भवति । विश्वरूपवृत्रासुरहनने इन्द्रस्य ब्रह्महत्याद्वयी श्रीभागवतादौ प्रसिद्धैव ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ तार्तीयकवर्णोत्पत्तिमाह—

**स नैव व्यभवत्स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसनो रूद्रा आदित्या विश्वेदेवा मरुत इति ।।१२।।**

एवं स ब्रह्मा यदा धनोत्पादने न व्यभवत् नाक्षमत् तदा विशं तदधिकारिणमसृजत् । देवजातानि गणशः गणं गणं वसवः रूद्राः आदितिनन्दनाः द्वादशविश्वेदेवाः त्रयोदशमरूतः सप्तसप्त आख्यायन्ते संकीत्यन्ते तानि देवेषु वैश्यधर्माणीति भावः धनदातृत्वात् ।।श्रीः।।

अथ शूद्रोत्पत्तिमाह—

**स नैव व्यभवत्स शौद्रं वर्णमसृजत पूषणमियं वै पूषेय ँ हीद ँ सर्वं पुष्यति यदिदं किञ्च ।।१३।।**

शुचा द्राति आत्मानं निहन्ति इति शूद्रः, अथवा शुचा उ निश्चयेन द्रवति धैर्यं त्यजति इति शूद्रः । प्रायेण भगवद् भजनविहीनः यः कश्चनापि शूद्रत्वं गच्छति ब्राह्मणोऽपि आत्रिदिवसेभ्यस्त्यक्तसन्ध्यः शूद्र इव द्विजकर्मणो बहिष्क्रियते भगवद्भजनशीलः चतुर्थवर्णोऽपि द्विज इव पूज्यतां गच्छति । तथोक्तं श्री भागवते—

**विप्राद् द्विषड् गुणयुतादरविन्दनाभ**
**पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।**
**मन्ये तदर्पितमनोवचने हितार्थ**
**प्राणं पुनाति सकुलं न तु भूरिमानः ।।**

(भा० पु० ७-९-१०)

अत एव वेदेषु शूद्रो नानादरभाजनम् । यत्तु कुत्रापि निरादरवचनानि तानि शूद्राचरणपरकानि न तु चतुर्थवर्णविषयाणि, अत एव छान्दोग्ये क्षत्रियकुलोद्भवं राजानमपि शूद्र इति कथयित्वा तिरष्करोति तुरीयवर्णस्थशकटवाहकोऽपि । अत एव महाभारते शूद्रोऽपि विदुरः पूज्यते । यत्तु शूद्राणां कर्णयोः वेदमन्त्रध्वनि पतेत् चेत् तयोः शीशकेन पिधानं करणीयमिति अतिरञ्जनैषा, अन्यथा तिर्यग्योनिगतस्यापि जटायुषो द्विजतिरिव कथमन्त्येष्टिः क्रियेत वेदवेदाङ्गतत्वज्ञेन भगवता श्रीरामेण । तथाहि श्रीमद्वाल्मीकीयरामायणे—

**यत्तत्प्रेतस्य मर्त्यस्य कथयन्ति द्विजातयः ।**
**ततस्वर्गगमनं क्षिप्रं तस्य रामो जजाय ह ।।**

(वा० रा० ३-६८-३४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं पर्यालोचनेन स्पष्टमिदं राद्धान्तितं भवति—यत्र शूद्रनिन्दावर्णनपरा प्रत्युत् शूद्राचरणगपरा । तत्र वैदिकीमपि चोत्पत्तिं निदर्शयामः चातुर्वर्ण्यमीमांसायां वैदिकोऽयं मन्त्रवर्णः **ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ऊरुतदस्ययद्वैश्यः पद्भ्याँ शूद्रो ऽ अजायत ।।** (शु० य० ३१/११)

अत्र **पद्भ्यां शूद्र अजायत इत्युक्तौ** चतुर्थवर्णनिरादरवादो नाशङ्कनीयः । पदे एव शिरः पातयित्वा प्रणामक्रियते, पदे एव पूज्यते श्रेष्ठानाम्, पदत्राणमेव पादुकारूपं पीठे व्यवस्थाप्यते गुरुणामाचार्याणाञ्च न तु शिरस्त्राणं करत्राणम् । चरणोदकमेवगृह्यते गुरूणां ब्राह्मणानां च न तु मुखोदकं कराद्युदकं वा । आदरार्थं पूज्यपादपूज्यचरण इत्येव कथ्यते । न तु मुखचरणादि । योषितोऽपि चरणस्पर्शे आशिषः समर्पयन्ति सम्मानिताः सत्यः मुखादिस्पर्शेतु समनुभूयाऽवमाननां पदत्राणादिभिः ताडयन्ति । इत्थं महिमामयचरणाज्जायमानः कथं निरादरभाक्, तत्राऽपि भगवतश्चरणं तस्माज्जायमाना मन्दाकिनी गङ्गा निरवधिपवित्रतामयी ततो जायमानः शूद्रः कथमपवित्रः इति विचारयन्तु सुधियः । वस्तुतः वर्णानां व्यवस्था निर्दोषा तन्निष्ठा महानुभावा अपि पवित्रा एव, यदि चतुर्थो वर्णोऽपवित्रो भविष्यत्, तर्हिकथं चातुर्वर्ण्यमर्यादामण्डनो मर्यादा पुरूषोत्तमो श्रीरामः निषादमश्लेषत् ? यथोक्तं मानसे—

**कहहिं लहेउ एहि जीवन लाहू । भेटेउ राम भद्र भरिवाहू ।।**

(मानस २-१९७-७)

एतद्रूपान्तरम्—

**कथयन्ति ह्ययं प्राप्तो लाभं वै जीवनस्य च ।**
**रामभद्र इमं द्वोर्भ्यां सप्रेम परिसस्वजे ।।**

एवमस्पृश्यतावादोऽपि शूद्राचरणपर एव । किं बहुना ब्राह्मणस्यापि गृहिणी दिनत्रयमार्तवे स्पर्शानर्हा भवति । एवं देवेषु शूद्रः पूषा पोषणात् , इयं मही अपि पूषा इदं सर्वं सैव पुष्यतीति ।।श्रीः।।

अथ धर्मस्वरूपं निर्वक्ति—

**स नैव व्यभवत्तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान्बलीयाँ समाशँ सते धर्मेण यथा राज्ञैवं यो वै स धर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तँ सत्यं वदतीत्येतद्ध्येवैतदुभयं भवति ।।१४।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमपि असमर्थः सन् धर्मनामकं श्रेयोरूपमत्यसृजत् । धर्मो नाम तत्तद्वर्णमर्यादा-नियन्त्रणशक्तिविशेषः । अत एव अबलीयान् बलीयांशं धर्मेण बलवत्तरमासंशते प्रशंसति, यथा राज्ञः धर्मः तथैव । सः धर्मः कः ? सत्यमेव, सत्यधर्मयोर्नास्त्यन्तरम् । सद्भ्योहितं सत्यं सत्यभाषण एव धर्मः धर्म एव सत्यम् अत एव सत्यवादिनं धार्मिकं सत्यवादिनमिति कथयन्ति उभयमपि एकैकस्मिन् समाश्रितम् ।।श्रीः।।

इदानीं आत्मोपासनस्य आवश्यकतां वर्णयति आत्मात्र परमात्मार्थपरः, परमात्मना चातुर्वर्ण्यं सृष्टं विराट् रूपतो ब्रह्मणस्तु मुखबाहूरूपद्भ्यो ब्राह्मणक्षत्रियविट्शूद्राः जाताः । अतः स्वस्ववर्णाश्रमनिरतः निजनिजवर्णानुसारं श्रुतिविहितकर्मकुसुमैः परमात्मानं समर्यन् उपासीत् । यथोक्तं श्रीगीतासु —

**यतः प्रवृत्तिर्भूतानि येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।।**

(गी० १८-४६)

**यतः प्रवृत्तिर्भूतानी येन सर्वमिदं ततम् ।**
**स्वकर्मणा तमभ्यर्च्य सिद्धि विन्दति मानवाः ।।**

(गी० १८-४६)

**तदेतद् ब्रह्म क्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याँ । हि रूपाभ्यां ब्रह्माभवत् ।**

**अथ यो हवा अस्माल्लोकात्स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाननुक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवं-विन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवात्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्रत्सृजते ।।१५।।**

तदेतत् श्रुतिप्रसिद्धं ब्रह्म, तदेव ब्रह्मक्षत्रियवैश्यशूद्ररूपेण परिणतम् । अत्र सर्वत्र आत्मतत्त्वं त्वेकमेव, देवेषु तदेव ब्रह्म ब्रह्मा चतुर्मुखो विधाता अभवत् । पुनः ब्राह्मस्याग्रजो अग्निः ब्रह्मणैव ब्राह्मणः, क्षत्रिषेण इन्द्रादिना दत्तचेतनः क्षत्रियः, वैश्येन वस्वादिपञ्चदेवगणेन समुपबृंहितः वैश्यः, शूद्रेण पूष्णालब्धसामर्थ्यः शूद्रः एवं अग्निना रचितत्वात् देवेषु अग्नौ एव लोकमिच्छन्ते । मनुष्याः ब्राह्मणे द्वाभ्यामेव रूपाभ्यां अग्निब्राह्मणाभ्यां व्याप्तमेतत् । अतः अस्मात् लोकात् अत्रल्यब्लोपे पञ्चमी । इमं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कर्मभूमिरूपं मानवशरीरं प्राप्यापि स्वमात्मीयमात्मधनरूपं लोकं परमप्रकाशरूपं साकेतलोकं तन्निवासं श्रीराममदृष्ट्वैव असाक्षात्कृत्यैव सः एनम् अविदित्वा अनुपास्यैव भुनक्ति मोघारम्भं महितदम्भं जराजीर्णकलेवरं भुनक्ति । तद् दुष्परिणाममाह—अनुक्तः नानुकूल्यतया उक्तः वेदः स्वरविहीनतया पठितः, यथा वा अकृतं कर्म उभावपि निष्फलम् तथैव आत्मोपासनाबहिर्मुखस्य, अनेवंविदः अस्य महत्पुण्यं कृतं कर्म क्षीयते । अतः लोक्यते इति लोकः तादृशं प्रत्यक्षदर्शनमात्मानं परमात्मानं श्रीराममेव उपासीत् । यः आत्मानमुपास्ते भजते भगवन्तमनन्यभावनया अस्य कर्म न क्षीयते, आत्मनः परमात्मनः सकाशाद् यद्यत्कामयते इच्छति तत्तत्परमात्मा सृजते सृष्ट्वा तस्मै समर्पयति ।।श्रीः।।

अथ यथापशुरिति अब्रह्मविदः पशोरिव पारतन्त्रमुक्तम् । तर्हि कैः कैः कर्मभिः केषां केषां प्राणिनां लोकः भोगसाधनं भवति भगवद्विमुखः—

**अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितृणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वया ँ स्या पिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेदेव ँ हैवं विदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमा ँ सितम् ।।१६।।**

लोकः उपभोगसाधनं त्यजते ददाति, अनुभूते स्वाध्यायमधीते वा, शयते निवासं ददाति, विन्दति प्रायति, स्वापदाः कुक्कुरादयः, वयांसि पक्षिणः । असौ गृही होमदाराभ्यां देवानां, स्वाध्यायेन ऋषीणाम्, तर्पणात् पितृणां, निवासभोजनाभ्यां मनुष्याणां, तृणोदकेन पशुभ्यां उपजीवनेन स्वापदपिपीलिकावयसां लोकः एवं ते तैलस्यारिष्टिमिच्छन्ति । अतः येषामरिष्टकामनया अयं गृही गृहान्ननिर्विद्यते शततजननमरण-रूपसंसारसागरे निमज्योन्मज्य परिवर्तपरः सीदति । तस्माद् भगवदीयो भूत्वा सर्वेषां धर्मान् त्यक्त्वा सर्वाधारं शिरिषकुसुमसुकुमारं करूणाकूपारं दशरथकुमारं संसारसारं समाराध्य तरति मोहमहोदधिम् । इत्येव मीमांसितं विचारितम् श्रुतिभिः ।।श्रीः।।

अथ पुत्रवित्तलोकैषणाः प्रवृत्तिबीजभूताः पाङ्क्तकर्माणि च वर्णयित्वा तेभ्यो निर्वेदमुपदिशति । पाङ्क्तं नाम पञ्च पञ्चानां समूहः । सर्वं पाङ्क्तं पञ्चभूतानि, पञ्च तन्मात्राः, पञ्च प्राणाः पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्दियाणि पञ्च पर्वा अविधा पञ्चैव तृषा, पञ्च यज्ञाः, इत्यादि । इदमेव प्रपञ्चपति—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मेस्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छ ँ् श्चनातो भूयो विन्देत्तक्षमादप्येततर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथवित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वागजाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैव ँ् श्रोत्रेण हि तच्छृणोत्यातमैवास्य कर्मात्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरूषः पाङ्क्तमिद ँ् सर्व यदिदं किञ्च तदिद ँ् सर्वमाप्नोति एवं वेद ।।१७।।**

सृष्टेः अग्रे इदम् आत्मैव जीवात्मैव आसीत्, एकाकी सन् सः ईश्वरलीलया एषणात्रयवशे जातः। तिस्रः एषणाः भविन्त पुत्रैषणा वित्तैषणा लोकैषणा च। अतः सोऽकामयत् ऐक्षत् मे मम जाया पत्नी स्यात् यस्यामहम् पुत्ररूपं प्रजायेय इत्यनेन पुत्रैषणा। वित्तं मे इति वित्तैषणा, कर्म कुर्वीय इति लोकैषणाः एतावानेव एषणा-त्रयरूपो जीवात्मा कामः, इत्थं साम्प्रतमपि जीवः कामयति। कामानामनन्तत्वात् यावदेकैकं न प्राप्नोति तावत् अकृत्स्न इव अपूर्णमनोरथश्चेखिद्यते। तस्मात् इदं लौकिकं कामजातं त्यक्त्वा श्रीरामं ब्रह्म समाश्रयेत्। तस्य सकलकामपूरकत्वात् पूर्णकामत्वाच्च। यथोक्तं भागवते श्रीसूतेन—

**अकामः सर्वकामो वा मोक्षकाम उदारधीः ।**
**तीव्रेण भक्तियोगेन यजेत पुरूषं परम् ।।**

(भ० पु० २-३-१०)

यथाध्यात्मिकरीत्या पूर्णतायै प्रयतनीयम्। वाग्वाणी एव जाया, मनः मनस्तस्याः पतिः ताम्यां वाङ्मनसाम्यां सञ्जन्यमानप्राण एव प्रजा इति पुत्रैषणा, पूर्तिः वित्तं द्विधा मानुषं दैवं च, चक्षुः मानुषं वित्तं तेन सम्पूर्णं दृश्यजातं लभ्यते। श्रोत्रं देववित्तं दिव्यं विज्ञानं शृणोति। आत्मा शरीरमेव कर्म तेनैव लोकैषणापूर्तिः। अत्र संग्रह श्लोकः—

**प्राणात् प्रजातः पूर्णा स्यात् मनोवाचा सुतैषणा ।**
**चक्षुः श्रोत्रेण वित्तस्य लोकस्य च शरीरतः ।।**

एवं वाक्प्राणचक्षुश्श्रोत्रत्वचः पाङ्क्ताः एवमेव यज्ञादयः सर्वे पाङ्क्ताः। य एतद् वेद सोऽपि समस्त प्राङ्क्तवान् भवति।

**पाङ्क्तान् ज्ञात्वा लसत्पाङ्क्तो विरज्य पाङ्क्तयूथतः ।**
**पाङ्क्तः पङ्क्तिरथस्यैव ज्येष्ठं पुत्रं हरिं श्रयेत् ।।श्रीः।।**

**इति बृहदारण्यकोपनिषदि प्रथमाध्याये भाष्ये पङ्क्तिप्रक्रियावर्णनपरं चतुर्थब्राह्मणं सम्पूर्णः ।।श्रीः।।**

**।। श्री राघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। पञ्चमब्राह्मणम् ।।

**सुग्रीवपञ्चमं सीतापञ्चमं पञ्चमं श्रितम् ।**
**पञ्चमं श्रितरामं तं नत्वा व्याख्यामि पञ्चमम् ।।**

अथ पूर्वोक्तस्य परमात्मनः सृष्टिप्रपञ्चं सप्तान्नतया वर्णयन्ती श्रुतिः ततो वैराग्यमुपपिपादयिषुः पञ्चमप्राप्तये पञ्चमं ब्राह्मणं प्रारभ्यते । ब्रह्म वेद तदधीते तज्जातौ जातः इति ब्राह्मणः । अत्र **तदधीते तद्वेद** पा० अ० ४/२/५९ इत्यनेन ब्रह्मवेदमधीते, ब्रह्म परमात्मानं वेद जानाति, तज्जात्युत्पन्नो ब्राह्मणः इति व्युत्पत्तौ ब्रह्मन् शब्दात् द्वितीयान्तात् अण् प्रत्यये भत्वाट्टिलोपे प्राप्ते **ब्राह्मोऽजातौ** (पा० अ० ६-४-१७१) इत्यत्र अजातौ इति पर्युदासात् तज्जातिभिन्नार्थ एव टिलोपे समनुशिष्टे भगवता पणिनिना प्रकृते इति टिलोपाभावात् आदिवृद्धौ णत्वे ब्राह्मणः । ब्राह्मणत्वञ्च ब्रह्मवेतृ-ब्रह्माध्येतृजात्युत्पन्नत्वे सति ब्रह्मवेतृत्व ब्रह्माध्येतृत्व सम्पन्नत्वं, तद् ब्राह्मणभाषितत्वात् मन्त्रग्रामोऽपि ब्राह्मणः । अथ प्रजापतिना परमेश्वरेण निजपारमार्थिकपुत्रस्य जीवस्य उपभोगार्थं सप्त अन्नानि विरचितानि **अद्** धातुरदादौ प्रथमो भक्षणार्थः **अद् भक्षणे** इति पाणिनीयधातुपाठात् । तत्र अद्यन्ते इति अन्नानिः आद्यन्त वा यानि तानि अन्नानि इतिं विग्रहे भूतकाले क्त प्रत्यये दकारस्य नकारे विभक्तिकार्ये अन्नशब्दस्य निष्पत्तिः । अर्थात् पञ्चभिरपि ज्ञानेन्द्रियसंज्ञकैश्चक्षुश्श्रोत्रघ्राणरसनात्वग्भिर्यत् किमपि जीवात्मना शब्दस्पर्शरूपरसगन्धत्वावच्छिन्नम् उपभुज्यते तदन्नं भवति । अदनं भोगः तदाश्रयो विषयो वा अन्नम् । पिता पुत्रस्योपभोगसाधनम् उपभोगसामग्रीश्च रचयित्वा सङ्कल्प्य वा समानयतीति लोकप्रसिद्धं, विमूढाः पक्षिणोऽपि शावकार्थं तद्भोग्यपदार्थानानयन्ति किमुत कारुणिकशिखामणेः समस्तकल्याणगुणगणकल्लोलिनीवल्लभस्य श्रीसीतावल्लभस्य परमेश्वरस्य विषये । भगवता सृष्टेः प्रारम्भे सुप्तोत्थितानां जीवानां तत्तत्कर्मानुसारं पञ्चकृतभूतैः पाञ्चभौतिकं शरीरमुपभोसाधनं पुनः उपभोगविषयीभूतानि सप्तान्नानि रचितानि । तानि चेत्थं प्रथमं साधारणं भक्ष्यभोज्यलेह्यचोष्यनामकं चतुर्विधं तत्सर्वं भक्ष्यम्, पुनः हुतं द्वितीयं, प्रहुतं तृतीयं, वाक् चतुर्थं, प्राणपञ्चमं, मनः षष्ठं पयः सप्तममुपलक्ष्यणतया तद्विकाराः दधिनवनीतधृतादयः सप्तमम् इति सप्तान्नानि । यथा प्रातः काले सुप्तोथितान् जिघत्सावतो निजपुत्रान् लालयति माता तेभ्यो भोजनं ददाति, परस्परकलहवारणार्थं विभजति च, तथैव भगवानपि मातेव साधारणमन्नं सर्वेभ्यः व्यभजत् । विशिष्टं षड्विधं तत्र सर्वोपाधिशून्याय जीवात्मने वाक्प्राणमनांसि उपभोगसाधनानि प्रायच्छत् । देवेभ्यः हुतं प्रहुतमिति द्वयं प्रायच्छत्, पशुभ्यः पयः इति विभागक्रमः । स एवात्र आब्राह्मणसमाप्तिं वर्णयति । तत्र सूत्रभूतप्रथमोमन्त्रः शेषास्तद्व्याख्यानभूताः इत्यवतरणिका ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ प्रकृतमनुसरामः —

**यत्सप्तान्नानि मेधया तपसाजनयत्पिता । एकमस्य साधारणं द्वे देवानभाजयत् । त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् । तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा । यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन । स देवानपि गच्छति स ऊर्जमुपजीवतीति श्लोकाः ।।१।।**

अथ गायत्रीछन्दोविधया चतुर्भिः श्लोकैः प्रस्ताव्यं प्रस्तौति—पिता परमेश्वरः **शृण्वन्तु विश्वे अमृतस्य पुत्राः** इति **श्रुते पिताहमस्मि जगतो** (गीता ९-१७) **पिताऽसि लोकस्य चराचरस्य** (गीता ११-४३) इत्यादि स्मृतेः पातृत्वात् पिता परमेश्वरः परब्रह्म श्रीरामः मेधया विशुद्धबुद्ध्या तपसा दिव्येन ज्ञानेन, यत्तु मेधया तपसा इत्यस्य ज्ञानेन कर्मणा इति व्याचक्षिरे तदसंगतं तपःशब्दस्य कुत्रापि शास्त्रे कर्मार्थत्वानुपलब्धेः । **तप आलोचने** इति धातुः, आलोचनं हि ज्ञानरूपं न तु कर्ममयम्, तस्माद् पूर्वं मेधाशक्त्या प्राक्कल्पे कृतानि जीवशुभाशुभकर्माणि परिगणय्य ततस्तपसा तत् फलभूतानि सप्तधा भोग्यानि वस्तूनि समालोच्य अजनयत् । इदमेव समर्थयति **यथा पूर्वमकल्पयत्** इतिमन्त्रवर्णैरपि । यद्वा भगवतस्तिस्रःशक्तयः संवित् संधानि आह्लादिनी चेति आह्लादिनी तु भगवदभिन्ना, संवित् शक्तिर्मेधा संधानि तपोरूपा, ताभ्याम् । यद्वा महः जीवः तम् एधयतीति मेधा योगमाया कृपाशक्तिः तपः लीलाशक्तिश्चेति, यद्वा मेधा माया अव्यक्तनाम्नी तपः कालरूपा ताभ्याम् । ननु भगवति निर्धर्मके एतावच्छक्तिकल्पनं श्रुतिविरूद्धम् इति चेन्न—

**परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया: च ।**

(श्वेताश्वरतर ६/८)

इति भगवच्छक्ति वैपुल्यवर्णनमेव प्रमाणम् । श्रूयते इति श्रुतिः । श्रुतिनिगादितप्रश्रवण निर्देशेन कल्पनाशङ्कापङ्कोऽपि प्रक्षालितः । अत्रेदमवधेयम्–जीवो भोक्ता तद्भोग्यं जगत् भोगश्च संसारचक्रभ्रमणम् परमात्मा भोक्तृभोगभोग्यत्रयातीतः, अतः पिता । ननु तदभोक्तृत्वे किम् मानम् **तयोरन्यः पिप्पलं स्वाद्वत्ति अनश्नन् अन्यो अभिचाकशीति** इति मुण्डकश्रुतिरेव । एवं पिता परमपिता परमेश्वरः मेधया पूर्वोक्तया बुद्ध्या कृपाशक्त्या संविच्छक्त्या वा तपसा पर्यालोचनेन ज्ञानेन **यस्य ज्ञानमयं तपः** इति श्रुतेः लीलाशक्त्या योगमायया यत् यदिति लुप्तद्वितीयाबहुवचनान्तयच्छब्दः यानीत्यर्थकः । यानि प्रसिद्धानि भुक्तपूर्वाणि जीवैः सप्तसंख्यकानि अन्नानि सामान्य-विशेषाणि यवादीनि हुतादीनि च अजनयत् प्रादुर्भावयत् । तेषु एकम् एकशब्दोऽत्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रथमार्थः प्रथमम् अन्नं पञ्चविषयात्मकम् अस्य सकल शरीरावच्छिन्नस्य जीवत्वजातिविशिष्टस्य सर्वस्य प्राणिमात्रस्य सामान्यम्। अस्य साधारणमित्यत्र **शेषे षष्ठी,** शेषश्च सम्बन्धः प्रातिपदिकार्थकारकादिव्यतिरिक्तः स च भोक्तृभोग्यभावरूपः। एवमस्येति जात्याख्यायां बहुवचनम्। अथ द्वे हुतप्रहुतनामके देवान् दैवीसंपदमालम्ब्यमानाम् अवयवादिगुणविशिष्टान् अभाजयत्, सोऽचीकरत्। तथा हि देवाः द्वे अभजयन् पिता प्रैरयत् इति पिता द्वे देवान् अभाजयत्। अत्र परमपिता परमात्मा प्रयोजकः देवाः प्रयोज्याः हुतप्रहुते च प्रयोजने इति विवेकः। अथ देवानित्यत्र कर्मत्वं कथमिति चेत् **गतिबुद्धिप्रत्यवसानार्थ शब्दकर्माकर्मकाणामणि कर्ता स णौ** (पा० अ० १-४-५२) इति सूत्रेण। नन्वत्र पञ्च लक्षणेषु धातुषु भजिः कतमः ? इति चेत् प्रत्यवसानार्थः, किं भोः प्रत्यवसानं भोजनं तच्च भुजेरर्थः ? इति चेन् मैवं, भजनमपि भोजनम्। कथमिति चेत्, **भजनं रसनम्** इति गोपालतापनीयश्रुतेः एवं भजनं सेवनापरपर्यायं रसनम् तदेव प्रत्यवसानं तदर्थो भजिः तदण्यन्त कर्तत्वं देवेषु तेषा ण्यन्ते कर्मत्वमिति विविक्तव्यम्। आत्मने शरीरानवच्छिन्नाय निजसूनवे नित्यपरिकराय जीवात्मने, अत्र **तादर्थ्ये चतुर्थी** जीवात्मनो भोगप्रयोजनसिद्धये त्रीणिवाक् प्राणमनांसि अकुरुत व्यरीरचत्। यत्तु आत्मने इत्यस्य निजाय स्वार्थायेति व्याचक्रुः प्राञ्चः तन्न समीचीनं, **अनश्नन् अन्यो अभिचाकशीति** (मु० उ० ३-१-१) इति श्रुतेः परमात्मनः भोक्तृत्वप्रतियोगिका–भावत्वात्। आत्मने इत्यत्र तादर्थ्यस्यैव नितरामभावात्। कथमसत्यां बुभुक्षायां त्रीणि भोग्यान्यात्मने करिष्यति। ननु यदि परमात्मा अनश्नन्निति श्रुत्यनुरोधेन न भोक्ता, तर्हि कथम् श्री गीतासु **अश्नामि प्रयतात्मनः** इति भगवतैवोक्तम् ? इति चेत् सत्यं तत्रत्यं भावमवगन्तुं प्रयतस्व, अनश्नन् इत्यस्य जागतिकविषयपदार्थविषयक-परमात्मभोक्तृत्वनिषेधे तात्पर्यम्। अश्नामि इत्यत्र भक्तदत्तपदार्थानाम् भोक्तृत्वस्वीकारो हार्दम्। किं तर्हि पुष्पफलजलानि नैव जागतिकानि ? न हि तावत्, यदि भगवदीयभक्ता एव जगदतीताः संसारप्रपंचरहितत्वात् तर्हि तदुपहृतपत्रपुष्पफलजलेषु कथंकारं जागतिकत्वम्। यत्र यत्र स्वत्वं तत्र तत्र तत्त्वं यत्र स्वत्वं नास्ति तत्र तत्त्वं नास्तीति सिद्धान्तानुसारम् **यो मे भक्त्या प्रयच्छति** इति वाक्यखण्डेन स्वस्वत्वनिवृत्तिपूर्वकभगवन्निष्ठ–स्वत्वोपपादनरूपभगवदुद्देश्यत्वलक्षणसम्प्रदानमाहात्म्येन निरस्तजागतिकलेशत्वात् पत्रपुष्पफलजलानां स्वीकारे भगवतः अनश्नन्निति श्रुतिविरोधस्य शङ्कागन्धोऽपि नात्रावशिष्यते। तथाहि श्लोकः—

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः॥**

(गीता ९-२६)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ नित्यपरिकरस्य निरस्तसकलबुभुक्षाकस्य जीवस्य भोगैः किं प्रयोजनमिति चेन्न, जागतिकपदार्थविषयकबुभुक्षाभाववत्वेऽपि तत्र भगवदीयरसबुभुक्षायाःनित्य सद्भाववत्वात् तदर्थं तदुपकरणैः तस्य नितरां प्रयोजनस्य सत्वात्। तथा हि तदर्थमात्मने जीवात्मने जीवात्मानं सुखयितु मिति क्रियार्थोपि चतुर्थी त्रीणी वागादीनि अकुरूत, येनासौ वाचा संसारे तिष्ठन्नपि भगवद्गुणान् भीषणां गायं गायं पायं पायञ्च भगवच्चरितामृतं नानुविन्देत् भववेदनाम्। यथा श्रीभागवते—

**इति नन्दादयो गोपाः कृष्णरामकथां मुदा ।**
**कुर्वन्तो रममाणाश्च नाविन्दन् भववेदनाम् ।।**

(भा० १०-११-५८)

एवं प्राणरूपेण प्राणेन भगवच्चरणसरसिजगतां तुलसीं तदुरसि लम्बमानवनमाला-परिमलञ्च घ्रायं ध्रायं सौगन्ध्यामृतं पीत्वा धन्यतां ब्रजेत्। यथा श्री भागवते सनकादयः—

**तस्यारविन्दनयनस्य पदारविन्द–**
**किंजल्कमिश्रतुलसीमरकन्दवायुः ।**
**अन्तर्गतः स्वाविवरेण चकार तेषां**
**संक्षोभमक्षरजुषामपि चित्ततन्वोः ।।**

(भा० पू० ३-१५-४३)

एवमेव मनसा सङ्कल्पयन् परमात्मविषयकमधुरमनोरथान् मधुरिपुमुखमृगाङ्कमाधुरी परमानन्दसुधासागरे निमग्नो भवेत्। यथा श्रीभागवते अक्रूरः—

**तं त्वद्य नूनं महतां गतिं गुरुं**
**त्रैलोक्यकान्तं दृशिमन्महोत्सवम् ।**
**रूपं दधानं श्रिय ईप्सितास्पदं**
**द्रक्ष्ये ममासन्नुषसः सुदर्शनाः ।।**

(भा० पु० १०-३८-१४)

नन्वत्र यदि जीवात्मार्थमेव त्रीणि रचितानि भगवता तर्हि अकुरुत इति आत्मनेपद-प्रयोगः किमभिप्रायकः कृञो हि ञित्वात् तत्र कर्तृगामिक्रियाफलकत्वे आत्मनेपदं तथा हि सूत्रं **स्वरित ञितः कर्त्रभिप्राये क्रियाफले** (पा० अ० १/२/७७) इति सूत्रं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकृते कृञः क्रियाफलकत्वाभावे कथमात्मनेपदम् ? इति चेत् वाढं पृष्टम्, अत्र हि क्रियाफलम् रचनासुखम् तच्च यद्यपि जीवात्मनि तथाऽपि तस्मिन् परमप्रेम कुर्वति भगवति तत्सुखसुखित्वात् तत्रापि क्रियाफलत्वेनात्मनेपदम् । यथोक्तं श्रीमानसे—

**सुखमानत सेवक सेवकाई, सेवक बैर बैर अधिकाई ।।**

(मा० २-११९-२)

एतद्रूपान्तम्—

**सेवकस्य च सेवायां मन्यते हि सुखं प्रभुः ।**
**सेवकस्य च वैरे हि वैरं समधिकं गतः ।।**

अनन्तरम् एकं दुग्धरूपमन्नं रसात्मकं पशुभ्यः, पशुशब्दोऽत्र विशेषभोगासक्त-बद्धजीवपरः तेभ्यः बुभुक्षुभ्यः कर्मणि गदितेभ्यः पशुभ्यः प्रायच्छत् । तस्मिन् रसे पयसि यत् प्राणिति चेतनं प्राणवत् जड़चेतनं जगत् प्रतिष्ठितं वर्तमानम् । अथ प्रश्नः—यदि सप्तान्नानि साधारणहुतप्रहुतवाक्प्राणमयमनःपयांसि सर्वदा निरन्तरमद्यमानानि जीवेन भुज्यमानानि सन्ति तर्हि कस्माद्धेतोः न क्षीयन्ते । भोगरूपकारणसमवधानेऽपि नाशरूपकार्याभावश्चित्रम्, अग्निसद्भावेऽपि दाहकत्वानुपलब्धेः । उत्तरमुत्तरत्रफलमाह—यः कश्चन् तां भुज्यमानानामपि अक्षितिं क्षिति क्षीणता तदभावं वेद सः प्रतीकेन मुखेन अग्निरूपेण ब्राह्मणरूपेण वा स्वाननेन वा अन्नं भोग्यम् अत्ति आस्वादयति । परमात्मकृपया भोगान् भुञ्जानोऽपि स्वयं न भुज्यते इति तात्पर्यम् । सः देवान् अत्र **आदरार्थे बहुवचनम्** देवदेवं साकेतविहारिणं श्रीरामं ब्रह्म गच्छति । स ऊर्जं ऊर्जस्वलं भगवतो नामामृतं रूपामृतं चरित्रामृतं सौन्दर्यामृतम् उपजीवति उपभुङ्क्ते भगवत्समीपंगतः आस्वादयति इति श्लोकाः, इमे सन्ति चत्वारो भगवद्गुणगणसङ्घातवर्णनपराः गायत्रीछन्दसाबद्धाः वैदिकश्लोकविशेषाः ।।श्रीः।।

अथ द्वितीयस्मिन्मन्त्रे सूत्रभूतस्य प्रथममन्त्रस्य व्याख्यां करोति श्रुतिः यत्सप्तेत्यादिना—

**यत्सप्तान्नानि मेधया तपसाजनयत्पितेति मेधया हि तपसाजनयत्पिता । एकमस्य साधारणमितीदमेवास्य तत्साधारणमन्नं यदिदमद्यते । स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रँ ह्येतत् ! द्वे देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वत्यथो आहुर्दर्शपूर्णमासाविति । तस्मान्नेष्टियाजुकः स्यात् । पशुभ्य एकं प्रायच्छदिति तत्पयः । पयो ह्येवाग्रे मनुष्याश्च पशवश्चोपजीवन्ति तस्मात्कुमारं जातं घृतं वैवाग्रे प्रतिलेहयन्ति**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स्तनं वानुधापयन्त्यथ वत्सं जातमाहु रतृणाद इति । तस्मिन्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदँ्सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदिदमाहुः सवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्याद्यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवं विद्वान्सर्वँ्हि देवेभ्योऽनाद्यं प्रयच्छति । कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदेति पुरूषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते । यो वैताममक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते कर्मभिर्यद्धैतन्न कुर्यात्क्षीयेत् ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत् । स देवानपि गच्छति स ऊर्जमुपजीवतीति प्रशँ्सा ।।२।।**

यदित्याद्यनुवादरूपं पितेत्यन्तं, प्रजापतिना योगमायया कालशक्त्या च यानि सप्तान्नानि साधारणादीनि सृष्टानि तेषु यत्प्रथमं साधारणाख्यं तत्समस्तजीवजातस्य, व्युत्पत्तिमाह, अद्यते इति अन्नं बाहुलकात् अभूतकाले कर्तरि निष्ठा । यः कोऽपि इमं साधारणमन्नं ब्रह्मबुद्ध्या उपास्ते सः पाप्मनः कर्मजनितपातकात् न व्यावर्तते न हि निवृत्तो भवति । व्यावर्तते इति कर्मकतृप्रयोगः । हेतुमाह, यतोहि साधारणमन्नं मिश्रं शुभाशुभाभ्यां संयुक्तवात् । उपासितव्यं तु शुद्धसच्चिदानन्दमयश्रीरामाख्यं ब्रह्म यथोक्तं मानसे—

**शुद्ध सच्चिदानंदमय कंद भानुकूल केतु ।**
**करत चरित नर अनुहरत संस्सृति सागरसेतु ।।**

(मा० २-८७)

एतद्रूपान्तरम्—

**विशुद्धसच्चिदानंदकंदो भानुकुलस्य च ।**
**केतुर्भवाब्धिसेतुं च चरितं मानवं श्रितः ।**

अथ देवेभ्यः हुतं प्रहुतमिति विभज्य दत्तवान् हुतं नाम हवनम् अग्निहोत्रं प्रहुतं नाम बलिवैश्वदेवादि । अत एव जनाः द्वाभ्यां देवाँस्तर्पयन्ति । केचिद् दर्शपौर्णमासौ अमावश्याराकयोः क्रियमाणौ नैमित्तिककर्मविशेषौ श्रौतौ हुतप्रहुतशब्दार्थावाहुः, केचिदित्युक्त्वा श्रुतिस्तन्मते दर्शयत्यरूचिम् । अतः इष्टियजनशीलो न स्यात् । पशुभ्यः यत् एकमन्नं प्रादात् तद्विवृणोति, तत् किं पय इति । उपपत्तिमाह—मनुष्याः पशवश्च अग्रे जन्मनःपश्चात् पयः पीत्वैव उपजीवन्ति उपकृताः जीवनं धारयन्ति । अतः कुमारं पञ्चाब्दपर्यन्तं शिशुं घृतं प्रतिलेहयन्ति वर्धयितुं स्तनं धापयन्ति पाययन्ति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जीवयितुं, पशुयोनावपि जातमात्रवत्सः पय एव पिबति न तृणमत्ति । अतः अतृणमादं अतृणादं न तृणमत्ति तथाभूतम् पयः शब्दोऽत्र रसवाची तच्च त्रिलोक्यां व्याप्तम् । अतो मन्त्रवर्णे पृथिव्याम्, ओषधीषु, द्युलोके अन्तरिक्षे सर्वत्र पयः पयोनिधिविहारिणः मातुरिव सकलजीववत्सल्य श्रीहरेः वात्सल्यद्रवपयसा समाप्यायित् तथा च मन्त्रार्णवः—

ॐ पयः पृथिव्यां पय ओषधीषु पयो दिव्यन्तरिक्षं पयोधाः पयस्वतीः प्रदिशः सन्तु मह्यम् ।

तस्मिन्नित्यस्य भावार्थः—यत् प्राणवत् यच्चाप्राणी सर्वं पयसि परमेश्वरस्य वात्सल्यरसे प्रतिष्ठितम् । पयः प्रशंसामाह पूर्वपक्षं खण्डयित्वा—यत् कथयन्ति संवत्सरपर्यन्तं पयसा दुग्धेन जुह्वत् होमं कुर्वन् मृत्युं जयति, इति न अनेन पयोमाहात्म्य-न्यूनता, वस्तुतः पयसा भगवदीयरसेन यस्मिन्नहनि जुहोति तद्दिनमेव मृत्युं विजित्य मुक्तो भवति, देवेभ्योऽपि अन्नादः भोगाय वस्तुदानशीलो भवति ।

कस्मादिति प्रश्नबीजमवतारयति–सर्वदा भुज्यमानानि अन्नानि कुतो हेतोर्न नश्यन्ति ? पुरूषः परमात्मा जीवानां पिता, अक्षितिः क्षितिर्विनाशस्तदभाववान् । अतः भुज्यमानमिदमन्नं जीवजीविकार्थं पुनः पुनः जनयति प्रादुर्भावयति अतो न क्षीयन्ते । एवं यो वेद इत्यंशस्य अनुवादः–जीवानां कर्माणि अविनाशीनि अतः पुरूषः भगवान् धिया धिया जीवानां प्रारब्धध्यानेन तदनुकूलफलरचनाध्यानेन च अन्नं जनयते कर्मभिः । यदि परमात्मा एतत्न कुर्यात् तदान्नं तु क्षीयेत भुज्यमानमनुत्पादितं नश्येदेव । तस्मात् अवाप्तसमस्तकामः पूर्णकामः परमात्मापि निःस्वार्थः पुत्रवत्सलः पितेव जीवानां भोगयवस्तूनि जनयत्येव, इदमेव तस्य कर्म । अयमेव सिद्धान्तः श्रीगीतायास्तार्तीयके त्रिभिःश्लोकैः प्रतिपादितः पार्थं प्रति भगवता पार्थसूत्रेन देवकीसुतेन तथाहि—

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ।**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मषु ।।**

**यदि ह्ययं न वर्तेयं जातुकर्मण्यतद्रत ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।।**

**उत्सीदेयुरिमे लोका न कुर्याम कर्म चेदहम् ।**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।।**

(गी० ३-२२,२३,२४)

एवं जानन् प्रतीकेन मुखेन अन्नमत्ति । ननु का वापूर्वता विद्वानविद्वान् सर्वोऽपि मुखेनैव अन्नमत्ति तस्मिन्नेव अन्नादनसामर्थ्यात् ? इति चेन्न उक्तपूर्वमेतद् यदन्नं भोग्यपर्यायं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न खलु सर्वे भोग्या: विषया: मुखेनेवाद्यन्ते, अदनं नाम न केवलं मुखविदारणदन्तचालनजिह्वरसनव्यापाररूपं तत्खलु पञ्चज्ञानेन्द्रियव्यापारभूतम्। यथा शब्दस्पर्शरुपरसगन्धा: स्वादविषयतया अदनीया: अन्नाभिधेया: ते खलु पृथक् पृथक् तत्तदिन्द्रियै: श्रोत्रत्वक्चक्षूरसनानासाभिरास्वाद्यन्ते, तस्मान्मुखशब्दस्य वदनव्यतिरिक्तोऽर्थ: श्रुतेरत्राभिप्रेत: स च परमात्मरूप:, तस्मात् प्रतीक: समेषां प्रतिनिधि: मुखमिव मुख्य: तेन मुखेन परमात्मना सह अन्नं भोग्यं वस्तु अत्ति। भोगं भुञ्जानेऽपि परमात्मानं न विस्मरति इति हार्दम्। नन्वस्मिन्व्याख्याने किं निगमकम्? इति चेत् **सोश्नुतेसर्वान्कामान् सह ब्रह्मणा विपश्चिता** (तै० ब्र० १)। एवं स देवानित्यादि प्रशंसा पुरूषज्ञानप्रवर्तनार्था ।।श्री:।।

अथ प्रथमसूत्रस्य परिशेषं यद्द्वितीयमन्त्रे व्याख्यानवतोऽशिष्टं तृतीये व्याख्याति—

**त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुतान्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमितिमनसा ह्येव पश्यति मनसा श्रृणोति। काम: संकल्पो विचिकित्सा श्रद्धाश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरिप्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्ठो मनसा विजानाति य: कश्च शब्दो वागेव सा। एषा ह्यन्तमायत्तैषा हि न प्राणोऽपानो व्यान उदान: समानोऽत इत्येतत्सर्वं प्राण एवैतन्मयो वा अयमात्मा वाङ्मयो मनोमय: प्राणमय: ।।३।।**

आत्मने जीवात्मार्थं त्रीणि वाक्प्राणमनांसि अकुरुत। उपपत्तिमाह किमप्यपश्यन्कोऽपि पृष्ट: कथयति—अहमन्यत्रमना अन्यत्र मन: यस्य तथाभूत: अभवमतो दृष्टिमानपि नापश्यं, श्रुतिमानपि न अश्रौषमदर्शमश्रौषमिति सामान्यभूताद्यतनविवक्षायां लुङ् लकार:। न खलु मनसा विना कोऽपि कमपि विषयं सेवितुं प्रभवति। कामादय: मनसो विकारा: यत्तु स्त्रीव्यतिकरेच्छा इति प्राहुर्भगवत्पादा: तथा हि तत्रत्यं भाष्यं-(काम: स्त्रीव्यतिकराभिलाषादि:। (बृ० उ० १-५-३ शांभा०) तन्न, पुरूषार्थपरिगणितत्वात् कामस्य भगवद्बिभूतिरूपत्वाच्च **धर्माविरूद्धभूतेषु कामोऽस्मि भरतर्षभ** (गी० ७-११) कामप्रकृतिभूतका मधातो: कान्ति पर्यायेच्छासामान्यार्थकत्वाच्च केवलं स्त्रीसंगमाभिलाष: काम: इति सर्वथानुचितव्याख्यानम्। स्त्रीव्यतिकरेच्छा प्राणिन: सहजवृत्ति: तिर्यक् योनिगतेषु अपि जागर्ति, तर्ह्यपूर्वताभावे सा कथं पुरूषार्थरूपा, कामादनन्तरो मोक्षो गणित: इति योषिद्व्यतिकररुपकाम: यो मोक्षत:पूर्वभाविपुरुषार्ध:, तर्हि स्वभावत: सततं कामिनी: सेवमानानां कोटिकोटिविटानां कथं न मोक्ष:। वाराङ्गना: कथं विगर्हिता:, कथं वा तत्त्यागस्य श्रुतौ स्मृतौ च विधानं, कथं वा भवन्मते मोक्षप्रापणसोपानभूतं स्त्रीव्यतिकराभिलाषरूपं कामं तृतीयनेत्रेण ददाह भगवान् कामारि:। कथं वा तदुद्भववेगं सोढुं निर्दिष्टवान् शरीरमोक्षणात् प्राक् भगवान् योगेश्वर: कृष्ण: ? तथाहि—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शक्नोतीहैव यः सोढुं प्राक्शरीरविमोक्षणात् ।**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ।।**

(गी० ५.२३)

तस्मात् हर्यादिरिव कामशब्दोऽप्यनेकार्थः धर्माविरुद्धसात्विकेच्छा कामः । स एव पुरूषार्थः । संसारेच्छासामान्यं कामः साधारणधर्मो मानसः । परस्त्रीसंगमेच्छा कामो विकारः । एष सर्वथा त्याज्यः, एवं नैष मनोधर्मः विकार एषः, यथा शरीरे आगन्तुकः कैंसरादिः दुर्निवार्यो मृत्युपर्यन्तस्थायी रोगः कुपथ्यसेवनप्रभवः, तथैवैषः शतशतकामिनीतल्लम्पटसंगमसंभवो नरकभवो मनोभवः परनारिसंगमाभिलाषरूपो हृदयमहीनिखन्यमानकोटिकोटिपापयूपो दापितदुष्पूरघोरभवकूपो दुरोदरो दूरतः परिहर्तव्यो बुधैः । संकल्पः काम्यवस्तुप्राप्त्यध्यवसायप्रयासः विचिकित्सादयः सुगमाः । तस्मात् पृष्ठतः परोक्षतः उपस्पृष्टः मनसैव जानाति । एवं मनः अन्तःकरणं, शब्दमात्रं वागुच्यमानत्वात् हि निश्चयेन एषा इयं वाणी अन्तम् अन्तति पदार्थं बध्नाति इति अन्तः अभिधेयः तमाश्रित्य आयत्ता । नखल्वर्थं विना कापि वाक् प्रवर्तते तस्मादर्थाधीना सा । एवमेव पञ्चप्राणक्रियाविशिष्टः आत्मा प्राणमयः तस्मात् पूर्वोक्तत्रयीमयोऽयम् ।

अथ आत्मने रचितानां त्रयाणां भोग्यानां त्रिलोकदृष्ट्या व्याख्यानम्—

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौलोकः ।।४।।**

**वाङ्मर्त्यलोकोऽन्तरिक्षं मनः प्राणस्तु द्यौस्मृता ।**
**स्थौल्य सौक्ष्म्य महत्वादिधर्मात् श्रौतोऽर्थ ईदृशः ।।श्रीः।।**

अथ वेददेवादिगार्हस्थ्यपरतया त्रिभिर्व्याख्यानम्—

**त्रयो वेदा एत एव वागेवर्ग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ।।५।।**
**देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ।।६।।**
**पिता माता प्रजैत एव मन एव पिता वाङ्माता प्राणः प्रजा ।।७।।**

तन्मयत्वात् वागेवद ऋग्वेदः, मन एव यजुर्वेदः, संकल्पप्रधानयज्ञवर्णनात् मनसोऽपि संकल्पधर्मत्वात् उभयोः साधारण्यं, प्राणस्य श्रेष्ठत्वात् मुख्यत्वात् च साम्नां द्वयोस्तुल्यता । दिविधातोः श्रुत्यर्थकत्वेन वाचश्च तदुपयोगित्वात् उभयोः सामान्यं, यद्वा संस्कृतमेव मुख्यावाक् सा च दैवी तस्माद् देवत्वं तत्र, मनसि पितृत्वं सूक्ष्मत्वात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वासनाधारत्वसामान्यात्, प्राण एव मनुष्यः तन्निःश्वासभूतत्वात् । पितृतेजो मातागर्भे दधाति तथैव मनोभावं प्राणरूपं वाक् प्रकटयति तस्मान्मनसि पितृत्वं वाचि मातृत्वं प्राणे च प्रजात्वम् ।।श्रीः।।

अथ विज्ञानदृष्ट्यापि त्रेधा व्याख्यानं त्रयाणां, तत्र वाक् विज्ञानम्, श्रणवात् इमां सर्वे जानन्ति अनया च सर्वं ज्ञायते अतो विज्ञातरूपेण अवतीयमात्मानं, मनः सूक्ष्मं भवति, तस्मादिदं विजिज्ञास्यतत्वं विशेषेणज्ञातुमिच्छति विजिज्ञास्यते विजिज्ञासितुं योग्यं विजिज्ञास्यम्, एतन्मनसि को भावः इति सर्वे विजिज्ञासन्ते तस्मात् विजिज्ञास्यतत्वं विज्ञानेच्छाश्रययोग्यं सत् अवति जीवात्मानम् । प्राणः अविज्ञातः न कोऽपि एनं विजानाति परमात्मरूपत्वात् तस्मात् अविज्ञातरूपेण जीवात्मनो भोग्यतामर्हति एतद्व्याख्यानस्यैव सूत्ररूपा मन्त्रत्रयी—

**विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत्किंच विज्ञातं वाचस्तद्रूपं वाग्घि विज्ञाता वागेनं तद्भूत्वावति ।।८।।**

**यत्किंचविजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति ।।९।।**

**यत्किञ्चा विज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति ।।१०।।**

**वाग् विज्ञातं मनःसूक्ष्मं विजिज्ञास्यं स्वरूपतः ।**
**प्राणो विज्ञातुरूपोऽसौ इतिमन्त्रत्रयाशयः ।।श्रीः।।**

पुनः विभिन्नदृष्ट्या वागादयो व्याख्यायन्ते—

**तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक्तावती पृथिवी तावानयमग्निः ।।११।।**

तस्य इति व्यत्यात् षष्ठ्यर्थे चतुर्थी । वाचः पृथिवीशरीरं चेष्टाश्रयत्वात्, ज्योतिः प्रकाश एव अग्निविशेषः अनयोः संस्थानं तस्मात् वाह्यतः पृथिवी परिमाणवती आन्तरतः अग्निमात्रा प्रकाशवती ।।श्रीः।।

अथमनसोऽध्यात्मरूपं वर्णयति—

**अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यस्तद्यावदेव मनस्तावती द्यौस्तावानसावादित्यस्तौ मिथुनँ समैतां ततः प्राणोऽजायत स इन्द्रः स एषो सपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ।।१२।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ एतस्य मनसः द्यौः शरीरं सूक्ष्मत्वात् तत्संकल्पस्य आस्वर्ग्यम् आसीमतत्वात्। असौ आदित्यः सूर्याभिन्नं ज्योतिः एवं द्युलोकाभिमानिदेवता। दित्याभ्यां मिथुनीभूय संगताभ्यां प्राणः संजातः, स एव इन्द्रः स एव अद्वितीयः अनुपमः, तस्मात् असपत्नः निष्प्रतिद्वन्द्वः द्वितीयः स्वसमानधर्मा सपत्नः शत्रुर्भवति। यः इमं भगवद् विभूतित्वेन निरुपमधिया समुपास्ते सोऽप्यनुपमः सन् निष्प्रतिद्वन्द्वो भवति ।।श्रीः।।

अथ प्राणस्याध्यात्ममाह—

**अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः स यो हैतानन्तवत उपास्तेऽन्तवन्त ँ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्त ँ स लोकं जयति ।।१३।।**

एवं प्राणस्य आपः जलमेव चेष्टाश्रयः शरीरं, चन्द्र ज्योतिःरूपं शीतलत्वात्। उपसंहरति—इमे वाङ्मनःप्राणाः अनन्ताः अनन्तानामुपासकोऽपि अन्तवन्तं विनाशिनं लोकं जयति अनन्तञ्च लभते ।।श्रीः।।

इदानीं संवत्सरतया आत्मनो व्याख्यानम्—

**स एष संवत्सरः प्रजापतिः षोडशकलास्तस्य रात्रय एव पञ्चदशकलाः, ध्रुवैवास्य षोडशीकल स रात्रिभिरेव च पूर्यतेऽपक्षीयते सोऽमावाश्य ँ रात्रिमेतया षोडस्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेता ँ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्यैतस्या एव देवताया अपचित्यै ।।१४।।**

एषः प्रजापतिः परमात्मा कालरूपः संवत्सरात्मकः, संवत्सरो द्वादशमासः कालविशेषः चैत्रादिफाल्गुनपर्यन्तः, अस्य षोडशकलाः शरीरावयवाः तत्र पञ्चदशरात्रयः दिवसैः समेताः पञ्चदशकलाः षोडशी ध्रुवा नित्या कला। आभिः रात्रिभिः क्षीणतां गच्छन् अमावश्यायां ध्रुवामुपास्ते प्राणशक्तिं, पुनः प्रथमया कलया शुक्लपक्षं प्रविष्टः तस्मात् कुहूनिशि कृकलाशस्यापि देवतायाः अपचित्यै पूजायै न हिंसां कुर्यात्। भावार्थस्तु–सर्वत्र परमात्मभावनैवकरणीया ततो कदापि भगवद् विस्मरणं न भविष्यति। तथैवामनन्ति पौराणिकाः—

**यत्रैव यत्रैव मनोमदीयं तत्रैव तत्रैव तव स्वरूपम्।**
**यत्रैव यत्रैव शिरो मदीयं तत्रैव तत्रैव तव प्रणामाः ।।श्रीः।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ आत्मनि संवत्सरभावनां प्रस्तौति—

**यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरूषस्तस्य वित्तमेव पञ्चदशकला आत्मैवास्य षोडशीकला स वित्तेनेवा च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित येवाहुः ।।१५।।**

पूर्वं वर्णितः संवत्सररूपः प्रजापतिः सूक्ष्मतया अयमात्मैव । तत्र वित्तं धनमेव पञ्चदशकलाः दशेन्द्रियैः पञ्चप्राणैश्च समर्जनीयत्वात्, आत्मा शरीरं षोडशीकला । मम विचारेण पञ्चतन्मात्राः पञ्चमहाभूतानि पञ्चप्राणाश्च पञ्चदशवित्तानि, तैरेव पूर्यते अपक्षीयते च, यदा सर्वज्यानिः सर्वेषां धनानां जानिः हानिः, किन्तु शरीरं स्वस्थं तदापि जीवतीति व्यवहारो भवति तस्मादत्रापि पिण्डे भगवद्भावनाकरणीयेति हार्दम् ।।श्रीः।।

मानवस्य द्वेधा बन्धनं अविद्यया विद्यया च । अत्र प्रकारणे भगवद्भक्तिशून्यं कर्मैवाऽविद्या तत्तद्देवोपासनं विद्या ततोऽपि व्यतिरिक्ता सेव्यसेवकभावज्ञानपुरःसरमनन्यविषया परमेश्वरोपासना ब्रह्मविद्या । तस्मात् द्वाभ्यां कर्मोपासनाभ्यां भगवत्प्राप्त्यसाधकाभ्यां विरज्येत् मुमुक्षुः भगवच्छरणमुपेयिवान्, इति मन्त्रेण तन्निवारणं प्रस्तौति—

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकाना ँ श्रेष्ठस्तस्माद् विद्यां प्रश ँ सन्ति ।।१६।।**

अथ अनन्तरं वै निश्चयेन त्रयो लोकाः, तत्र मनुष्यः पितृदेवलोकेषु पुत्रेण करणीभूतेन नरकात्त्राणसमर्थेन मनुष्यलोको जय्यो भवति । **क्षय्य जय्यौ शक्यार्थे** इत्यनेन यत् प्रत्ययान्तो जय्यशब्दो निपात्यते । एवं कर्मणा श्रुतिविहितेन नित्यादिना पितृलोकः जेतुं शक्यः । विद्यया देवोपासनरूपया देवलोकः । लोकानां श्रेष्ठत्वात् देवलोकस्य अन्यापेक्षया विद्यां प्रशंसन्ति । अत एव **अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते** । (ई० उ०-११) इतिश्रुतिः ।।श्रीः।।

पुत्रेण मनुष्यलोको जय्यः इत्यस्यैव व्याख्यानमग्रिमे मन्त्रे—

**अथातः सम्प्रतिर्यदा प्रैष्यन्मन्यतेऽयं पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किञ्चानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता । ये वै के च यज्ञास्तेषा ँ सर्वेषां यज्ञ इत्येकता । ये वै**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**के च लोकास्तेषा ँ सर्वेषां लोक इत्येकतैतावद्वा इद ँ सर्वमेतन्मा सर्व ँ सन्नयमितोऽभुनजदिति तसमात्पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेन- मनुशासति स यदैवंविदस्माल्लोकात्प्रैत्यथैभिरेव प्राणैः सह पुत्रमाविशति । स यद्यनेन किञ्चिदक्ष्णयाऽकृतं भवति तस्मादेन ँ सर्वस्मात्पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठत्यथैनमेते दैवाः प्राणा अमृता आविशन्ति ।।१७।।**

अथ अधिकारार्थशब्दः अतः अनन्तरं सम्प्रत्तिः सम्यक् प्रदीयते पित्रा पुत्राय निजमुत्तरदायित्वं यया सा सम्प्रत्तिः । प्रयिष्यन् प्रपूर्वकस्य **इण्धातोः** शरीरत्यागोऽर्थः तस्यैव लृटि शत्रन्तोऽयं प्रयोगः । प्रयिष्यन् शरीरं त्यजन् परलोकं गमिष्यन् पितापुत्रमाह– त्वं ब्रह्म, त्वं यज्ञः, त्वं लोकः । ब्रह्मशब्दः वेदार्थः एवमुपलक्षणतया अनुक्तस्वाध्यायाकृतयज्ञानर्जितलोकानामेवसंग्रहः । पुत्रोऽपि अहमित्यादि मन्त्रखण्डेन आत्मनि ब्रह्मयज्ञलोकभावनां करोति, पूरयति च पितुः शेषकार्याणि तस्मादितो गच्छन् पिता देवैः अमृतेन संयोज्यते, पुत्रश्च पितरं पुतः नरकात् त्रायते, कार्याणां पूर्णाद् वा त्रायते इति मन्त्रस्य भावार्थः । संकेतस्तु न खलु पुत्रवान् स्वेन कर्मणा परलोकं गन्तुं प्रभवति, यतो हि मन्त्रानुसारं शरीरं त्यक्त्वापि पुनरेव मनः प्राणादिभिः परम्परया विषयान्भुंक्ते, अपूर्णस्य तस्य कार्यपूरणेन पुत्रस्त्रायते । तस्मात् प्राकृतपुत्रादिमोहं विहाय कौसल्यापुत्र एव परब्रह्मणि श्रीरामे समनुरज्येत् । तथा च चित्तं समुपदिशन्ति अस्माकमभियुक्ताः—

**रे चित्त चिन्तय चिरं चरणौ मुरारेः ।**
**पारं गमिष्यसि यतो भवसागरस्य ।।**
**पुत्राः कलत्रमितरे नहि ते सहायाः ।**
**सर्वं विलोकय सखे मृगतृष्णिकाभम् ।।श्रीः।।**

भूयः सम्प्रत्तिमन्माहात्म्यमुपवर्णयति—-

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाग्यया यद्यदेव वदति तत्तद्भवति ।।१८।।**

एनं कृतसम्प्रत्तिकं पृथिव्यै, अत्रापि व्यत्ययोबहुलमित्यनेन ङसेर्व्यत्यात्ङेविभक्तिः । पृथिवीसकाशात् पृथिव्याः अग्नेश्च एनं दैवी देवकृपामयी वाग् वाणी आविशति आविष्टा भवति । का सा ? इत्यत आह–सैव दैवी भूतार्थपरिणामा यया युक्तः यद्यद् वदति तत्तत् सत्यं यथार्थं भवति कृतपुण्यपुञ्जजत्वात् ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ पितुस्त्राणकर्त्तुः सम्प्रत्तिमतो मनोमाहात्म्यं वर्णयति—

**दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवत्यथो न शोचति ।।१९।।**

मनसो दिवशरीरत्वात् आदित्यरूपत्वाच्च ताभ्यामेनं सत्यसङ्कल्पं मनः आविशति, येन निरस्तसकलसङ्कल्पतया चिन्तितनिर्विकल्पब्रह्मतया च अयमानन्दी भवति, आनन्दवान् भवति ततो न शोचति नैव शोकं करोति ।।श्रीः।।

अथ सम्प्रत्यमतः प्राणमाहात्म्यं वर्णयति—

**अद्भ्यश्चैनं चन्द्रमसश्चदैवः प्राण आविशति स वे देवः प्राणो यः सञ्चरँ्श्चासञ्चरँ्श्च न व्यथतेऽथो न रिष्यति । स एवं वित्सर्वेषां भूतानामात्मा भवति । यथैषा देवतैवँ् स यथैतां देवताँ् सर्वाणि भूतान्यवन्त्येवँ् हैवं विदँ् सर्वाणि भूतान्यवन्ति । यदु किञ्चेमाः प्रजाः शोचन्त्यमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति ।।२०।।**

एनं सम्प्रत्यमन्तम् अद्भ्यः जलात् चन्द्रमसः दैवः देवसम्बन्धिप्राणः आविशति, स च सञ्चरन् भ्रमन् अभ्रमंश्च न व्यथते नैव क्लेश्यते न हृष्यति न वा नश्यति । एवंवित् ज्ञाता सर्वेषां भूतानामात्मा आत्मवत् प्रियो भवति । यथा इयं हिरण्यगर्भाख्य-देवता तथैव अयमपि देवता भवति । इमामपि सर्वाणि भूतानि बलिभिः अबन्ति स्तुवन्ति गच्छन्ति च । यदि अन्याःप्रजाः किमपि शोचन्ति तर्हि आसां सहैव सः शोको भवति, नेमं स्पृशति अमुं सम्प्रत्तारं पुण्यमेव गच्छति न तु पापं, यतो हि देवोऽभूदेषः, देवान् पापं न गच्छति दिव्यमाहात्म्यमत्वात् ।।श्रीः।।

अथाध्यात्मप्राणव्रतमीमासां प्रदर्शयन्नाह—

**अथातो व्रतमीमाँ्सा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योऽन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाग्दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वोपयेमे तान्याप्नोत्तान्याप्त्वा मृत्युरवारून्ध तस्माच्छ्रामत्येव वाकछ्राम्यति चक्षुः श्रामयति श्रोत्रमथेममेव नाप्नोद्योऽयं मध्यमः प्रासास्तानि ज्ञातु दध्रिरे । अयं वै नः श्रेष्ठो यः सञ्चरँ्श्चासञ्चरँ्श्च न व्यथतेऽथो न रिष्यति हन्तास्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवँ्स्तस्मादेत एतेनाख्यायन्ते प्राणा इति तेन ह वाव ततकुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्धन्तेऽनुशुष्यत्यनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ।।२१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ वाङ्मन:प्राणनां व्रतस्य उपासनापद्धतिविशेषस्य मीमांसाविचार: क्रियते । प्रजापति: भगवान् विधातृरूपावच्छिन्न: वागादीनां कर्माणि ससृजे । सृष्टेर्भगवतो लीलत्वात् तत्रैव सृष्टिफलत्वात् अत्रात्मनेपदम् । तानि अन्योन्यानि स्पर्धन्ते स्म तत्तदभिमानि-देवा: स्पर्धां कृतवन्त इति भाव: । वाक् तदभिमानिदेवता दध्रे व्रतं धारितवती अहं वदिष्यामि । अहं द्रक्ष्यामि इति चक्षु: दध्रे, श्रोष्यामि इति श्रोत्रमेवम् अन्येन्द्रियाभिमानि-दैवतान्ययि स्वस्वकर्मकर्तुं निश्चिक्यु: । अथ मृत्यु: मरणावच्छिन्नकाल: श्रमो भूत्वा तान्यवारुन्धत् । ततस्तानि श्रान्तानि, किन्तु नाश्रमयत् प्राण:, अतस्तानि तं श्रेष्ठं मत्वा तद्रूपाणि तन्नाम्नैव व्यवह्रियन्ते शेषं सुगमम् ।।श्री:।।

अथाधिदैवदर्शनम्—

**अथाधिदैवतं ज्वलिष्याम्येवाह मित्यग्निर्दध्रे तप्स्याम्यहमित्यादित्यो भाष्यामयहमिति चन्द्रमा एवमन्या देवता यथा दैवत ँ् स यथैणां प्राणाषां मध्यम: प्राण एवमेतासां देवतानां वायुर्म्लोचन्ति ह्यन्या देवता न वायु: सैषानस्तमिता देवता यद्वायु: ।।२।।**

अग्निना ज्वलननिश्चय:, सूर्येण तपननिश्चय:, चन्द्रमसा भानिश्चय: कृत:, किन्तु तेऽस्तं गच्छन्ति, परन्तु ये़षां मध्यमो वायु: नास्तं याति प्राण इव इति भावार्थ: । ज्वलिष्यामि प्रज्वलितो भविष्यामि, भाष्यामि प्रकाशिष्ये, यथा दैवतं दैवतमनतिक्रम्य म्लोचन्ति अस्तं गच्छन्ति, वायो: प्रत्यक्षब्रह्मत्वात् तस्य म्लोचनं न सम्भवम् **त्वमेव प्रत्यक्षं ब्रह्मासि** इति श्रुते: ।।श्री:।।

अथ प्राणस्तुतिश्लोकं प्रस्तौति–

**अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्म ँ् स एवाद्य स उ श्व इति यद्वा एतेऽमूर्ह्यध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेतप्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत्समापिपयिषेत्तेनो एतस्यै देवताय सायुज्य ँ् सलोकतां जयति ।।२३।।**

यस्मात् सूर्य उदेति यत्र चास्तं गच्छति प्राणादेव उदेति प्राणेऽस्तं याति । देवा: अग्न्यादय: तमेव धर्मव्रतं चक्रिरे अद्यापि स्व: आगामिदिनेऽपि अनुवर्तन्ते अनुवर्त्स्यन्ते । **वर्तमानसामीप्येलट्** । अत: एकमेव प्राणस्य व्रतमाचरेत् धारयेत् । एवं प्राणापानक्रियां कुर्यात् तदेवयोगशास्त्रे कुण्डलिनीजागरणप्रकार: कथ्यते । मे पापं मृत्यु: मा अप्नुवद् इति समापिपयिषेत् समाप्तिमपि इच्छेत् । तेन व्रतेन अस्यै देवतायै इमां देवतामनुकूलयितुमथवा षष्ठ्यर्थे चतुर्थी । सायुज्यं साष्ट्यं सलोकतां च जयति अधिगच्छति ।।श्री:।।

**इति बृहदारण्यकोपनिषदि प्रथमाध्याये राघवकृपाभाष्ये पञ्चमब्राह्मणम् सम्पूर्णम् ।**

**।। श्री राघव: शन्तनोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। षष्ठब्राह्मणम् ।।

**षष्ठदैवतसमानवक्त्रकं षष्ठसूनुशतकोटिसुन्दरम् ।**
**षष्ठवर्षधृतयज्ञसूत्रकं षष्ठ एव समुपैमि राघवम् ।।**

अथ पूर्वोक्तव्याकृताव्याकृतविद्याप्रपञ्चमुपसंहरति नामरूपात्म षष्ठे त्रिभिर्मन्त्रैः—

**त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येत देषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति । एतदेषा ँ् सामेतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि नामानि बिभर्ति ।।१।।**

पूर्वं वाचं ब्रह्मत्वेन व्यवस्थापयति । इदं नाम रूपं कर्म इति त्र्यवयवसमुदायः तेषां नाम्नां वाक् उक्थम्, उत्तिष्ठति यस्मात्तथाभूतम् । यतो हि वाचि एव सर्वाणि नामानि उत्तिष्ठन्ति । येषां नाम्नां तत्साम समत्वादेभिः येषां नाम्नां वागेव ब्रह्मः यतो हि वागेव इमानि नामानि बिभर्ति धारयति । बिभर्तीति ब्रह्म इति श्रुत्यैव ब्रह्मशब्दस्य व्युत्पादितात्वात् ।।श्रीः।।

अथ रूपसामान्यतया चक्षुः वर्णयति—

**अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्युत्तिष्ठन्त्येतदेषा ँ् सामैतद्धि सर्वैरूपैः सममेतदेषां ब्रह्मेतद्धि सर्वाणि रूपाणि बिभर्ति ।।२।।**

अथ रूपाणां मध्ये चक्षुरेव उक्थः, अस्मादेव रूपाणि उत्तिष्ठन्ति । शेषं पूर्ववत् ।।श्रीः।।

अथ कर्मसामान्येन आत्मानि सर्वेषामन्तर्भावं दर्शयति—

**अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्माण्युत्तिष्ठन्त्येतदेषा ँ् सामैतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्मैतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रय ँ् सदेकयमात्मात्मो एकः सन्नेतृत्रयं तदेतदमृत ँ् सत्येनच्छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ।।३।।**

एवमेव सर्वेषां कर्मणामा आत्मा उक्थम् उत्थानस्थानम् । एवं त्रयं नामरूप कर्मणां समुदायः एकमात्मैव भवति, आत्मा एको भवन् त्रयं नामरूपकर्मात्मकं भवति । तदेव अमृतं सत् तेन नामरूपकर्मणाछन्नं नामरूपे सत्यं ताभ्यामयं प्राणः छन्न आच्छादितः ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि प्रथमाध्याये श्रीराघवकृपाभाष्ये षष्ठब्राह्मणम् ।**

**।। इति प्रथमाध्यायः सम्पूर्णः ।।**

**।। श्रीराघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अथ द्वितीयोऽध्यायः ।।

### ।। प्रथमब्राह्मणम् ।।

**नीलेन्दीवरवर्चसं सुमनसां मान्यं महीजाजुषं ।**
**मुष्णन्तं स्मितचन्द्रकान्तिकलया चेतांसि रक्षोद्विषम् ।।**
**सीतानेत्रचकोरचारुशशिनं कन्दर्पशोभामुषं ।**
**वन्दे ब्रह्म गुणाकरं रघुपतिं रामं तमालत्विषम् ।।**

**अथ आत्मा आत्मैव्येत्येवोपासीत, अयमात्मा ब्रह्म, आत्मा वा अरे द्रष्टव्यः सोऽन्वेष्टव्यः** इत्यादि श्रुतिभिवर्णितस्य ब्रह्मरूपस्यात्मन उपासनमुक्तम् । तत्र द्विधा ब्रह्मप्रतीतिः—जगदवच्छिन्नतया निरवच्छिन्नतया च । उपास्यते शुद्धं ब्रह्म हंसो यथा नीरमिश्रितं क्षीरं न पिबति तथैव तस्माद् अनुविद्धं जगत् निराकृत्य जगन्नाथोपासनं कार्यमिति श्रुतेर्हार्दम् । ननु यदि जगन्निराकरणमावश्यकम् अत एव अध्यारोपापवादन्यायसमवधाने रज्जौ सर्पभ्रम इव भ्रमात्मकं जगत् कल्पयामासुरद्वैतवादेन, तर्हि **तज्जलानीति शान्त उपासीत सर्वं खल्विदं ब्रह्म** इत्यादि श्रुत्यारम्भो मोघः ? इति चेत् न, ब्रह्म दर्शनार्था एताः सर्वत्र ब्रह्मदर्शनं कार्यं, किन्तु उपासनायामवच्छेदकानि व्यवच्छेद्यानि इति गृहाण । यथा कस्मिंश्चित् पात्रे निहितं दुग्धं पीयते किन्तु पात्रं परिहृत्य । तर्हि किमर्थं ब्रह्मदर्शनप्रतिपादनमिति चेत् स्मरणार्थमिति ब्रूमः । स्मरणं च किं प्रयोजकम् ? चेतश्शुद्धये सा च ब्रह्मोपासने नितरां उपयोगिनीति मन्मनीषितम् । शास्त्रे समदर्शनं विहितं किन्तु न समवर्तनम् । तस्मात् ब्रह्मोपासनायामविद्याशः परिहार्यः । येषां मते जीवजगन्मिथ्या तेऽध्यारोपापवादन्यायं शरणं यान्तु । अस्माकं तु श्रीरामाख्यं ब्रह्म अखण्डज्ञानस्वरूपं कोटिकोटिसूर्यविशिष्टाद्वैतं तत्र भ्रमतामसप्रसर एव नास्ति । यथोक्तं श्रीमानसे

**राम सच्चिदानन्द दिनेसा नहि । तहँ मोह निसा लवलेसा ।।**
**सहज प्रकासरूप भगवाना नहि । तहँ पुनिविज्ञान विहाना ।।**

(मानस ११६-५,६)

रूपान्तरम्—

**श्रीरामः सच्चिदानन्दः दिनेशो ज्योतिरुत्तमम् ।**
**तत्र मोहनिशायाश्च लवलेशो न विद्यते ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**प्रकाशः सहजस्तस्य रूपं भगवतस्स्मृतम् ।**
**पुनस्तत्र न विज्ञानप्रभातमुपचर्यते ।।**

रज्जुसर्पन्यायोऽपि नैव तादृशोऽत्र, रज्जौ सर्पभ्रमस्य चैतावदेव तात्पर्यम् यत् उभावपि अन्यत्रान्यत्र प्रसिद्धौ । अप्रसिद्धे प्रसिद्धस्य भ्रमो न भवति, यथा पुष्पवाटिकायां पुष्पं आकाशमवकाशे प्रसिद्धम्, परन्तु आकाशपुष्पस्य आकाशनिष्ठाधिकरणता न प्रसिद्धा । एवमेव सर्पो बिले रज्जुश्च गृहे प्रसिद्धौ किन्तु रज्जौ सर्पो न प्रसिद्धः । तथैव ब्रह्म परमे व्योम्नि संसारो जीवे, किन्तु ब्रह्मणि संसारो न प्रसिद्धः, तमेव भ्रमं निरष्यन्ति श्रुतयः । वस्तुतस्तु स्वरूपतो न जीवब्रह्मणोरभेदः सम्बन्धतस्त्वभेदं वयमपि स्वीकुर्मः । तस्माद् ब्रह्मणि समारोपितां विद्यां निरस्तुं त्रयोदशमन्त्राणां प्रपञ्चः—

अत्र गार्ग्याजातशत्र्वाख्यायिका सुगमतया विषये प्रतिपत्त्यर्था—ॐ ॥

**दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्मते ब्रवाणीति सहोवाचा जातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ।।१।।**

अत्र प्रथमे मन्त्रे गार्ग्ये विशेषणद्वयेन ब्रह्मविद्विरूद्धस्वभावं वर्णयति, ह इतिहासप्रसिद्धमेतत् कस्मिंश्चित् समये गार्ग्यः गर्गगोत्रः गार्ग्यनाम्नैव प्रसिद्धः । दृप्तबालाकिः बलाका नाम गार्ग्यस्य माता, तस्या बलाकायाः अपत्यं पुमान् बालाकिः अत्र सौमित्रिरिव बाह्वादिगणपाठात् बलाकाशब्दस्य **बाह्वादिभ्यश्च** (पा० अ० ४/१/९६) इत्यनेन ईञ् प्रत्यये बालाकिः । दृप्तश्चासौ बालाकिरिति दृप्तबालाकिः, दृप्तः अभिमानयुक्तः स एव बलकासुतः । नन्वत्र कथं समासः **विशेषणं विशेष्येण बहुलम्** (पा० अ० २/१/५७) उभयोरपि दृप्तबालाकिशब्दयोः गार्ग्यशब्दस्य विशेषणत्वात् ? उच्यते आकृतिगणत्वेन मयूरव्यंशकत्वात् समासः । यद् वा सौमित्रिरिव मुख्यत्वेन बालाकिशब्दे विशेष्यता दृप्तशब्दे च विशेषणतेति पूर्वेणैव समासः । अनूचानः विषयमनूद्य वक्तीति अनूचानः अनुकूलं वा वक्तीति अनूचानः अनुपूर्वं वा वक्ति इत्यनूचानः गार्ग्यः आस बभूव । यद्यपि **अस्तेर्भूः** (पा० अ० ३/४/५२) इत्यनेन आर्धधातुकविषयतायां भू आदेशे बभूवेति लौकिको प्रयोगः, तथापि **व्यत्ययो बहुलम्** (पा० अ० ३/१/८५) इत्यनेन आदेशव्यत्ययात् आसेति बभूवेत्यर्थः । अत्र दृप्तः अनूचानः विशेषणद्वयमपि ब्रह्मज्ञानविरूद्धं ज्ञानमभिमानं न सहते ।

तस्माद् गीतासु ज्ञानलक्षणपङ्क्त्याम् अमानित्वमिति सर्वप्राथम्यमुदाहृतम् । किञ्चिज्ज्ञो हि दृप्तो भवति सर्वज्ञस्तु भग्नदर्पः । दर्पो हि विकारः ज्ञानेन तस्य नाशात् । अनूचानः यो जानाति स न वक्ति, यो वक्ति स न जानाति, ब्रह्म विषय इयमेवावधारणा यथोक्तं केनश्रुतौ—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ।।**

(के० उ० २-३)

अत एव प्राह नीतिशतके भर्तृहरिः—

**यदा किञ्चिज्ज्ञोऽहं द्विप इव मदान्धः समवभवम् ।**
**तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।।**

**यदा किञ्चित् किञ्चिद् बुधजनसकाशादवगतं ।**
**तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ।।**

इयमेव परिस्थितिरत्र गार्ग्यस्य सः काशिराजमजातशत्रुं गत्वा ह निश्चयेन उवाच । किमुवाच ? हे काशिपाते ! ते तुभ्यं ब्रह्म ब्रवाणि, अत्र प्रार्थने लोट् । प्रार्थनं नाम प्रवर्तनम्, अजातशत्रुः अन्वर्थनामा न खलु ब्रह्मज्ञस्य शत्रवो जायन्ते सर्वत्र ब्रह्मदृष्टित्वात् । यथोक्तं श्रीमानसे—

**उमा जे राम चरण रत विगत काम मद क्रोध ।**
**निज प्रभुमय देखहिं जगत केहि सन करहिं विरोध ।।**

(मानस ७-११२)

रूपान्तरम्—

**उमे च ये रामपदप्रसक्ताः त्यक्त्वास्मरं रोषमदौ महान्तः ।**
**पश्यन्ति ते राममयं हि विश्वं कथं विरुन्ध्येयुरिमे हि केन ।।**

ब्रह्मन् ब्रह्मज्ञानदानामन्त्रणे तुभ्यं गोसहस्रं दद्मः । कथम् ? अत आह जनकः वेदान्तवक्ता जनकः वेदान्तश्रोता इति जना धावन्ति । भवाँस्तु जनकमिव मां संभावितवान् एतावद् पावनं ब्रह्मशब्दमुच्चार्य परमेश्वरं स्मारितवान् मया अतः सहस्रं गवां दीयते ।।श्रीः।।

अथ गार्ग्यः स्वचिकीर्षितमाह—

**स हो वाच गार्ग्यो च एवासावादित्ये पुरूष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ।।२।।**

ह निश्यनेन, सः गार्ग्यः काशिराजमजातशत्रुमुवाच व्यजिज्ञपत् तत्कथनमाह– असौ प्रत्यक्षं दृश्यमानः आदित्ये सूर्याधिकरणकः यः पुरुषः अध्यात्मे चक्षुरभिमानिदैवतं एतमेव इममेवाहं ब्रह्म इत्युपासे, ब्रह्म इति भावयन् जानामि भजे च । त्वमपि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूर्यमण्डलस्थं पुरूषं चक्षुर्वर्तिनं देवं च ब्रह्मबुद्ध्या भजस्व । इति श्रुत्वा अजातशत्रुः तमुवाचगार्ग्यमेतस्मिन् आदित्यपुरुषब्रह्मणि मा मा संवदिष्ठाः मामेति शब्दद्वयेन अंगुलया निवारयति । अस्मिन्विषये त्वं मा संवदिष्ठाः संवादं मा कृथाः अहमेतं जानामि, एषः सर्वभूतानामतिष्ठाः अतिक्रम्य तिष्ठति इत्यतिष्ठाः समस्त-प्राणिनामतिशयितः । एवं सर्वेषां मूर्धा शिरोरूपः राजादित्यराजमानः इति विशेषणत्रयविशिष्टमेतमाहमुपासे । फलमाह—एवं विशेषणकं यः उपास्ते सोऽपि स इव सर्वेषामतिष्ठाः अतिक्रान्तो मूर्धा शिर इव सम्मान्यः राजा प्रकाशमयो भवति। तस्माद् इतो विशिष्टं किमपि ब्रह्म वर्णय ।।श्रीः।।

उत्कृष्टं जिज्ञासमानेनाजातशत्रुणा प्रत्याख्यातः चन्द्राधिकरणकपुरूषं ब्रह्मत्वेनोपासितुं निर्दिशति—

**स होवाच गार्ग्यो य एवासौ चन्द्रे पुरूष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा बृहन्पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ।।३।।**

चन्द्रे तदवच्छिन्ने मनसि च बृहन् अतिशयेन वर्धनशीलः पाण्डरं श्वेतं वासः वस्त्रं यस्यतथाभूतः पाण्डरवासाः सोमः, सूयते सोमलतां सुधां च यस्तथाभूतः राजनाद्राजा एतद् विशेषणचतुष्टयसम्पनं त्वदुपदेशात् पूर्वत एव चन्द्राधिकरणक-पुरूषमुपासे। सुतः सूयमानत्वात् प्रसुतः प्रकृष्टौषधिजननाश्रयः तस्मात् परिहृत्य चन्द्रमण्डलावच्छिन्नं किमपि निरतिशयं ब्रूहि ।।श्रीः।।

एवं चन्द्रगतपुरूषविषयके द्वितीये ब्रह्मोपासने ज्ञातपूर्वतया प्रत्याख्याते ततोऽपूर्व-जिज्ञासायां गार्ग्यस्तृतीयं वैद्युतब्रह्मोपासनं निर्दिशति—

**स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ।।४।।**

विद्युति चपलायां तदुपलक्षिततैजसपदार्थे, एवं वैद्युतब्रह्मोपासने निर्दिश्यमाने मामैतस्मिन्निति काश्यः प्रत्याचष्टे । तेजस्वी अतिशयतेजोमयः शेषं सुगमम् ।।श्रीः।।

एवं तृतीयेऽपि वैद्युद्ब्रह्मोपासने प्रत्याख्याते ततोऽप्युत्कृष्टमाह स इत्यादिना—

**स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नास्यास्माल्लोकात्प्रजोद्वर्तते ।।५।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकाशे नभसि श्रोत्रदेशे च वर्तमानम् एतं पुरूषाकारमुपास्व। पूर्णनन्यूनातिरिक्तम् अप्रवर्ती न प्रवर्तते तच्छीलः। पूर्यते प्रजया परिपूर्णो भवति। असमाल्लोकात्। श्रीः

एवमाकाशस्थपुरूषब्रह्मणि प्रत्याख्यात उपास्यत्वेन ततो विशिष्टजिज्ञासायां गार्ग्य आह–

**स हो वाच गार्ग्यो य एवायं वायौ पुरूष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास · इति स य एवमेवमुपास्ते जिष्णुर्हा पराजिष्णुर्भव–त्यन्यतस्त्यजायी ।।६।।**

वायुस्थब्रह्मोपासनायां निर्दिष्टायामजातशत्रुः प्रत्याचष्ट इन्द्रः ऐश्वर्यवान् वैकुण्ठः सकलकुण्ठारहितः, अपराजिता अजेया सेना इति विशेषणचतुष्टयसंपन्नमेतं ब्रह्मबुद्ध्या पूर्वतः उपासे। जिष्णुः जयनशीलः पराजिष्णुः आन्तरविकारेषु पराजयशीलः ।।श्रीः।।

एवं वायूपासनायां प्रतयाख्यातायां ब्रह्मधिया ततो विशिष्टं ब्रह्मत्वेनोपास्यमाह—

**स होवाच गार्ग्यो य एवायमग्नौ पुरूष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ।।७।।**

गार्ग्येण अग्निष्ठे पुरूषे ब्रह्मत्वेनोपास्ये निर्दिष्टे, मामेत्यादि प्रत्याचष्टाजातशत्रुः। विशेषेण सहते हूयमानानि हवींषि यः स विषासहिः। एवमेतमुपासीनः स इव भवति ।।श्रीः।।

अथ षष्ठेऽपि ब्रह्मोपासनप्रत्याख्याने सप्तमं जलसस्थपुरूषं ब्रह्मत्वेनोपास्यमाह—

**स हो वाच गागर्यो य एवायमप्सु पुरूष एतमेवाहं ब्रह्मोपास इति स हो वाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूप ँ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ।।८।**

प्रतिरूपः अनुकूलः तन्नामावच्छिन्नं जलस्थपुरूषं ब्रह्म भावनयोपासे ।।श्रीः।।

एवं सप्तमे पक्षेऽपि खण्डिते अष्टमादर्शस्थपुरूषब्रह्मोपासनमाह—

**सहोवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स हो वाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवत्यथो यैः संनिगच्छति सर्वा ँ स्तानतिरोचते ।।९।।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आदर्शो दर्पणम्, आसमन्तात् दृश्यते दर्शकस्य आकारः यस्मिन् स आदर्शः। रोचिष्णुः प्रकाशमानः, संनिगच्छति संव्यवहरति सर्वाननतिरोचते सर्वातिशयप्रकाशयुक्तो भवति ॥श्रीः॥

एवमादर्शस्थ पुरूषे ब्रह्मभावेन समुपासनीयतया प्रतिख्याते प्राणरथं पुरूषं ब्रह्मत्वेन समर्चितुं निर्दिशति—

**सहोवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेत्येतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ हैवास्मिंल्लोक आयुरेति नैनं पुराकालात्प्राणो जहाति ॥१०॥**

गार्ग्यः उवाच-यन्तं गच्छन्तमनुलक्ष्य पश्चात् पृष्टतः यः शब्द उदेति भवति एतमेव प्राणरूपं ब्रह्म इति विभाव्य अहमुपासे। मामेति प्रतयाख्यायाजातशत्रुः प्राह—

एतमहमसुरश्नुते, सर्वं व्याप्नोतीत्यसुरूपेणोपासे सर्वमायुर्यावच्छतवर्षाणि कालात्पुरा पूर्वमकारणमृत्युना प्राणमिमं न जहाति न त्यजति ॥श्रीः॥

एवं प्राणोपासनेऽपि ब्रह्मत्वेन निराकृते दिशि तदवच्छिन्नश्रोत्रदेशे वर्तमानं पुरूषं ब्रह्मेति उपासितुं निर्दिशति—

**सहोवाच गार्ग्यो य एवायं दिक्षु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान् ह भवति नास्माद्गणश्छिद्यते ॥११॥**

द्वितीयः अवयवद्वयपूरणः अनपगः नापगच्छति तथा भूतः। यत्तु अश्विनौ दिग्देवते प्राहुः प्राञ्चः तदपौराणिकमश्विनोः घ्राणस्थत्वात् ॥श्रीः॥

एवं दशमेऽपि ब्रह्मोपासनकल्पे छायामयपुरूषे ब्रह्मोपासनं निर्दिशति—

**सहोवाच गार्ग्यो य एवायं छायामयः पुरूष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन्संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वँ हैवास्मिंल्लोक आयुरेति नैनं पुरा कालान्मृत्यु-रागच्छति ॥१२॥**

छाया प्राणिप्रतिबिम्बः **छायासूर्यप्रियाकानितः प्रतिबिम्ब मनातपः** इत्यमरः। छायैव छायामयः मृत्युः प्राणहरः ॥श्रीः॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमेकादशे पक्षेऽपि उपासितपूर्वत्वेन साधिते गार्ग्येण देहस्थपुरूषरूपाधियज्ञब्रह्म निर्दिश्यते—

**सहोवाच गार्ग्यो य एवायमात्मनि पुरूष एतमेवाहं ब्रह्मोपास स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा। आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवत्यात्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ।।१३।।**

अथ गार्ग्योऽजातशत्रुमुवाच आत्मनि शरीरे **आत्माशरीरे जीवे** च इति कोषात्। एवं देहेस्थिताधियज्ञरूपं पुरूषमहं ब्रह्मेति जान् उपासे। अजातशत्रुः प्रत्याख्यत् यदहमतः पूर्वमपि आत्मन्वी आत्मवान् इति विशेषणपूर्वकमुपासे तस्मान्मा संवादं कृथाः। एवं बुद्ध्या एतं य उपास्ते स आत्मन्वी प्रशस्तशरीरवान् भवति, प्रजा संततिरपि तस्य आत्मन्विनी स्वस्थशरीरवती जायते तस्माद् गार्ग्य सूर्यचन्द्रविद्युदाकाश-वाय्वग्निजलादर्शप्राणदिक्छायाशरीरस्थ पुरूषेषु द्वादशत्सु भवन्निर्दिष्टा ब्रह्मत्वेनोपासना मया चरितचरी। एतदवच्छिन्नं घटाकाशमिव अविद्योपहितं ब्रह्म इतोऽपि विलक्षणम-विद्यानुपहितं किमपि विशुद्धसमुपास्यत्वेन निर्दिश। अथ सकलेषु पक्षेषु प्रतयाख्यातेषु गार्ग्यो भग्नब्रह्मतत्वज्ञानाभिमानः तूष्णीमास मौनमाललम्बे इतो विलक्षणस्य विषयेऽकिंचिद्ज्ञत्वात् ।।श्रीः।।

अनन्तरं तूष्णीं तिष्ठति सति गार्ग्ये काशिराजः प्रतिक्रियां करोति अथ गार्ग्यस्तमुपर्सर्तुमिच्छति—

**सहोवाचाजातशत्रुरेतावन्नु इ इत्येतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वा यानीति ।।१४।।**

मौनं गार्ग्यं भग्नदर्पं सः अजातशत्रुः उवाच पप्रच्छ नु इति प्रश्नार्थो निपातः, यद्वा एवार्थः तव पार्श्वे एतावद् एतत्परिमाणकमेव ब्रह्मपरिच्छिन्नम् उताहो इतो विलक्षणमपि ? गार्ग्यः प्रत्युवाच-एतावता द्वादशविकल्पात्मकमेव। अजातशत्रुरपृच्छत् एतावता द्वादशविकल्पपरिच्छिन्नमात्रेण न ब्रह्मविदितं भवति। यतो हि परिच्छिन्नोपासनात् त्वं मोघमेव आत्मानं ब्रह्मज्ञमभिमन्यसे स्म। अनन्तरं सः गार्ग्य आह—इतो विलक्षणं ज्ञातुं त्वा अजातशत्रुराजानम् उपयानि उपसन्नो भवानि अत्र प्रार्थिने लोट् ।।श्रीः।।

एवं प्रार्थ्यमानं प्रति अजातशत्रोः प्रतिक्रियां श्रावयति—

**सहोवाचाजातशत्रु प्रतिलोमं चैतयद्ब्राह्मणः क्षत्रियमुपेयाद्ब्रह्म मे वक्ष्यतीतिव्येवत्वा ज्ञापयिष्यामीति तं पाणावादायोत्तस्यौ तौ ह**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पुरूष ँ्सुप्तमाजग्मतुस्तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पाण्डरवासः सोम राजन्निति सनोत्तस्थौतं पाणिना पेषं बोधयांचकार सहोततस्थौ ।।१५।।**

अजातशत्रुः गार्ग्यमुवाच—एतत् प्रतिलोमं प्रतिकूलं शास्त्रविपरीतं भविष्यति, यत् क्षत्रियम् आचार्यत्वेनाधिकृतं ब्राह्मणः, मे ब्रह्म वक्ष्यति, उपदेक्ष्यति इति उपेयात् उपसन्नो भवेत्। व्येव वि एव शब्दौ तथाप्यर्थौ अनुपसन्नमपि त्वां ब्रह्म ज्ञापयिष्यामि उपदेक्ष्यामि। अतः निवारिताचार्यभावः समिदर्पणभिक्षाहरणप्रणामादिकं, पाणौ हस्ते आदाय उत्तस्थौ, तौ सुप्तं पुरूषं जीवात्माख्यं भगवत्प्रेम समाधिसुखे शयानमाजग्मतुः। पूर्वोक्तनामार्थतो विलक्षणतां द्योतयितुं चन्द्रमसः पूर्वोक्तैश्चतुर्भिर्नामभिः अजातशत्रुराशाञ्चक्रे। हे बृहन्! हे पाण्डरवास! हे सोम! हे राजन्! जागतः आवामागतौ इति परन्तु एतन्नाम विलक्षणतया पुरूषो यदा नोदतीतरत् तदा तं पाणिना हस्तेन मर्दयित्वा बोधयाञ्चकार प्रोबोधितवान्। स पुरूषः उत्तस्थौ निद्रां त्यक्तवा उत्थितः एतेन इदमायाति यत् आत्मतत्वं सर्वतो विलक्षणम् अत एव नामभिर्बोध्यमानमपि नाबोध्यत तस्मात् भग्नसकलावरणम् परममङ्गलाचरणमशरणशरणकमलकोमलचरणं श्रीरामेव ब्रह्मोपासीत ।।श्रीः।।

पुनः अजातशत्रुः सुषुप्तिविषये विज्ञानमयस्य स्थितिं ब्रह्मज्ञानं द्रढयितुं गार्ग्यं पप्रच्छ—

**सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरूषःक्वैष तदाभूत्कुत एतदागादिति तदु ह न मेने गार्ग्यः ।।१६।।**

अजातशत्रुरपृच्छत् गार्ग्यम्—बालाके! य एषः विज्ञानमयपुरूषः सुप्तस्त्वया दृष्टः सः कुत्र अभूत्, अर्थात् किमासीत् तस्य निवासस्थलम्। कुत आगात् कस्मात् स्थानात् आगच्छत्। अर्थात् सकलोपाधिविनिमुक्तवाद् भगवदीयपूज्यत्वाच्च एतस्य सर्वस्य निवासः। अयं न कुतश्चिदागच्छति, नवा कुत्रचित् गच्छति, **एकोदेवः सर्वभूतेषु गूढः सर्वव्यापी सर्व भूतान्तरात्मा** (क० उ० १-१-३-१२) इति काठके।

**सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतो श्रुतिमंल्लोके सर्वमावृत्य तिष्ठति ।।**

(गीता १३-१४)

इति स्मृतेः श्वेताश्वोतरश्रुतेश्च, किन्तु इदं गार्ग्यो न मेने नावबुद्धवान् ।।श्रीः।।

अथ निरुत्तरं गार्ग्यं प्रति विज्ञानात्मनः शयनस्थानं स्वपितीत्यस्य निर्वचनं च प्रतिपादयति—

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सहोवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूद्य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते तानि यदा गृहणात्यथ हैतत्पुरूषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतँ श्रोत्रं गृहीतं मनः ।।१७।।**

अजा शत्रुः गार्ग्यमुपदिशति—अयं विज्ञानमयः पुरूषः यत्र शेते तं देशं शृणु येषां वागादीनां विज्ञानेन अयं विज्ञानवान् । एवम् एषः विज्ञानमादाय यो हृदयान्तर्देशे अवकाशरूपः आकाशः तस्मिञ्छेते येषां प्राणानां ग्रहणेन स्वपिति इति कथ्यते शयनकाले श्वासबाहुल्यात् । एवं चक्षुश्श्रोत्रमन आदि इन्द्रियाणि गृहीत्वा स्वशक्त्या तान् अभिव्याप्य चक्षुःश्रोत्रमन आदि संज्ञां लभते । जीवात्मनि गते तासां स्वस्वविषयसेवन- सामर्थ्याभावः प्रत्यक्षसिद्ध एव शरीरान्ते । यथा चाह ध्रुवः श्रीभागवते—

**योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां**
**संजीवयत्यखिलशक्तिधरः स्वधाम्ना ।**
**अन्यांश्च हस्तचरणश्रवणत्वगादीन्**
**प्राणान्नमो भगवते पुरूषाय तुभ्यम् ।।**

(भा० पु० ४-७-६) ।।श्रीः।।

अथ स्वप्नवृत्तिस्वरूपं निर्वक्ति—

**स यत्रैतत्स्वप्नया चरति ते हास्य लोकास्तदुतेव महाराजो भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वेशरीरे यथाकामं परिवर्तते ।।१८।।**

अयं विज्ञानात्मा, स्वप्नया स्वप्नवृत्या, यत्रापि चरति तत्र ते लोकाः लोक्यन्ते भुज्यन्ते इति लोकाः कर्मफलपरिणामभूताः शुभाशुभा आविर्भवन्ति । अत एव कदाचित् शुभकर्मपरिणामतः शुभदर्शनानि अनुभूयन्ते, स्वप्ने रोदनादिकं जनानां प्रत्यक्षतो दृष्टम् । उत इव इति पदच्छेदः, स्वप्नस्य मृषात्वात् इवेति प्रयोगः । तत्रापि अयं महाराजेव प्राणादिभिस्सार्धं भवति । ब्राह्मण इव महाब्राह्मण इव सेव्यते । व्यवहारे यद्यपि महाब्राह्मणशब्दः निन्दापरको भवति, किन्तु श्रुत्या नसोऽर्थो विवक्षितः । यद्वा शुभकर्मभोगे महाराज इव, अशुभकर्मफलभोगे महाब्राह्मण इव, यथा महाब्राह्मणः अशुभदानं गृह्णाति तथायमपि, एवमुच्चावचं शुभाशुभस्वप्नं निगच्छति प्राप्नोति । स्पष्टयति यथेत्यादि—यथा महाराजः जनपदान् गृहीत्वा स्वे जनपदे नगरे तिष्ठति तथैवायं प्राणादिभिः सह शरीरे यथेच्छं सञ्चरते ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सुषुप्तेः शरीरं निर्वक्ति—

**अथ यदा सुषुप्तो भवति यदा न कस्यश्चन वेद हिता नामनाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वाऽतिघ्नीमानन्दस्य गत्वा शयीतैवमेवैष एतच्छेते ।।१९।।**

स्वप्नानन्तरं यदा जीवात्मा सुषुप्तः प्रगाढनिद्रः भवति, कस्यचनापि सम्बन्धे न वेद न जानाति, तदा हिता नाम्नीभिः द्वासप्ततिः सहस्रसंख्याभिर्नाडीभिः पुरीततिं नाडीं बुद्धिश्च सम्मिल्य कुमारमहाराजमहाब्राह्मणधर्मा, अतिघ्नीमतिशयेन हन्ति दुःखं या सा अतिघ्नी ताम् आनन्दस्य अवस्थां लब्ध्वा सुखं शयितो भवति ।।श्रीः।।

नन्वान्मनः जगत् कथमुत्पद्यते ? इति दृष्टान्तद्वयेन स्पष्टयति—

**स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेःक्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येव-मेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वैसत्यं तेषामेष सत्यम् ।।२०।।**

यथा ऊर्णनाभिः लूता, निजनिर्मिततन्तुना विच्चरेत् तथैव परमेश्वरः निजनिर्मित-तन्तुरूपशरीरेण विच्चरेत् । अन्तर्यामिरूपेण प्रतिशरीरं तिष्ठति इति प्रथममुदाहरणं परमेश्वरपरकम् । द्वितीयमुदाहरणं जीवात्मपरकं यथा अग्नेः सकाशात् लघवः विष्फुलिङ्गा व्युच्चरन्ति क्षुद्राः तथैवेमे जीवात्मानः अणुत्वधर्माणः व्युच्चरन्ति । तत्र सर्वे लोकाः सर्वे देवाः ब्रह्मादयः सर्वाणि भूतानि चराचराणि व्युच्चरन्ति प्रादुर्भवन्ति । तस्य परमात्मनः एषा उपनिषत् भगवत्प्रतिपादिका । सत्यस्य सत्यं, प्राणाः सत्यं, तेषामपि सत्यं परमात्मा **स उ प्राणस्य प्राणाः** (के० उ० १-२) इति श्रुतेः । तस्यापि सत्यं परमात्मा स च सर्वेषां सत्यनां सत्यम् । यथोक्तं श्रीभागवते दशमे देवकृतश्रीकृष्णगर्भस्तुतौ—

**सत्यव्रतं सत्यपरं त्रिसत्यं**
**सत्यस्य योनिं निहितं च सत्ये ।**
**सत्यस्य सत्यं भृतसत्यनेत्रं**
**सत्यात्मकं त्वां शरणं प्रपन्नाः ।।**

(भा० पु० प० २-२६)

**इति बृहदारण्यकोपनिषदि द्वितरीयाध्याये श्रीराघवकृपाभाष्ये अजातशत्रुब्राह्मणं प्रथमं सम्पूर्णम् ।**

**।। श्रीराघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अथ द्वितीयब्राह्मणम् ।।

अथ सोपकरणकं मध्यमप्राणं शिशुसंज्ञकं वर्णयति ।

**यो ह वै शिशु॑ँ साधान॑ँ सप्रत्याधान॑ँ सस्थूण॑ँ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि । अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवा धानमिदं प्रत्याधानं प्राणः सथूणान्नं दाम ।।१।।**

यः आधानप्रत्याधानस्थूणादामभिः सहितं मध्यमं प्राणं शिशुं वेद सः द्वेषं कुर्वतः भ्रातृव्यरूपान् सप्तमनोबुद्धिसहितान् प्रतिरुणद्धि, हिनस्ति । तथा हि आधीयते जीवात्मा यस्मिन् तत् आधानं तेन सह वर्तमानं साधानं सशरीरमित्यर्थः । प्रतिपत्या आधीयन्ते विचाराः यस्मिन् तत्प्रत्याधानं शिरः, तेन सहभूतं स्थूणः अवष्टम्भः बन्धनस्थानं तेन सहितं सस्थूणं, दाम अन्नं प्राणानां धारकत्वेन बन्धनभूतत्वात्, तेन सहितम्, विदन् सर्वान् प्रत्यवायान् हन्ति ॥ श्रीः ॥

अथ तस्य नेत्रयोः सप्त अक्षितीः रेखाः व्याकरोति—

**तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन्लोहिन्यो राजयस्ताभिरेन॑ँ रूद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो या कनीनका तयादित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरयैनं वर्तन्या पृथिव्यमन्वायत्ता द्यौरुत्तरयानास्यान्नं क्षीयते य एवं वेद ।।२।।**

एताः सप्त अक्षितयः तत्तद्देवमाध्यमेन उपतिष्ठन्ते स्तुवन्ति । तथा अक्षिणि याः लोहितराजयः रक्तरेखा ताभिःरूद्रः, नीललोहितत्वात् । या आपः अश्रुबिन्दवः ताभिः पर्जन्यः मेघ उपतिष्ठते अम्बुमयत्वात् । कनीनिकया दर्शनशक्त्या सूर्यः । कृष्णया अग्निः कृष्णवर्त्मत्वात् । शुक्लया रेखया इन्द्रः । अधरवर्तन्या पक्ष्मनामिकया पृथिवी सेवते । उत्तरया द्यौः द्युलोकः । एवं जानानस्य अन्नं क्षीणं न भवति ।।श्रीः।।

अथ श्रोत्रादिप्राणैः सह शिरसि चमसस्य यज्ञपात्रस्य भावनं प्रस्तौति—

**तदेष श्लोको भवति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम् । तस्या सत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदानेति । अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इतीदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपमिति प्राणा वै यशो विश्वरूपं प्राणानेतदाह तस्या सप्त ऋषयः सप्त तीर प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वागष्टमी ब्रह्मणा संवित्ते ।।३।।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् एषः श्लोकः मन्त्रः भवति । चमसस्य अर्वाग्नीचैः बिलं छिद्रम् ऊर्ध्वं बुध्नः उत्थितभागः वर्तुलाकारः, तस्मिन् विश्वरूपं यशोरूपं रसः निहितं भवति । एवं सप्ततीरे सप्तऋषयः ब्रह्मण ईश्वरस्य संविदानात् ज्ञानं कुर्वती अष्ठमी वाक् तदभिमानिनी देवता, उपरितनभागस्य व्याख्यानभूतोऽयमुत्तरार्धः ।।श्रीः।।

अथ उत्तमाङ्गस्य श्रोत्रादिसप्तच्छिद्रेषु सप्तर्षीणां भावनां करोति—

**इमावेव गोतमभरद्वाजावयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निरिमावेव वसिष्ठकश्यपावयमेव वसिष्ठोऽयं कश्यपो वागेवात्रिर्वाचा ह्यन्नमद्यतेऽत्तिर्ह वै नामैतद्यदत्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति य एवं वेद ।।४।।**

एवं गोतमो दक्षिणकर्णे भरद्वाजो विश्वामित्रो दक्षिणनेत्रे, जमदग्निवामनेत्रे, वसिष्ठो दक्षिणनासापुटे कश्यपो वामनासापुटे वाण्यामत्रिः अत्तीति अत्रिः वागिन्द्रियेण रसना–नामकेन अन्नमत्ति अतः रसनायां वागिन्द्रियसंयुक्तानामत्रिभावना करणीया एवं विदन् सर्वेषामन्नानां वेत्ता भवति ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि द्वितीयाध्याये श्रीराघवकृपाभाष्ये द्वितीयब्राह्मणं समपूर्णम् ।**

**।। श्रीराघवः शन्तनोतु ।।**

## ।। अथ तृतीयब्राह्मणम् ।।

## अथ मङ्गलाचरणम्

**मन्दाकिनीवारिविधूतपादं**
**कृतप्रसादं विगलद्विषादम् ।**
**क्षणप्रभाचन्द्रघनावदातं**
**रामं तृतीयं कलये तृतीये ।।**

अथ सत्यस्यसत्यमिति प्राणानामुपनिषदः सत्यस्य सत्यमित्युक्ताः, इदमेव विस्पष्टयितुं तृतीयब्राह्मणप्रारम्भः ।

तत्र प्रथमं ब्रह्मणो रूपद्वयं व्याचष्टे । ब्रह्म हि द्वेधा एकम्अवतारिरूपं साकेते, अपरमवताररूपं श्रीमदवधनिकेते । यद्वा एकं सर्वेषां कारणं, नेति नेति व्याख्यानविषयं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संसारातीतम् । अपरं प्रतिजीवहृदयकोशं विराजमानं काठगतपावकमिव कार्यरूपम् । उभयमपि सूक्ष्यमस्थूलचिदचिद्भ्यां विशिष्टम् । तदेव विशिष्टयोः कारणकार्यब्रह्मणोरद्वैतमिति विशिष्टाद्वैतम् । तद् वदति शास्त्रतः स्थिरीकरोतीति विशिष्टाद्वैतवादः । एष एव श्रीवैष्णवानां नः सिद्धान्तः । यथा एक एवाग्निर्द्विधा भवति तथैव भगवानपि द्विधा भाति संसारयुक्तः संसारातीतश्च । यथा काष्ठगतस्याग्नेर्नापक्षीयतेऽग्नित्वं, तथैव प्रतिजीवहृदयकोशं विराजमानस्यापि भगवतः स्वरूपसत्ता नापक्षीयते । यथोक्तं गोस्वामिपादैः—

**एक दासगत देखिय एकू । पावक जिमि जुगब्रह्म विवेकू ।**

(मा० १-१३-४)

एतद्रूपान्तरम्—

**एको दासगतो भाति साक्षादेकश्च दृश्यते ।**
**यथाग्निस्तद्वदेवोह्ये स्वरूपे द्वे तु ब्रह्मणः ।।**

इदमेव कारणब्रह्म कार्यब्रह्मनाम्ना व्याख्यायते । ब्रह्मणः स्वरूपद्वयम् यत्तु सगुणं संसारगतं ब्रह्म मलिनमिति व्याचक्षते मायाविनो मायावादिनः तदशास्त्रीयम् **न लिप्यते लोकदुःखेन बाह्यः** (क० उ० २-२-११) इति श्रुतेः । ननु ब्रह्मणो द्वैरूप्ये किं विनिगमकमिति चेत् प्रत्यक्षं वेदानुवचनञ्च, तत्र प्रत्यक्षंऋषीणां श्रीवैष्णवभक्तानां श्रीमदाद्यरामानन्दाचार्यतुलसीदासप्रभृतीनां वेदानुवचनञ्चास्मादृशां श्रीराघवेन्द्रभृत्यभृत्यतां समीप्सताम् । शाब्दं यथा **तत् सृष्ट्वा तदेवानुप्राविशत् रूपं रूपं प्रतिरूपो बहिश्च** इत्यादि श्रुतेः । **ईश्वरः सर्वभूतानां हृद्देशोऽर्जुन तिष्ठति** इत्यादि स्मृतेश्च । इदं सर्वं मनसि कृत्य तृतीयं ब्राह्मणं प्रारभ्यते —

**द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ।।१।।**

वाव इति निपातद्वयम् द्वयोरपि ब्रह्मरूपयोर्निश्चयार्थम् । रूप्यते बोध्यते गृह्यते वा ब्रह्म याभ्यां ते रूपे । रूपद्वयीमाह–मूर्तञ्चामूर्तमेव च, मूर्त सगुणं साकारं पृथिवीजलतेजोऽवच्छिन्नं तत्र दिव्या पृथिवी, दिव्यं जलं, दिव्यं तेजश्च । अत एव दिव्यपृथिवीत्वगुणगणविशिष्टा पृथिवीसुता भगवती सीता तत्, कं कन्दर्पकोटि–कमनीयाकिशोरमूर्तिकं भगवतः श्रीरामस्य मूर्तं रूपमविच्छिन्नं मुहूर्तं सततमुपास्ते । यत्तु मूर्तमिति मूर्छितावयवमिति व्याचष्टे गोविन्दपादविधेयः तन्न, तथा व्याख्याने नास्कित्वापत्तेः । वस्तुतस्तु येषां नेत्रं कोटिकोटिजन्मान्तरकुवासनाधूलिधूम्रं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कामिनीकटाक्षकठिनकरालकार्मुकासननाराचनिखातनिलूनभगवद्दर्शनसामर्थ्यं तत् कथं कोटिकोटिकन्दर्पकमनीयसीताभिरामरमणीयलावण्यलक्ष्मीललितनवनलिन-चरणमैथिलीहृदयाभरणसकल लोकैकशरणपरमकरूणसमरुणतरुण जगदलङ्कारसहकार कामारिहृदयानन्दाकारमूर्तिमत्सौन्दर्यसारघोर संसारभारापहार विडम्बितकोटिकोटिमार शिरीषकुसुमसुकुमार परमकृपाकूपारघोरसंसारसागरप्लवपदपल्लवस्य कलिमल-कदनशोभासदनवनजवदनदशनदीधितिनिन्दितकोटिकोटिशरदमलमृगाङ्कज्योत्स्ना निकुरम्बसमवलम्बमान कारूणीकल्लोलिनीकदम्बसदवलम्ब विलम्बितविडम्बितवाल-दिवाकरस्य भवभयतरुणतमीहरहरहृदयवापिविहारपरिकर निकरनिवीतपीत-वासस्समुच्छवलित कनककपिशच्छविकपिशोत्सङ्गकृतोपवर्हणनिखिलभुवनरचनाचातुरी-समातुरीकृतद्रुहिविमाननपरायणसकल सुषमासमर्हण चरणसरसिज विनत प्रणतसततशतशतप्रततविततदुरितनिचयनिवर्हण गुणगणबहुलतरणिवंश-गौरवविख्यातवैभवनरपतिनन्दनपङ्क्तिस्यन्दनगृहमेधिनीसमेधितवात्सल्यसुधाधाराधरीकृत श्रीनिकेतसाकेतास्वादचारूचुम्बनचुम्बितश्रीमदाननारविन्दस्य वृन्दारकवृन्दवधूवरूथ यूथिका यूथनिगुम्फितमलिनीकृतमनोमालिन्य सौमनस्यसमन्वितसौमनसमालाललित श्रीविग्रहविशुद्धबोधविग्रहस्य कृतपौलस्त्यकुलापसददुरासददशवदनसभासद निकरसकलसद्गुणश्रुतिविहित सद्धर्मसंग्रह सकल लोकमलापह सुविमलकीर्तिकौमुदीप्रमोदितकोटिकोटिकिङ्कर कपि कोलकिरातकैवर्तकौणपकैरव-समुच्छ्रितकृतान्तभीषण शौर्यधैर्यचणसकलविलक्षणक्षणदाचरक्षपणक्षणरणविचक्षणस्य सततसुजनरक्षणदक्षदक्षकरमण्डनकोदण्डरवनिरस्तसकलमायाप्रपञ्चविफलीकृत-पञ्चवाणप्रपञ्चगजासुरगजपञ्चाननपञ्चाननप्रभृतिलेखाधीशदिगीशसङ्गीत भावपरीत-परमप्रबलपराक्रम मैथिलीमनोरमपुराणपुषोत्तमसकललोकपालभूपालसतत– भग्नभक्तभवभय प्रशान्तोपशमकठिनक्लममहामोहभ्रमविभ्रमपरिश्रम निरस्तमायाकूटचित्रकूट-विहरणविचक्षणगोतमगृहिणीगृहीत पापशिलाविनाशनचुञ्चु पतितपावन-पविलक्षणमैथिलीपरमपूतनयनपङ्केरूह पक्ष्मपरिशीलितविपक्षपक्षपात कोमलकमल-चरणसमुच्छलित प्रेमपराग परागानुरागरञ्जितभरत लक्ष्मणरिपुसूदनसपत्नसैन्यसूदन-मुखकमलकलितदध्योदनहनूमत्प्रेमवापी मरालकृपालुचूडामणिभक्तवत्सलसमवाप्त समस्तकामसकललोकलोचनाभिरामनिखिलभुवनाभिरामश्रीरामस्य भग्नभवकूपं फुल्लेन्दीवरश्यामसुमनोऽभिरामरूपं द्रष्टुं पारयिष्यति ।

वस्तुतस्तु मूर्तं समुच्छ्रितावयवं मूर्छितखलकुलावयवं च । **मूर्छामोह समुच्छ्राययोः** इति धातुपाठे पाणिनीयानुशासनात् । अमूर्तम् अव्यक्तमूर्तिकं रावणादीनामिव । साम्प्रतमपि मोघमौपनिषदं मन्यमानानां हृदयकलितभगवत्वाभिमानानां श्रुति-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सिद्धान्तसादिनाम् । मर्त्यं मर्त्यावतारं, तथा हि म्रियन्ते इति मृताः मनुष्याः, तेषां शिक्षणमेव मुख्यं प्रयोजनं यस्य तन्मर्त्यम् । तथा हि श्रीभागवते—

**मर्त्यावतारस्त्विह मर्त्यशिक्षणं**
**रक्षो बधायैव न केवलं विभो ।**
**कुतोऽन्यथास्याद्रमतः स्व आत्मनः**
**सीताकृतानि व्यसनानीश्वरस्य ।।**

(भा० पु० ५-११-५)

यत्तु मर्त्यं मरणधर्मि इति प्राह जगद्गुरुमन्यमानः शङ्कराचार्यः तत्तु पूर्णमनर्गतम् भगवद्भक्तिविमुखप्रलपितम् ।संसारगतोऽपि भगवान् न लोकदुःखेन युज्यते । सर्वलोकसाक्षिसूर्यो यथा चाक्षुषैर्दोषैर्न लिप्यते तथैव संसारं गतोऽपि परमात्मा प्राकृत इव जननमरणादि दुःखैर्नानुविद्धो भवति । तथा काठकाः पेठुः **सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः** ।(क० उ० २-२-११) इति श्रुतेः । अमृतं मरणधर्मरहितं मृताः मनुष्यास्तद्विलक्षणम् **त्रिपादस्यामृतन्दिवी** (शु० य० वे० ३१-३) । चकारः समुच्चयार्थः, पूर्वत्रैवकारस्तु तृतीयत्वयोगव्यवच्छेदार्थः । स्थितं भक्तहृदये तत्प्रणयरसनया निबद्धपदपद्मं निवृत्तगतिकम्, यत्तु स्थितमित्यस्य मलिनसत्ववत्वाद् ब्रह्म बद्धम्, इति कश्चित् कालकूटं ववाम तदप्यनर्गलम् अनुपदमेव दत्तोत्तरपदत्वात् । यच्च एति भक्तानां सम्मुखं गच्छति, इति यत् सत्रन्तरूपं, सत् अस्तीति सत् तदेव पापिनां कृते त्यत् परोक्षम्, अथवा अस्माकं वैष्णवानां कृते सत् प्रत्यक्षदर्शनक्षमं मायावादिनां परोक्षब्रह्मणां कृते त्यत् ।

अत्र सगुणनिर्गुणयोर्ब्रह्मणोः यथाक्रमं प्रत्येकं चत्वारि चत्वारि विशेषणानि । सगुणं मूर्तं मर्त्यं स्थितं यत् सत् त्यत् अत्र मूर्तं विशेष्यं शेषाणि विशेषणानि । एवमेव अमूर्तं निर्गुणं ब्रह्म, तस्यैव अमृतं स्थितं यत् त्यत् इमानि विशेषणानि । मूर्तशब्दस्य व्याख्यानं कृतपूर्वं तत्र समग्रसगुणत्वप्रतिपादकशब्दो व्याख्यातः । ननु सगुणं साकारं निगुर्णं निराकारमिति पक्षे एकत्रब्रह्मणो रूपाभावापत्तिरिति चेन्न, निर्गुणशब्दात् सर्वदा सकंलकल्याणगुणगणैः सह वर्तमानत्वं नित्यसम्बन्धेन सकलश्रेयोगुणाकरत्वं वा निर्गुणत्वं निर्लीनगुणत्वे सति निरुपमगुणत्वे सति निरतिशयगुणत्वे सति निःशेषगुणाश्रयत्वं, तस्मादमूर्तशब्देन ब्रह्मणो निराकारतेति न भ्रमितव्यं-**रूपंरूपं प्रतिरूपं बहिश्च, सर्वतः पाणिपादं तत्** युवा सुवासाः परिवीत आगाः एवमादीनां श्रुतिशतानां प्रामाण्यात्, **अवजानन्ति मां मूढाः मानुषीं तनुमाश्रितम्** (गीता० ९-११ ) ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पश्य मे पार्थ रूपाणि**–(गी० ११.८) **त्वत्तः कमल पत्राक्ष** –(गीता-११,२) इत्यादिस्मृतीनामनुरोधाच्च। न च मूर्तत्वस्वीकारे ब्रह्मणि पृथ्वीजलतेजोवच्छिन्नत्वापत्तिरिति वाच्यं, तेषां दिव्यत्वस्योपपादितचरत्वात्। तथा हि–अयोध्यायां मूर्तं मूर्छिन्ति रावणादयो येन तादृशं श्रीरामाख्यं ब्रह्म अमूर्तं साकेते अनूपमूर्तिकम्। यद्वा अकारो वासुदेवः मूर्च्छति यस्य सकाशात् यस्माद् वा, भगवतः सौन्दर्येण हि विष्णुरपि मूर्छितो भवति। ननु भोःकिमन्तरं विष्णुरामयोः, यदिचेद् राम एव विष्णुः। तर्हि स्वयमेव स्वं दृष्ट्वा कथं मुह्येत् ? यदि चेद् विष्ण्वतारः सः तर्हयवतारिणोऽवरत्वात्तस्य मोहकत्वानुपपत्तिः। सत्यं सावधानं श्रणु-अवतार्यपेक्षया अवतारे समधिकसौन्दर्यम्। किं मानमिति चेत् **स उ श्रेयान् भवति जायायमानः** इति श्रुतिरेव गृह्यताम्। अतएव प्राहूरसिकाः, तद्यथा–श्रीआनन्दवृन्दावनचम्प्वाम्—

**रत्नस्थले जानुचरः कुमारः संक्रान्तमात्मीयमुखारविन्दम्।**
**आदातुकामस्तदलाभखेदान् निरीक्ष्य धात्रीवदनं रूरोद॥**

एवमेव–

**यन्मर्त्यलीलौपयिकं स्वयोगमायाबलं दर्शयता गृहीतम्।**
**विस्मापनं स्वस्य च सौभगर्द्धेः परंपदं भूषणभूषणाङ्गम्॥**

(भा० ३-२-१२)

भूषणभूषणाङ्ग इत्यत्र भूषणानां भूषणानि अङ्गानि यस्य तत् इति समासः। अतएव श्रीमानसेऽपि–

**रूपरासिनृप अजिर विहारी नाचहिं निज प्रतिबिम्बनिहारी।**

(मा० ७-७-८/८)

रूपान्तरम्—

**रूपराशिर्नृपालस्य विहरन्नजिरे प्रभुः।**
**निजस्य प्रतिबिम्बानि नृत्यति स्म निहारयन्॥**

इदमभ्युपगमवादेन व्याख्यातं तुष्यद्दुर्जनन्यायानुरोधेन। वस्तुतस्तु श्रीरामो विष्णोरपि विष्णुः महाविष्णुः। नन्वत्र व्याख्याने किंमानमिति चेत्—

**चिन्मयेस्मिन् महाविष्णौ जाते दशरथे हरौ।**

इतिरामतापनीयश्रुतिरेव। अथ—

**तमसः परमो धाता शङ्खचक्रगदाधरः।**
**श्रीवत्सवक्षा नित्यश्रीरजय्यः शाश्वतो विभुः॥**

(बा० रा० १११,१२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महर्षिणा बाल्मीकिना शंखचक्रगदाधरः श्रीवत्सवक्षा इत्युभाभ्यां विशेषणाभ्यां श्रीरामे विष्णुत्वमेव प्रत्यपादि न महाविष्णुत्वं, यतो हि विष्णुरेव शंखचक्रगदाधरः एतल्लक्षणत्वेन तस्यैव प्रसिद्धेः, इति चेन्मैवमत्र शंखचक्रगदाः सन्त्यस्य आयुधानि इति शंखचक्रगदः अर्श आदित्वात् अच् प्रत्ययः, शंखचक्रगदावानितिभावः। शंखचक्रगद एव अः इति शंखचक्रगदाः तमेव धरति प्रतिरोमाणि यः स शंखचक्रगदाधरः। अथवा शंखचक्रगदाभिः उपलक्षितः अः विष्णुः इति, शंख चक्र गदा अ धर इति पदच्छेदत्रयम्। एवमेव श्रीः सीता, सा वसति यस्मिन् तत् श्रीवत्सं श्रीवत्सं वक्षः यस्य सः श्रीवत्स वक्षाः। नन्वत्र व्याख्याने किं मानं, नित्यश्रीः इति अग्रिमविशेषणमेव। चपलस्वभावात् विष्णोः लक्ष्म्याः नित्यत्वानापत्तेः, अर्थात् नारायणं त्यक्त्वा लक्ष्मीः कदाचित् याति, किन्तु न सीता रामं विहाय। अतः प्राह मानसे सुमन्त्रं प्रति भगवती मैथिली—

**प्रभा जाई कहँ भानु बिहाई, कहँ चन्द्रिका चन्द्र तजि जाई।**

(मा० २.९७.६)

रूपान्तरम्—

**कुत्र यातु प्रभा सौरी विहाय दिवसेश्वरम्।**
**कुत्र यायात् कृपासिन्धो त्यक्त्वा चन्द्रञ्च चन्द्रिका॥**

तस्मात् नित्यश्रीरित्यस्य नित्याश्रीर्यस्य सः नित्यश्री इति व्याख्यानम्। ननु—

**अक्षय्यं मधुहन्तारं जानामि त्वां सुरेश्वरम्।**
**धनुषोऽस्य परामर्शत्स्वस्ति तेऽस्तु परंतप॥**

(वा० रा० १-७६-१७)

इति परशुरामोक्तौ श्रीरामस्य कृते मधुहन्तारमिति विशेषणप्रयोगात् प्राचेतसेन तत्र विष्णुत्वमेव साधितम्। मधुनामकदानवं विष्णुरेव हतवान् इति पुराणप्रसिद्धेः। एवमेव—

**स हि देवैरुदीर्णस्य रावणस्य वधार्थिभिः।**
**अर्थितो मानुषे लोके जज्ञे विष्णुः सनातनः॥**

(वा० रा० २-१-७)

इत्यत्राऽपि जज्ञे विष्णुः सनातनः इत्युक्त्याऽपि रामस्य विष्णुत्वमेव प्रतिपादितम्। तस्माद्भवतां विवरणं वेदसम्मितश्रीमद्रामायणवचनव्याकोपावहमिति चेन्मैवम्— मधुहन्तारमित्यत्र पदद्वयं मधुहमित्येकं तारं द्वितीयं, हमितिमकारस्य **मोऽनुस्वारः**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यनुस्वारे **वा पदान्तस्य** इत्यनेन परसवर्णे मकारपरीभूततकारसावर्णेन नकारः। एवं मधौ चैत्रमासे **मधुश्चैत्रे वसंते च मद्येपुष्परसेतथा** इति कोषात्। तस्मिन् मधौ चैत्रे जिहीते गच्छति पुत्रीभूय श्री अयोध्यायामिति मधुहः तं मधुहम्, तारयति संसारसागरात् भक्तान् यः स तारः तं तारम्। अत एव राममन्त्रं रामनाम च तारकमितिसमामनन्ति श्रुतयः।

**तारकं ब्रह्म व्याचष्टे इति श्रुतेः।**

तथा हि मधुहन्तारमित्यत्र नैव मधुहन्तृशब्दात् ऋदन्तलक्षणगुणतृजन्तलक्षणदीर्घ-बलेन द्वितीयैकवचनान्तता। एवमेव जज्ञे विष्णुः सनातनः इत्यत्र विष्णुशब्दस्य सनातनविशेषणेनैव महाविष्णुत्वं, सनातनो विष्णुः श्रीरामरूपेण जज्ञे न तु कल्पमात्र-पर्यवसायी तत्र सनातनत्वाभावात्, यद्वा जज्ञे विष्णुरित्यत्र जज्ञेऽविष्णुः इति पदच्छेदः अविष्णुः विष्णुभिन्नः विष्णुसदृशः सादृश्यं श्रीवत्सलाञ्छनत्वादिना भिन्नत्वं गुणानवच्छेदेन। यद्वा अकारं वासुदेवमपि वेष्टयति विवेष्टि इति अविष्णुः एवं सर्वमनवद्यम्। प्रकृते अः विष्णुः अपि मूर्छयति यस्मात् सः अमूर्तः श्रीरामः तं तथोक्तं श्रीमानसे—

**हरि हितसहित राम जब जोहे। रमासमेत रमापति मोहे।।**

(मा० ३१६.३)

एतद्रूपान्तरम्—

**यदा व्यलोकयद्रामं हितेन सहितो हरिः।**
**तदा रमासमेतोऽसौ मोहं यातो रमापतिः।।**

एवं मरणमेव मर्त्यं मृङ्धातोः औणादिकेतच् प्रत्यये भावे गुणे मर्त्यमिति सिध्यति, तं भक्तस्य मरणं यापयति दूरीकरोति इति मर्त्यं मर्त्याकारम्। तदयोध्यायां मानवचेष्टामनुकुर्वदमर्त्यममृतं मानवाकारमपि मानवचेष्टातोऽभिन्नं स्थितम् अयोध्यायाः राजसिंहासने विराजमानं, यत् स्मर्यमाणपदाम्बुजं सत्, एति साकेतलोकादपि धावति तथाभूतं यत्, इण् धातोः शतरि अनुबन्धलोपे इणोयण् इत्यनेन यण् प्रत्यये यदिति सिध्यति। सत् अस्ति सर्वदैवविराजते श्रीमदयोध्यायां श्रीचित्रकूटाद्रौ च तदेव सत्। यथोक्तं गोस्वामिपादेन श्रीदोहावल्याम्—

**चित्रकूट सब दिन बसत प्रभु सियलखनसमेत।**
**रामनाम जप जापकहि तुलसी अभिमत देत।।** (दोहा० २)

रूपान्तरम्—

**दिनेषु सर्वेषु च चित्रकूटे ससीतया सानुजरामचन्द्रः।**
**वसन्ददातीप्सितमर्थ्यमानः रामेतिजप्त्रे तुलसी ब्रवीति।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्यत् साकेतलोके विराजमानं भगवद्विमुखानां परोक्षभूतम् । एवम्—

**चतुर्णां च चतुर्णां च प्रकाराश्च प्रकारतः ।**
**सगुणं निगुणं चेति ब्रह्माहं व्याकरोम्मुदे ।।**

अथ मूर्तामूर्तविभागपूर्वकं मूर्तस्य रसं वर्णयति—

**तदेतन्मूर्तं तदन्यद्वायोश्चान्तरिक्षाच्चैतन्मर्त्यमेतत्स्थितमेतत्सत्तस्यैतस्य मूर्तस्यैतस्य मर्त्यस्यैतस्य स्थितस्यैतस्य सत एष रसो य एष तपति सतो ह्येष रसः ।।२।।**

यद् वायोः अन्तरिक्षाच्च अन्यं विलक्षणं पृथिवीजलतेजोमयं रुपरसस्पर्शार्हं तदेव मूर्तं, तदेव पार्थिवगुणतया मर्त्यं, जलगुणतया स्थितम्, आधारापेक्षित्वात् तदेव सत् अस्तित्ववत् तैजसस्त्वात् । एवं गुणत्रयविशिष्टस्य यः रसः साररूपः तेजोमयाकारः स एव आदित्ये सूर्ये उपलक्षणतया चन्द्रमस्यग्नौ च तपति । आध्यात्मिकपक्षे चक्षुषि वाचि मनासि च विजृम्भते । एषः सतः परमार्थतया तेजोरूपस्यैव परमात्मनः सारः यथोक्तं श्रीवाल्मीकीये—

**तं तपन्तमिवादित्यमुपपन्नं स्वतेजसा ।**
**ववन्दे वरदं वन्दी विनयज्ञो विनीतवत् ।।**

(वा० रा० २-१६-११)

अथामूर्तस्य निर्गुणस्य परमात्मनः सारं वर्णयति—

**अथामूर्तं वायुश्चान्तरिक्षं चैतदमृतमेतद्यदेतत्त्य त्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो य एष एतस्मिन्मण्डले पुरुषस्त्यस्य ह्येष रस इत्यधिदैवतम् ।।३।।**

अथ वायुः अन्तरिक्षञ्च रूपरसतेजोरहिते तन्मयत्वात् समानाधिकरणे प्रथमा, इदमेव अमृतमतिमानुषं, यत् एति इति यत् वायोरिव सर्वलोकगम् एवम् धर्मचतुष्टयसम्पन्नस्य अस्य रस एव सारः संजीवनशक्तिरूपः समस्ते मण्डले ब्राह्मण्डे व्याप्तः, अत एव रामनामनिर्वचनप्रसङ्गे श्री गोस्वामितुलसीदासैरूक्तम्—

**जो आनन्दसिन्धु सुख रासी । सीकर ते त्रैलोक सुपासी ।**
**सोसुखधाम राम असनामा । अखिललोक दायक विश्रामा ।।**

(मानस १-१९७=५-६)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतद्रूपान्तरम्—

**आनन्दसिन्धुश्च सुखस्य राशिः यस्सीकरान् मोदयते त्रिलोकीम् ।**
**तस्याभिधानं सुखधाम रामः विश्राम दाता भुवनस्य यो वै ।।**

अथाध्यात्मदृशा मूर्तामूर्तविभागं वर्णयति—

**अथाध्यात्ममिदमेव मूर्तं यदन्यत्प्राणाच्च यश्चायमन्तरात्मन्नाकाश एतन्मर्त्यमेतत्स्थितमेतसत्तस्यैतस्य स्थितस्यैतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ।।४।।**

अथ एतदन्तरमध्यात्ममात्मनि विषये व्याख्यायते—इदं प्रत्यक्षवर्तमानं यच्च प्राणात् शरीरवायोः, यश्च हृदयात्मनि आकाशः अवकाशत्वात्, तस्माद्विलक्षणं पृथिवीजलतेजोमयं भूतत्रयात्मकम् इदमेव पूर्वोक्तविशेषणसम्पन्नम् एतस्य मूर्तस्य आकारवतः मर्त्यस्य प्राणिचेष्टस्य स्थितस्य अस्तित्वयुक्तस्य चक्षुरेव रसः सारभूतः तेजोरूपत्वात् ।

अथ सविषेषकमाध्यात्मममूर्तं व्यावृणोति—

**अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यदेतत्त्य त्तस्यैतस्यामूर्तस्यैतस्यामृतस्यैतस्य यत एतस्य त्यस्यैष रसो योऽयं दक्षिणेऽक्षन्पुरूषस्त्यस्य ह्येषः रसः ।।५।।**

अथाध्यात्मं व्याख्यायतेऽमूर्तम्— अमूर्ते वाय्वाकाशे तथैव तन्मयत्वात् प्राणः वाय्वीयः हृदयान्तर्गतआकाशः इमे द्वे अमूर्ते । अवतारि सन् परमात्माऽपि वायोरिव सूक्ष्मः आकाश इव निर्लेपः यथोक्तं श्रीगीतासु—

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ।।**

(गीता–१३-३२)

एवम् व्यक्तमूर्तिकस्य, मर्त्यचेष्टाभिन्नस्य, गमनशीलस्य, सामान्यतः परोक्षस्य सारभूतो रसः प्राणिनो दक्षिणेऽक्षिण वर्तमानः पुरूषः उभयमयत्वात् ।।

एवं दक्षिणेऽक्षिण वर्तमानस्य पुरूषस्य स्वरूपं निर्वक्ति—

**तस्य हैतस्य पुरूषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाऽग्न्यर्चिर्यथा पुण्डरीकं यथा सकृद्विद्युत्त ँ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेदाथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्त्यथ नामधेय ँ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ।।६।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हं निश्चयेन, तस्य पूर्वं वर्णितस्य एतस्य दक्षिणऽक्षिण वर्तमानस्य रूपं वर्णयति। जीवाः खलु त्रिगुणावच्छिन्नाः त्रेधा षोढा च भवन्ति, प्रधानसत्वाः प्रकटसत्वाः अभिभूतसत्वाः, उद्भूतरजसः अनुद्भूतरजसः उत्कटतमसः अणुत्कटतमसश्च। एवमेवात्र ब्राह्मणोऽपि षोढा रूपविभागः– भास्वरशुक्लमभास्वरशुक्लम् भास्वरपीतमभास्वरपीतम् भास्वररक्तमभस्वररक्तम् रूपविभाजनमस्य हि षोढा एषाम् षण्णां, यथाक्रममुपमानान्यूह्यानि तथाहि– महारजनं हरिद्रः तेन रक्तम् माहारजनं, शौक्ते उदाहरण– द्वयम् प्रकटितसत्वहृदये परमात्मनः पुण्डरीकमिव भास्वरकमलं यथा भास्वरशुक्लावच्छिन्नरूपं भवति। सत्वबहुलत्वेऽपि अविद्यया ईषदभिभूते आविकम् अवेः मेषस्य इदं और्णमिव अभास्वरं भवति, रक्तमपि द्वेधा येषां हृदयं रजःप्रधानत्वेऽपि सत्वेन किञ्चिदभिभूतरजस्कम् तत्र इद्रगोपस्य इव अभास्वर रक्तं, यद् हृदयं अभिभूतरजस्कम् न तत्र भास्वररक्तम् अग्नेरर्चिरिव यदन्तःकरणम् अनमिभूत तमस्कम् तत्र परमात्मोरूपम् हरिद्रारञ्जितवस्त्रामिव अभास्वरपीतं, यत् स्वान्तं अभिभूततमस्कम् तत्र विद्युत्तेव व्याप्तं भास्वरपीतमित्थमेव भगवताऽपि युगावतारक्रमे शुक्लं रक्तं पीतमिति त्रेधा रूपमेतस्मात् परं यदतिशी-यामुनजलतमाल केकिकण्ठ नवजलधरेन्दिवरमरकतमणेः सन्निभं स्यामं रूपं भगवतः तद् गुणातीतं, त्रिगुणरहित एव हृदये कथञ्चिद् ध्यातुं शक्यते। अथ प्राह अतः पञ्चभूतपरिध्यवच्छेदान्तरं नेति नेति इति श्रुतेरादेशः न इनत निपाद्वयम्, तदेव विवृणोति— अस्मात् सगुणनिर्गुणस्वरूपात् न किमपि श्रेष्ठमुपास्यं वा नास्ति। नेति नेति इति वीप्सायां द्वित्वम्। यथा काचित् कुलाङ्गना बहुषु पुरुषेषु सत्सु तत्पतिपरिचयजिज्ञासुभिः प्रतिपुरुषं प्रतिपृष्टा नेत्यङ्गुल्या सर्वत्र स्वपत्तित्वंनिरावरोति—चैत्रो न, मैत्रोन, यज्ञदत्तो न, इति सम्पूर्णान्निराकृत्य स्वपतिमुपतिष्ठमाना मौनं कलयति, इयमेपव परिस्थितिः सीमन्तिनीकुलशिरोमणेः श्रुतेः। इन्द्रादारभ्य हिरण्यगर्भर्यन्तं **नेति नेति** इति निषिद्ध्य तुरीयं परमेश्वरं प्राप्य मौनमाकलय्य तत्रैव निखिलतात्पर्यं समर्पयति। एवं सत्यस्य सत्यमिति—तस्य परमात्मनः नामधेयं यत् कृते **नेति नेति** वादिनी श्रुतिः एतस्मात् ब्रह्मणः परं अन्यत् न इत्यवध्यस्यन्ति, तर्हि किं सत्यम्? प्राणः सत्याः तेषामपि सत्यं इदं ब्रह्म मूर्तामूर्तत्वविशिष्टं ब्रह्मैव सत्यम्॥श्रीः॥

**इति बृहदारण्यकोपनिषदि द्वितीयाध्याये श्रीरांघवकृपाभाष्ये तृतीयब्राह्मणम् सम्पूणम्।**

**॥ श्रीराघवः शन्तनोतु ॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अथ चतुर्थब्राह्मणम् ।।

### मङ्गलाचरणम्

**रजो मुषाणो विरजो जुषाणो लोलोप्य लोलालिकुलंदधानः ।**
**रामः शिशुः सर्व विपद्विरामः समे चतुर्थे रचिताच्चतुर्थः ।।**

सत्यस्य सत्यमिति प्राणोपनिषदुक्ता, तत्र मूर्तस्य पृथिवीजलतेजोवच्छिन्नस्य अमूर्तस्य वाय्वन्तरिक्षात्मकस्य त्यस्य च रसत्वेन प्राण उक्तः । तस्यापि सत्यत्वेन सङ्कीर्त्यमानस्य **नेति नेतीति** परशतशतश्रुतिततिसङ्गीतमाहात्म्यपरमात्मनो नित्यमुक्तबुद्धस्वभावस्य त्रिकालाव्याहताखण्डनिरतिशयज्ञानप्रभावस्य निरतिशयगुणगणवारान्निधेः सततमतिमानुष जन्मकर्मणो ब्रह्मणः **आत्मेत्योवोपासीत आत्मेवेदमग्र आसीत्** इत्यादिश्रुति-गणसमारम्भानुरोधेन च मैत्रेयीयाज्ञवल्क्य सम्वादमुखेन च सुखेन समवगमयितुं दुर्बोधविक्लवमानसनां दुरवबोधामनिद्यां ब्रह्मविद्यां चतुर्दशमन्त्रात्मकमात्ममीमांसारूपमेतत् ब्राह्मणं प्रारभ्यते । तत्रायं प्रथमो मन्त्रः उपोद्घातरूपः ।

**मैत्रेयीति होवाच याज्ञवल्क्य उद्यास्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्याऽन्त करवाणीति ।।१।।**

ह इतिहासप्रसिद्धमेतत् याज्ञवल्क्यनामको मिथिलाधिपतेः योगीराजजनकस्य राजगुरुः याज्ञवल्क्य स्मृतिरचयिता परमविवेकी महर्षिरासीत् । स च मैत्रेयीकात्यायनीनामिकाभ्याम् पत्नीभ्यां सङ्गतः । यथाशास्त्रं भुञ्जानश्च धर्मार्थकामान् तेभ्यो व्यरज्जत । विभाविता च संसारस्यासारता गार्हस्थस्य क्रूरधर्मता भोगेषु लोलुपता च तस्य मैत्रेयी कात्यायनी च ये द्वे जाये, तयोः कात्यायनी कात्यायन गोत्रजा ब्राह्मणसुता गृहासक्ता अर्थैकचक्षुरासीत्, परन्तु मैत्रेयी मित्रायाः मितात् सीमातः सावच्छेदकपदार्थात् त्रायते या तथाभूता । सीमितात् संसारात् त्रात्वा परमात्माभिमुखीं सन्ततिं कर्तुं कृताद्यमा । मित्रा नाम्नी काचिद् ब्राह्मणवधूः ऋषिपत्नी, एतस्या एव पुत्रो भगवान् कौषारविः, श्रीकृष्णद्वैपायनसखः परमभागवतशिखामणिः, येन सह भगवताप्रेरितेनोद्धवेन सम्प्रेरितस्य महात्मनो विदुरस्य स्कन्धद्वयपर्यवसायी विच्छिन्नसकलसंशयविवादविषादः सुखदसंवादः श्रीभागवते प्रसिद्धः । तस्या एव प्रकृतिपवित्राया मित्रायाः पुत्रीयं मैत्रेयी ब्रह्मवादिनी परमविदुषी याज्ञवल्क्यस्य महर्षेरन्तरङ्गा धर्मपत्नी । चतुर्थाश्रमं प्रविविक्षुर्जातनिर्वेदो भगवान् याज्ञवल्क्य मैत्रेयीति नाम्ना सम्बोधयति मैत्रेयि इति । ननु सम्बोधने **दूराद्धूते च** (पा० अ० ८/२/८४) इति सूत्रेण प्लुते **प्लुतप्रगृह्याअचिनित्यम्** (पा० अ० ६/१/१२५) इत्यनेन प्रकृतिभावे

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मैत्रेयीति कथं दीर्घः ? इति चेत् समयकृपृष्टं **दूराद्धूते च** इति सूत्रेण सुदूरवर्तिनः सम्बोधने प्रयुक्तवाक्यस्य टेः प्लुतो विधीयते । मैत्रेयी तु मनसा वचसा कर्मणा याज्ञवल्क्यस्य निकटतमा प्रियतमा ततो न दूरवर्तिनी तस्मादुक्तसूत्रप्रवृत्यमावे मैत्रेयीशब्दघटकेकारस्य इति घटकेकारेण दीर्घः सुसङ्गत एव । अथ "आत्मनाम गुरोर्नाम नामातिकृपणस्य च, श्रेयष्कामो न गृह्णीयात् ज्येष्ठापत्यकलत्रयोः" इति स्वस्यैव स्मृतेः पत्नीनामोच्चारणनिषेधरूपानुशाशनं मैत्रेयि इति सम्बोध्य स्वयमेव कथमतिचक्राम याज्ञवल्क्यः श्रेयष्कामोऽपि ? इति चेदुच्यते नातिचरणमनुशाशनस्य, यतो हि याज्ञवल्क्यस्तुरीयाश्रमं प्रविविक्षुः स्वीचिकीर्षुश्च भिक्षुधर्मम् शितधारेण वैराग्यकुठांरेण संञ्छिन्नसंसारसम्बन्धपादपमूलो विगतशूलः समधिजिगमिषितः भगवतपादमूलोऽनुकूला मिदानीं मनसा विच्छिन्नपत्नीभावनां विभावितब्रह्मज्ञानसम्भावनां मित्रभावेन मेत्रेयि इति सम्बोधयति । मित्रायाः दुहिता सती त्वमपि मम कार्ये परिव्रज्यारूपे मित्रमिव सह योक्ष्यसे इति कृत्वा मेत्रेयीनाम्ना सम्बोधयति । अथवा मातृसम्बन्धसूचकतया मेत्रेयीति गौडं नाम, मुख्यं तस्याः किञ्चिदपरं भवेत् जानक्याः सीता इव कुन्त्याः पृथा इव च । श्रेयष्कामो न गृह्णीयादित्यनुशाशनं तु मुख्ये नाम्नि प्रवर्त्तते न गौडे इति सर्वमनवद्यम् । ह चतुर्थाश्रमस्वीकरणं निश्चित्य याज्ञवल्क्यः मैत्रेयि इति आकारयति । विवक्षितमाह- अरे सम्बोधननिपातोऽयं हे ए इत्यादिवत अथ **एक क्रिया ह्यर्थकरी प्रसिद्धा** इति न्यायेन अरे इत्येव सम्बोधनमभिमतम् याज्ञवल्क्यस्य । एकं तु अरे इति सम्बोधनमापरं भगवतस्मरणसूचकम् । तथा हि अम् वासुदेवम् राति ददाति इत्यरा तत् सम्बुद्धौ हे अरे । अहमेतावत् कालं युवाभ्यां समं निषेव्य गृहस्थाश्रमम् विगतसम्भ्रमः अस्मात् स्थानात् गृहात् युवाभ्यामध्युषितात् वा निश्चयेन उद्‌यास्यन् अस्मि निष्क्रम्य उपरि गमिष्यन् अस्मि । हन्त इति हर्षे आपृच्छे त्वाम्, एवं ते कात्यायिन्या सह यः सपत्नीसम्बन्धः यश्च युवाभ्यां सह मम दाम्पत्यभावः तस्य अन्तं करणाणि । युवयोर्निजार्जितधनं विभज्य इति गन्तुमनुमतिं स्वपतिमापृच्छमानं निरभिमानं स्वपति वीच्य पत्नी प्राह—

**साहोवाच मैत्रेयी । यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात्कथं तेनामृता स्यामिति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितँ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ।। २ ।।**

पत्या दित्स्यमानाल्लौकिकधनान्निर्विद्यमाना जिघृक्षमांणा च ततोऽलौकिकं ज्ञानधनं सा मेत्रेयी उवाच, प्रत्युदति इतरत् भगो हे भगवन् ! नु वितर्के, यत् किञ्चित्वेन परिचीयमाना मे मम कृते सुलभा सर्वा समुद्रमेखला पृथ्वी, वित्तेन पूर्णा, यत् इति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चेत् मे मह्यं मत् सम्बधिनी वा स्यात्, किं तेन धनधान्यपूर्णपृथिवी लाभेन, अहं कथममृता स्याम् केन प्रकारेण मरणधर्मराहित्यं समधिगच्छेयम् इति पत्न्या पृष्टः याज्ञवल्कय उवाच—न एतावद् धनेन कोऽपि नामृतो भवति। उपकरणं सौविध्यसाधनं तद्वतां समस्तभोग्यसामग्रीवतां भौतिकवादिनां जीवितं चाकचिक्यमयं, तथा ते तवाऽपि जीवितं जीवनसञ्चालनमिति भावः वित्तेन लौकिकधनेन तु अमृतत्वस्य मरणधर्मभिन्नत्वस्य आशैव नास्ति। अतः केनचित् भूतार्थमुक्तम्—

**दुरीश्वरद्वारि बहिर्वितर्दिका**
**दुराशिकार्ये विहितोऽयमञ्जलिः ।**
**यदब्जनाभं निरपायमस्ति मे**
**घनञ्जयस्यन्दनभूषणं धनम् ।।**

मैत्रेयी याज्ञवल्केन दित्स्यस्मानं धनं प्रत्याख्याय अमृतत्वप्राप्तिसाधनं पृच्छति सेत्यादिना—

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान् वेद तदेव मे ब्रूहीति ।।।३।।**

निश्चित्य सा मैत्रेयी पतिं प्रत्युवाच—येन भवंता दित्स्यमानेन धनेन अहं आमृता मरणधर्मवर्जिता न स्यां, तेन क्षणभङ्गुरेण धनेन अहं किं कुर्यां किं विदध्याम् ? हे भगवन् ! मह्यं धनं न देहि, ममेप्सितस्यामृतत्वस्य प्राप्तये यदेव किमपि विलक्षणं साधनं भवान् वेद मे मह्यं श्रद्धालवे पृच्छन्त्यै ब्रूहि समुपदिश ।।श्रीः।।

पत्न्याः ब्रह्मजिज्ञासां निरीक्ष्य परम प्रसन्न हृदयः याज्ञवल्कयः तां सावधानां करोति—

**सहोवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषस एह्यास्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ।।४।।**

बत प्रसन्नतायाम् अरे ! त्वं पूर्वमपि नः अस्माकं गृहस्थाश्रमे कात्यायिन्यपेक्षया समधिकं प्रिया आसीः। साम्प्रतमपि तुरीयाश्रमं प्रविविक्षवे मित्रीकरिष्यमाणे भिक्षवे प्रियं भाषसे, अत्यन्तमनुरूपं भाषासे, एहि मम समीपमागच्छ, आस्व उपविश, आसने ते तुभ्यं शिष्यायै अमृतत्वप्राप्तिसाधनं व्याख्यास्यामि, किन्तु व्याख्यानं मा विस्मार्षीः व्याचक्षाणस्य अमृतत्वप्राप्तिसाधनं व्याख्यानविषयीकुर्वतो मे याज्ञवल्क्यस्य ब्रह्मोपदेशं निदिध्यासस्व इति इत्थं समाश्वासयति ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ याज्ञवल्क्यः सर्वेषां प्रियत्वमात्मप्रियत्वमूलमिति पतिजायापुत्रवित्तब्रह्मक्षत्रलोकदेवभूतसर्वे तेषां दशानां प्रियत्वं दशमुखनिकन्दने दशरथनन्दने श्रीरामब्रह्मणि पर्यवसतिइमाः दशैव ममताः जीवं बध्नन्त्यः दशमस्यास्य दशरथनन्दनस्य ब्रह्मणः भजने प्रत्यवायं समुत्पादयन्ति । यथोक्तं श्रीविभीषणेन श्रीरघुकुलभूषणं प्रति —

**जननी जनक बन्धुसुत दारा । तन धन भवन सुहृद परिवारा ।**
**सबकै ममता ताग बटोरी । मम पद मनहिं बाँधि बर छोरी ।।**

(मा. ५/४८/४-५ )

रूपान्तरम् -

**मातापित्रोर्बन्धुसुताङ्गनानां देहस्वगेहात्मसुहृत्स्वकानाम् ।**
**ममत्वसूत्रोद्धादिव्यरज्वा बधान पादे मम मानसत्वम् ।।**

तथाहि प्रकृतम् —

**स हो वाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवन्ति । न्न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं भवति । न वा अरे लोकानां कामाय लोकाः प्रियाः भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भवन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद सर्वं विदितम् ।।५।।**

याज्ञवल्क्यः प्राहः — अरे मैत्रेयि ! वा निश्चयेन पत्युः भुर्तः कामाय स नः प्रियो भवति एवमेव निजकामाय सः प्रियो न भवति । आत्मनः पत्न्याः हृदये वर्तमानस्य आत्मनः जीवात्मनः कामायैव पतिः प्रियो भवति । आत्मनि गते ए स एव पतिः क्षणमपि प्रियतमया स्थापयितुं न शक्यते गृहे । एवमेव जाया पत्नी, जायायै अत्र षष्ठयर्थे चतुर्थी जाया न प्रिया भवति, आत्मनः कामाय सा प्रिया भवति, अर्थात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जनाः यैः सह प्रेम कुर्वन्ति तैः सह कमपि स्वार्थं साधयति, अत एव पुत्रादिकमित्थमूह्यम्। इत्थम् आत्मनः कामाय परितोषाय सर्वं जडचेतनात्मकं प्रियं भवति, सर्वं खलु आत्मनः कामाय, अर्थात् आत्मनि सति सर्वेषाम् प्रियता आत्ममूला। हे मैत्रेयि। एवं निरतिशयप्रीतिभाजनम् आत्मा स एव आत्मा परमप्रीतिभाजनतया निर्दिष्टः। आत्मा वा अरे दृष्टव्यः, अरे मैत्रेयि ! वै निश्चयेन आत्मा परमात्मा द्रष्टव्यः साक्षात् करणीयः अत्र विध्यर्थे दृशेः कर्मणि तव्यत्, केनाप्युपायेन आत्मा द्रष्टव्यः निजसेव्यत्वेन साक्षात् करणीयः। पूर्वं विधेयं द्रष्टव्यत्वमुक्त्वा पुनस्तद्दर्शनोपायानाह त्रीन्—स आत्मा श्रोतव्यः श्रुति वाक्यैः, **प्रज्ञानं ब्रह्म, अयमात्मा ब्रह्म, तत्वमसि श्वेतकेतो ! अहं ब्रह्मास्मि, सर्वं खल्विदं ब्रह्म, तज्जलानीति शान्त उपासीत, आत्मेत्येव उपासीत, आत्मैव वा दइमग्र आसीत्** इत्यादि श्रुति वाक्यैः परमात्मजीवात्मनोः सम्बन्धनिबन्धनैक्य-निश्चयपुरःसरं श्रोतव्यः। नन्वात्मतत्वमतिदुरूहत्वात् कथं श्रवणविषयतां गच्छेत् तथा च कठोननिषदि यमः प्राह न चिकेतसम् —

**श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो य न विद्युः।**
**आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः।।**
(क० उ० १.२.७)

एवं भगवान्छ्रीकृष्णोऽपि श्रीगीताषु गहनविषयतामात्मनः निरूपयति। यथा—

**आश्चर्यवत्पश्यतिकश्चिदेवमाश्चर्यवद्वदति तथैव चान्यः।**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्।।**
(गी० २.२९)

अत आह मन्तव्यः वारं वारं मननविषयः करणीयः, अनन्तरं निदिध्यासितव्यः नितरां ध्यायति निध्यायति निध्यातुमिच्छति इति निदिध्यासति निदिध्यासेत् इति निदिध्यासितव्यः सन्नन्तात् ध्यैधातोः विध्यर्थे कर्मणि तव्यत् प्रत्ययः। एवं श्रोतव्यो मन्तव्यो निदिध्यासितव्यः निरन्तरध्यानेच्छाविषयः करणीयः, तदनु द्रष्टव्यः श्रवणमनननिदिध्यासनैः आत्मतत्वसाक्षात्कारः करणीय इति श्रौतार्थः। हे मैत्रेयि। आत्मनः दर्शनेन परमात्मसाक्षात्कारेण, श्रवणेन वेदान्तानां सादरमाकर्णनेन, मत्या मननेन विज्ञानेन, वस्तुतः निदिध्यासितव्यः इत्यंत्र सनर्धो न विवक्षितः इतः पूर्वयोः श्रोतव्यमन्तव्य शब्दयोः शुद्धधातुत्वश्रवणत् ध्यान विषमतायामेव करणीयताविधानेनालम्। तल् किमुतेक्षापर्यन्तं परिधाव्य एवात्मनः श्रवणमनननिदिध्यासनैः सर्वतमेतत् विदितम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ ब्रह्मतो व्यतिरिक्तवेदिनः सर्वं जगच्छत्रुवत् व्यवहरतीति निर्दिशति —

**ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं पराढाद्योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद भूतानि तं परादुर्योऽन्त्राम्तनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदँ सर्वं यदयमात्मा ।।६।।**

अत्र परादात् इत्यस्य परादद्यात् इतिमूलरूपं पराभवेत् इत्यर्थः । परादुः इत्यस्य परादद्युः परभवेयुरितिभावः । तं ब्रह्म ब्राह्मणः परादात् पराभवेदेव । यः परमात्मनः अन्यत्र अन्यस्मिन्नधिकरणे ब्रह्मवेद, यत्तु गोविन्दपादशिष्यः अन्यत्र इत्यस्य ब्रह्मान्यत्वेन ततः इतरत् इति व्यावचष्टे तत् पूर्णनर्गलं, सप्तम्यास्त्रल् इत्यनेन अधिकरण एव त्रलोविधानात्। एवं यदि कोऽपि ब्रह्मक्षत्रोपलक्षितान् चतुर्वर्णान्, लोकान् देवान् सर्वाणि भूतानि अनात्मधिकरणकानि वेद तमिमानि पराभवन्ति यतो हि सर्वेषामेषाम् अयमात्मैव अधिकरणम् । ननु इमानि इमे इदं सर्वम् इति सर्वत्र प्रथमा सा च आत्मा इति समानाधिकरणविभक्तिः ? इति चेत् तात्स्थ्यात् प्रथमा, यद्वा शरीरशरीरिभावेन सामानधिरणण्यात् प्रथमा मञ्चाः क्रोशन्ति इति वत्, यद्वा अयमात्मा इत्यत्र सप्तम्यर्थे व्यत्ययात् प्रथमा । सर्वाणि परादुरित्यस्यायमायशयः यत् प्राणिनामात्मनोधिकरणकत्व विस्मृतौ भगवत्स्मृतिव्याधातः तस्मिन् सति भगवदीयापत्तिः तथासति समस्तजगतः प्रतिकूलता । यथा जयन्तस्य श्रीरामविमुखस्य तथा च मानसकाराः आमनन्ति—

**मातुमृत्युपितुसमनसमाना, सुधा होइ विष सुनु हरिजाना ।**
**मित्र करइ सतरिपु कैकरनी, ताकहं बिबुधनदी वैतरणी ।।**
**सब अगता हि अनलहुं ते ताता, जोरघुबीर विमुख सुनु भ्राता ।**

(मा० ३.२.६.७.८.)

एतद्रूपान्तरम् —

**मृतिर्माता तातो भवति शमनस्तस्य गरलं ।**
**सुधा स्यात् पक्षीशः स्वजनसुहृदो दुर्हृद इव ।।**
**तिरस्कुर्वाणा तं विबुधतटिनीवैतरणिका ।**
**जगद्वह्नि क्लेशो रघुपतिपदम्भोजविमुखे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ शङ्खदन्दुभि वीणानिनाददृष्टान्तेन ब्रह्मणि गृहीते सर्वग्रहणं समुपपादयति —

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ।।७।।**

**स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ।।८।।**

**स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ।।९।।**

ताड्यमानस्य दुन्दुभेः तद्ग्रहणेनैव तदाघातो गृह्यते बाह्याशब्दग्रहणनिरपेक्षः एवं शङ्खवीणयोरपिदृष्टान्ते शंखध्मस्य तद्ध्वानेः शेषं सुगमम् ।।श्रीः।।

अथ आर्द्रेन्धनाग्निवह्निस्फुलिङ्गोदाहरणेन ऋग्वेदादीनामपि परमात्मन एव समुद्भवं निर्णयति —

**स यथाऽऽर्द्रैन्धाग्नेरभ्याहि तात्पृथ धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निश्वसितानि ।।१०।।**

अरे मैत्रेयि ! यथा आर्द्रेन्धनेन सुंयतादग्नेः धूमाः स्फुलिङ्गाश्चरन्ति । तथैवैतस्य महतः अभूतस्य भूतातीतस्य निःश्वसतिमिव चत्वारोवेदाः, इतिहासपुराणं पंचमो वेदः विद्याः चतुर्दश, उपनिषदः वेदान्तदर्शनं सूत्राणि सांख्यादि पाणिनीयाष्टाध्यायी विश्रामाणि अनुव्याख्यानानि पातन्जलमहाभाष्यादि श्रीराघवकृपाभाष्यपर्यन्तानि । इदं सर्वं वाङ्मयं अस्य महतः भूतातीतस्य प्रभोः श्रीरामस्य निःश्वसितभूतम् । यथोक्तं श्रीमानसे—

**जाकी सहज श्वाँस श्रुति चारी, सो हरि ढयह कौतुक भारी ।**

(मा. १.२०४.५)

रुपान्तरम् —

**चतस्त्रः श्रुतयो यस्य निःश्वासाः सहजाः प्रभोः ।**
**स एव गुरुगेहेषु पठत्येतद्धिकौतुकम् ।।**

भूयः समस्तानामिइन्द्रियविषयशाणां ततदिन्द्रियेषु एकायनत्वं निरूप्य तेषां भगवति समाहारं निर्दिशति—

**स या सर्वासामपाँ् समुद्र एकायनमेवँ् सर्वेषाँ् स्पर्शानां त्वगे कायनमेवँ् सर्वेषां गन्धानां नासिके एकायनमेवँ् सर्वेषां गन्धानां नासिके एकायनमेव**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ँ सर्वेषां ँ रसानां जिह्वैकायनमेव ँ सर्वेषां ँ रूपाणां चक्षुरेकायनमेव ँ सर्वेषां ँ शब्दाना ँ श्रोत्रमेकायनमेव ँ सर्वेषा ँ संकल्पानां मन एकायनमेव ँ सर्वासां विद्याना ँ हृदयमेकायन्मेव ँ सर्वेषां कर्मणा ँ हस्तावेकायमेव ँ सर्वेषामानन्दानामुपस्थ एकायनमेव ँ सर्वेषां विसर्गाणां पाथुरेकायनमेव ँ सर्वेषामध्वानां पादावेकायनमेव ँ सर्वेषां वेदानां वागेकायतम् ।।११।।**

अपां जलानां एकायनम् एकमात्रमाधारः, यथा शब्दस्पर्शरूपरसगन्धादानसम्प्रदान विसर्गानन्दवाचां चक्षुरादीनि एकायनानि सर्वं परमात्मनि एकायनं भवति। प्रकरणमुपसंहरन् जलबुद्बुदोदाहरणेन सर्वेषां जीवजगतां ब्रह्मण एव अभिन्नोपादाननिमित्तकारणतां निर्वक्ति —

**स यथा सैध्यवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्योद्ग्रहणायेव स्याद्यतो यतस्त्वाददीतलवणमेवैवं वा अर इदं महद्भूतमनन्तपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवाऽनुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ।।१२।।**

अरे स्यन्दन्त इति सिन्धवः जलानि, तेषां विकारः सैन्धवः, खिलः खण्डः स एव खिल्यः स्वार्थे यत् सैन्धवश्चासौ खिल्य इति सैन्धवखिल्यः, उदके जले, प्रास्तः उदकं जलमेव विलीयते तद्ग्रहणाय किमपि नावशिष्यते। उदाहरणमेतत् जीवात्मनो ब्रह्मणि विलयस्य। अथ लवणजलनिक्षेपोदाहरणं ब्रह्ममयत्वस्य यथा जलेनिक्षिप्तं लवणं यतो यतो गृह्णीयात् सर्वं लवणमेव एवमनन्तं नाशरहितमपारं परिच्छेदरहितं महद्भूतं महतोऽव्याकृतप्रकृतेः योगमायायाः भूतमाधररुपं सीताभिधानं किमपि यस्मिस्तथा भूतं सर्वं विज्ञानधन एव विज्ञानस्य घनः घनीभूतरसविशेषः। अथवा विज्ञानमपि हन्यते यस्मिन् स विज्ञानघनः। कोऽपि निरतिशयरसरूपः रसो वै सः इतिश्रुतेः। स एव परमात्मा अन्तर्यामी एतेभ्यः भूतेभ्यः समुत्थाय तानि अनु अत्र अनुर्लक्षणे इति द्वितीया, तेषु स्वस्मिन् विलीनेषु स्वयमेव परमे व्योमनि साकेतविहारिणि श्रीरामएवांशिनि विनश्यति विलीयते। अरे तस्य प्रेत्यसंज्ञा न भवति, तस्य संसारसत्वे संसाराभावेऽपि च समानरूपेणसत्वात् इति ब्रवीमि सिद्धान्तयामि। न तस्य प्रेत्यसंज्ञास्ति इति वचनेन श्रीरामाख्यस्य ब्रह्मणः स्वर्गारोहणविडम्बनाकल्पनं परास्तम्।

इति इत्थं निश्चित्य याज्ञवल्क्यः उवाच मैत्रेयीं प्रतिसिद्धान्तयांबभूव। यथा सैन्धवखण्डः जले निक्षिप्तः जलमयो भवति यथा च जले निक्षिप्तं लवणं लवणमेव तथैव चिदचिन्मयं जगदिदं परमात्मविलीनं व्यक्तनामरूपकं केवलः विज्ञानघनः परमात्मैव संज्ञायते, परमात्मानं प्रेम्य प्राकर्षेण प्राप्य जीवात्मनः कापि संसारसम्बन्धिनी संज्ञा न भवति स तु भवगत् किंकरमात्रमवशिष्यते।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न प्रेत्यसंज्ञास्ति इतिवाक्यं श्रुत्वा संदिहाना मैत्रेयी पप्रच्छ —

**सा होवाच मैत्रेय्यत्रैव मा भगवनामूमुहन्न प्रेत्यसंज्ञाऽस्तीति स होवा च याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीम्यलं वा अरं इदं विज्ञानाय ।।१३।।**

सा मैत्रेयी ह इति आश्चर्यार्थो निपातः, न प्रेत्य

संज्ञास्ति, मरणादनन्तरं काऽपि संज्ञा न भवति इति वाक्येन तु भगवान् परमपूज्यप्राणपतिः मा अमूमुहत् मोहितवानस्ति, किं जीवस्य पुनर्जन्म न भवति ? उत्तरयति याज्ञवल्क्यः—अरे मैत्रेयि अहं मोहं न ब्रवीमि त्वं प्रकरणमेव न ज्ञातवती । **न प्रेत्य संज्ञास्ति** एतस्य इदं तात्पर्यं यत् शरीरावच्छिन्नः सन् परमात्मा अन्तर्यामी अधियज्ञः हिरण्यगर्भः सर्वज्ञः इत्यादिं संज्ञां लभते, किन्तु प्रलये शरीरेषु लयं गतेषु अंशिनं प्रेत्य, साकेताधीशं ब्रह्म तस्य कार्यब्रह्मणः अन्तर्याम्यादिसंज्ञा नास्ति । अतः इदं विज्ञानाय अलं पर्याप्तं, सशरीरस्य जीवात्मनः चैत्र मैत्रादि संज्ञा तत्तच्छरीरानुरोधिनी, परमात्मानं प्राप्य निरस्तनामरूपस्य तस्य काऽपि जीवात्मातिरिक्ता संज्ञा न भवति इत्येव हार्दम् । अथवा अत्र **नमःस्वस्तिस्वाहास्वधाअलं वषड्योगाच्च** इत्येन चतुर्थी ।।श्रीः।।

अथ प्रकरणमुपसंहरति जीवात्मब्रह्मणोःसंबन्धनिबन्धनाया एकतायाः—

**यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितरं इतरं पश्यति तदितर इतरँ् श्रृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत्तत्केन कंजिघ्रेत्तत्केन कं पश्येत्तत्केन कँ् श्रृणुयात्तत्केन कमभिवदेत्तत् केन कं मन्वीत तत् केन कं विजानीयाद्येनेदँ् सर्वं विजानाति तं केन विजानीऽयाद्विज्ञातारमरे केन विजानीयादिति ।।१४।।**

यत्र यस्मिन् काले द्वैतमिव, मोहवशात् जीवात्मनः परमेश्वरात् पृथक्त्वं स्वतन्त्र सत्ता भाष्यते, तत्र भोक्तृभोग्यभावस्य पार्थक्यं प्रतिभाति, तदा इतरः इतरं जिघ्रति पश्यति श्रुणोति इत्यादि किन्तु यत्र सायुज्यदृष्ट्या सर्वमात्मैव अभूत्, गताःविषयाः गतानीन्द्रियाणि, अविनाशित्वात् अवशिष्टं जीवात्मतत्वं सर्वविषयातीतं बुभुक्षामुमुक्षाभ्यां मुक्तं तत्र केन कं विजिघ्रे विषययीभावस्य समाप्तत्वात् । अरे विज्ञातारं विज्ञातभगवत् स्वरुपं विज्ञातार्थपंचकमहात्म्यञ्च केनोपकरणेन विजानीयात् । ।।श्रीः।।

**इति वृहदारण्यकोपनिषदि द्वितीयाध्याये श्रीराघव कृपाभाष्ये चतुर्थं ब्राह्मणं संपूर्णम् ।**

**।। राघवः शन्तनोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। पंचमब्राह्मणम् ।।

**मैथिलीपंचमं पञ्चबाणकोटिसमप्रभम् ।**
**पञ्चमे ब्राह्मणे नौमि रामं ब्रह्मसपंचमम् ।।**

अथ सत्यस्य सत्यमिति या प्रोक्तोपनिषत् तस्या एव विवरणभूतं सकलकार्यकारण-भावजातं मधुत्वेन निरूपितं, तदेव मधुसूदने भगवति समजिहीर्षुः प्रस्तौति मधुविद्याब्राह्मणम्। अत्रमधुशब्दस्य त्रेधा तात्पर्यमवगन्तुं शक्यते मधुसंजीवनं माधुर्यसेवधि द्वितीयं मधुसारः तृतीयं मधु मिश्रितं सूक्ष्मरूपं विभक्तुमशक्यम् —

**इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो मश्चायमध्यात्मँ्शरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेवस योऽममात्मेदममृतमिदं ब्रह्मेदँ्सर्वम् ।।१।।**

इयं पृथिवी सर्वेषां भूतानां मधु कारणत्वात् सारत्वात् रसत्वात् हर्षावहत्वात्, अस्यै पृथिव्यै अत्र षष्ठयर्थे चतुर्थी, एतस्या सम्पूर्णानि भूतानि मधुकार्यभूतानि मिश्रितरूपाणि। अस्यां यः तेजोमयः अमृतमयः अत्र. स्वरूपे मयट्, यश्च आध्ययात्मिकः शरीरे विराजमानः तेजोरूपः रसरूपश्च अमृतमयः स एव आत्मा स एव अमृतं रसरूपं परमानन्दमयं तदेव ब्रह्म बिभर्तीति ब्रह्म। इदं ज्ञात्वा त्वममृता भविष्यसि इति याज्ञवल्क्यस्य तात्पर्यं मैत्रेयीं प्रति एवमेव चतुर्दश विषयेषु मधु भावना।

**भूमिर्मधु हि भूतानां भूतानि च भुवो मधुम् ।**
**तन्नातेजोऽमृतश्चात्मा शारीरो ब्रह्मचामृतम् ।।श्रीः।।**

अथ जले मधुभावनाम् —

**इमा आपः सर्वेषां भूतानां मध्वासामपाँ्सर्वाणि भूतानि मधु यश्चायमस्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ्रेतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ्सर्वम् ।।२।।**

एवमापः जलानि प्राणिनां मधुः, रेतसः अयम् रैतसः शुक्र सम्बधीति भावः।

**जलं मधु हि भूतानां भूतानि पयसो मधु ।**
**तत्स्थो नरः स एवात्मा अमृतं ब्रह्म वै द्विधा ।।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथाग्नौ मधुभावनम् —

**अयमग्निः सर्वेषां भूतानां मध्वस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ।।३।।**

अग्नौ पुरुषः वैश्वानरः, शरीरे वाङ्मयः वाचि वर्तमानत्वात् ।

**अग्निर्मधुर्हि भूतानां भूतनि तस्य वै मधु ।**
**तत्स्थो वैश्वानरो देवो वाङ्मयात्मामृतं बृहत् ।।श्रीः।।**

अथ वायोः मधुभावनम्—

**अयं वायुः सर्वेषां भूतानां मध्वस्यवायोः सर्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ।।४।।**

अस्मिन् पुरूषः मरूत् देवतारूपः शरीरे प्राणरूपः ।

**वायोर्मधु हि भूतानां भूतानि रच भुवो मधुः ।**
**तच्छरीरे च पवनः असुरात्माऽमृतं बृहत् ।।श्री।।**

अथादित्यस्य मधुभावनाम्—

**अयमादित्यः सर्वेषां भूतानां मध्वस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरूषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरूषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मदँ् सर्वम् ।।५।।**

चक्षुषोऽयं चाक्षुषः, न दियते खण्ड्यते इति अदितिर्ब्रह्म तस्याऽपत्यं पुमान् आदित्यः ।

**आदित्यो मधु भूतानां भूतानि तस्य वै मधुः ।**
**तत्स्थो चाक्षुष एवात्मा अमृतं ब्रह्म सोऽप्यथ ।।**

अथ दिक्षु मधुभावनम् —

**इमा दिशः सर्वेषां भूतानां मध्वासां दिशाँ् सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चामध्यात्मँ् श्रोत्रः प्रातिश्रुत्कस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ् सर्वम् ।। ६।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रतिश्रुत्यां भवः प्रातिश्रुतिकः श्रोत्रः तदवच्छिन्नदेवता—

दिशो मधु हि भूतानां भूतानि च दिशां मधु ।
तासु कर्णे नरश्चात्मा अमृतं ब्रह्म विश्रुतम् ।।

अथ चद्रे मधुभावनम् —

**अयं चन्द्रः सर्वेषां भूतानां मध्वस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मि ँ् श्चन्द्रे तेजोमयोऽमृतमयः पुरूषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरूषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद ँ् सर्वम् ।।७।।**

मानसः मनोमयः ।

चन्द्रो मधु हि भूतानां भूतानीन्दोरथो मधु ।
तन्नरो तैजसो ह्यात्मा मानसो ब्रह्मचामृतम् ।।

अथ विद्युति मधुभावनम् —

**इयं विद्युत्सर्वेषां भूतानां मध्वस्यै विद्युतः सर्वाणि भूतानि मधु यश्चायमस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तेजसस्तेजोमयोऽमृतमयः पुरुषोऽमेव स योऽयमात्मेदममृतामिदं ब्रह्मेद ँ् सर्वम् ।।८।।**

तेजसोऽयं तैजसः ।

विद्युन् मधु हि भूतानां भूतानि विद्युतो मधु ।
तस्यां नरः स एवात्मा तैजसो ब्रह्मचामृतम् ।।

अथ मेघगर्जने मधुभावनम् —

**अय ँ् स्तनयित्नुः सर्वेषां भूतानां मध्वस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन्स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्म ँ् शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद ँ् सर्वम् ।।९।।**

स्तनयित्नु मेघगर्जनम् मेघो वा स्तनयित्नुर्बलाहक इत्यमरः । शब्दे भवः शाब्दः स्वरे भवः सौवरः ।

मेघो मधु हि भूतानां भूतानि वार्मुचो मधुः ।
तन्नाशाब्दः स एवात्मा सौवरो ब्रह्मचामृतम् ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथाकाशे मधुभावनम् —

**अयमावकाशः सर्वेषां भूतानां मध्वास्याकायशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।१०।।**

हृद्याकाशः, आसमन्तात् काशते प्रकाशते इत्याकाशः—

**आकाशं मधु भूतानां भूतानि नभसो मधु ।**
**तन्ना हृदि च सैवात्मा विशुद्धं ब्रह्म चामृतम् ।।**

अथ धर्मे मधुभावनम् —

**अयं धर्मः सर्वेषां भूतानां मध्वस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।११।।**

धर्मः श्रुतिविहितकर्मानुष्ठानजनितादृष्टविशेषरूपः, परोक्ष प्रायोऽपि श्रुत्या प्रत्यक्षीकृतः तत्स्थो पुरुषः धर्मराजः धार्मः धर्म सम्बन्धी ।

**धर्मो मधु हि भूतानां भूतानि तस्य वै मधु ।**
**तत्स्थो ना यम एवात्मा धार्मो वै ब्रह्म चामृतम् ।।**

अथ सत्ये मधुभावनम् —

**इदँ सत्यँ सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु यश्चाऽयमस्मिन्सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मँ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयतमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदँ सर्वम् ।।१२।।**

सत्यस्यायं सात्यः सत्यनियन्ता देवविशेषः ।

**सत्यं मधु हि भूतानां भूतानि तस्य वै मधु ।**
**तत्स्थो तैजस एवात्मा सात्यो ब्रह्म तथाऽमृतम् ।।**

अथ मानुषे मधुभावनम् —

**इदं मानुषँ सर्वेषां भूतानां मध्वस्य मानुषस्य सर्वाणि भूतानि मधु यश्चाऽयमस्मिन्मानुषे तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम् ।।१३।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मानुष मधु भूतानां भूतानि तस्य वै मधु ।**
**तन्ना तैजस एवात्मा मानुषो ब्रह्म चामृतम् ।।**

अथात्मनि मधुभावनम् —

**अयमात्मा सर्वेषां भूतानां मध्वस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेद ँ सर्वम् ।।१४।।**

अत्र कार्यकरणसूक्ष्मसंघात एव आत्मा, परमात्मा चैतन्यावच्छिन्नसमष्टि जीवाभिमानिहिरण्यगर्भः ।

**आत्मा मधु हि भूतानां भूतानि चात्मनो मधु ।**
**तन्ना तेजो मयश्चात्मा सैवात्मा ब्रह्म चामृतम् ।।**

**पृथिव्याद्यात्मपर्यन्त वस्तुषु सप्तसप्तसु ।**
**मधु विद्या मधोर्भावो विन्यस्तो मधुसूदने ।।**

अथात्मनः सर्वाधिपतित्वं सर्वाश्रयत्वं व निरूपयति —

**स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूताना ँ राजा तद्यथा रथनाभौ च रथतेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः एत आत्मानः समर्पिता ।।१५।।**

अयं मधुविद्यया व्याख्याता सः आत्मा परमात्मा मधूनि चतुर्दशसु समारोपितानि कार्यकारणानि सूदयति व्योपह्य स्वस्मिन् विलापयति इति मधुमूदनः । तथा भूतोऽयं आत्मा सर्वेषां भूतानां भवन्तीति भूतानि तेषामधिपतिः स्वाामी रञ्जनात् राजा । यथा रथनाभौ धुरि रथनेमौ च रथचक्रे सर्वे अराः लौहा वयवाः समर्पिताः तथैव सर्वे देवा लोकाः प्राणाः एते आत्मानः । इत्यनेन स्पष्टं जीवात्मपरमात्मनोर्भेदः स्वरूपतः प्रतिपादितः समर्पिताः ।

मधुविद्यामाहात्म्यं स्तौति—

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत् । तद्वां नरा सनयेद ँ स उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं । दध्यङ् ह यन्मध्वाथर्वणो वामश्व शीर्ष्णा प्रयदीमुवाचेति ।।१६।।**

इदं मया कथ्यमानम्, तत् प्रसिद्धं, मधु मधुविद्यारहस्यम् अथर्वणः पुत्रः आथर्वणः दध्यङ् दधीचिः, अश्विभ्यामविश्नीकुमाराभ्यांमुवाच—तदेतत् पश्यन् ऋषिः अवोचत्,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नरा "सुपां सुलुक्" इत्यनेन आ आदेशः सनये लाभाय सनः लाभः दसे दंसकर्मणि आविष्कृणोमि प्रकटयामि। इदं प्रसिद्धं यदश्विनीकुमारौ, दध्यञ्चमाथर्वणमात्मन उपनयनाय प्रार्थितवन्तौ। तेनोक्तं युवापमुपनयनतो मे इन्द्रः शिरः छेत्स्यति। ताभ्यामुक्तं— यत्त्वच्छिरः निजोपनयनकाले कृत्वान्यत्र रक्षित्रष्यावः। त्वयि चाश्वशिरः प्रत्धिाय श्रोणयाव उपदेशं त्वत्तः, पुनरिन्द्रे छिन्नवति ते शिरस्तत्र धास्यावः इययमेव उग्रता तत्र। यथा स्तन्यतु : मेघस्य वृष्टिम् वर्षणम् न इव। अत एव दधीचिः वां युवाम् अश्वस्य शीर्ष्णः प्रायात् यतवान् ईम् मायारूपमुवा च साम्प्रतं ब्रह्मत्वेनोपदिशामि।

अथ भूयस्तां स्तोति—

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचदाथर्वणायाश्विना दधीचेऽश्व्य ँ शिरः प्रत्यैरयतम्। स वां मधु प्रवोचदृतायत्त्वाष्ट्रं यद्दस्त्रावपि कक्ष्यं वामिति ।।१७।।**

इदा मित्यादि पूर्ववत् ऋषिरवोचत्—हे अश्विनौ! अश्वस्य इदम् आश्व्यं शिरः प्रत्यैरयतम्। आनीतवन्तौ तदा सः ऋताय ऋतं सत्यं, तस्य पालनाय वां युवां त्वाष्ट्रं सूर्यसम्बन्धिमधु प्रावोचत्। यच्चापि कक्ष्यम् तदिव गोप्यम्, यथा कं संसारं क्षिणोति इति कक्ष्यं तदपि संसारनाशकं ब्रह्मतत्त्वमुवाच। इदमेव मैत्रेयि तुभ्यमहमवोचम इति तात्पर्यम्।

किमवोचद् ब्रह्मतत्त्वमित्याह —

**इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचत्। पुरश्चक्रे द्विपदः पुरचक्रे चतुष्पदः पुरः स पक्षी भूत्वा पुरः पुरुष आविशदिति। स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम् ।।१८।।**

दधीचि प्राह—हे अश्विनौ! सः पुरूष पुरुसु शरीरेषु वर्तमानः सन् पुरिशयः शरीरे शयानः, पूर्वं द्विपदः मनुष्यान् पुरश्चक्रे शरीराणि निर्ममे, अनन्तरं चतुष्पदः पुरश्चक्रे, पश्चात् पक्षी भूत्वा जीवः पक्षधरो भूत्वा पुरः शरिराणि आविशत् प्रविष्टः, एनेन एतेन किञ्चिदपि न अनावृतं सर्व मेवावृतम् न किमपि असंवृतं सर्वमपि संवृतम्।

अथ प्रकरणमुपसंहरति

**इदं वैतन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतदृषिः पश्यन्नवोचद्रप ँ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय। इन्द्रो मायाभिः पुरूरूप ईयते युक्ता ह्यस्य हरयः शता दशेति। अयं वै हरयोऽयं वै दश च**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मा पूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ।।१९।।**

इदमित्यादिपूर्ववत् तत्परमात्मा अस्य स्वकीयस्य, रूपं प्रचक्षणाय व्याख्यायै, रूपं रूपं प्रति जीवात्मशरीरं प्रति रूपः प्रतिष्ठितरूपवान् बभूव विरेजे इन्द्रः सर्वशक्तिमान् भगवान् मायाभिः, यत्तु शङ्करेण मायाभिरिति अविद्या इति व्याख्यानं वान्त तदनर्गलम्। मायाभिरिति बहुवचनं तच्च आदरार्थे आदरश्च भगवत्कृपायाः तस्मान् मायाभिः परमादरणीयया भगवत्कृपया पुरूरूपः अनन्तरूपवान् ईयते भक्तैः शरण्यत्वेन प्रपद्यते। एवमेव अस्य दशशताधिकं हरयः अश्वा इन्द्रियाणि युक्ता अयमेव परमात्मनः अपूर्वं पूर्वरहितम् अनपरम् अपररहितम् अनन्तरम् अन्तरहितम् अपारं सर्वानभूः सर्वस्य अनुभाविता ब्रह्म । इदमेव सर्वं वेदान्तानामनुशासनम् ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि द्वितीयाध्याये श्रीराघवकृपाभाष्ये पञ्चमं मधुब्राह्मणं सम्पूर्णम् ।**

।।राघवः शन्तनोतु मे ।।

## ।। षष्ठब्राह्मणः ।।

## ।। अथ वंशपरम्परावर्णनम् ।।

**अथ वँ् शः । पौतिक्ष्यो गौ पवनाद्गौपवनः पौति-गाळठयात्पौतिभाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ।।१।।**

**अग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिक्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमाद्गौतमः सैतवप्राचीनयोग्याभ्या ँ् सैतवप्राचीनयोग्यौ पाराशर्यात्पराशर्यो भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजाद्भारद्वाजः पराशर्यात्पराशर्यो बैजवापानाद्बैजवापायनः कौयिकायनेः कौशिकायनिः ।।२।।**

**घृतकौशिकाद्घृतकौशिकः पाराशर्यायणात्पराशर्यायणः पराशर्यात्पराशर्यो जातूकर्ण्याज्जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायण स्त्रौवणे-स्त्रैवणिरौपजन्धनेरौ पजन्ध निरासुरेण सुरिर्भारद्वाज्भारद्वाज**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिनयो वत्सनपातो ब्राभ्रवाद्वत्सनपाद्बाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्याम । अथ प्रथमान्ता; शिष्याः पञ्चभ्यन्ता आचार्याः श्विनो दधीच आथर्वणाद्दध्यङ्ङाथपर्वणोऽथर्वणो दैवादथर्वादैवरे मृत्योः प्राध्वँ सनान्तमृत्युः प्राध्वँ सनः प्रध्वँ सनात्प्रध्वँ सन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रत्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारू सनातनात्सनातनः सनगात्सनगः परमोष्ठिनः परमेष्ठी ब्राह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ।।३।।

अत्र प्रथमान्ताः शिष्याः पञ्चम्यन्ता आचार्याः ।।श्रीः।।

इति बृहदारण्यकोपनिषदि द्वितीयाध्याये षष्ठब्राह्मणम् ।

।। राघवः शन्तनोतु मे ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

# ।। तृतीयाध्यायम् ।।

## ।। प्रथमब्राह्मणः ।।

### मंगलाचरणम्

**शम्पाकल्पलतात्त्विडर्चिविलसन्मध्यौप्रमालङ्कृत-**
**श्यामश्वेतसरोरूहच्छावितनू नूत्वं वयो विभ्रतौ ।**
**प्रोज्झत्सङ्गनिषङ्गकार्मुकशरान् धीरौ दधानावहं**
**वन्दे राघवलक्ष्मणौ वनमितौ सीतातृतीयौ मुहुः ।।**

अथ पुनर्ब्रह्मणः स्पष्टप्रतिपत्तये तदुपायभूततया वैदिकसिद्धान्तानां समीचीन-व्याख्याप्रस्तावाय मोक्षस्य च विवरणाय ग्रहातिग्रहादिवर्णनद्वारेण संसारनिःसारतां निष्पादयितुं याज्ञवल्क्यीयं काण्डं प्रारम्भ्यते । तत्र नवभिर्ब्राह्मणैरुपेतस्तृतीयोऽयमध्यायः । प्रथमं मिथिलाधिराजस्य यज्ञे ब्रह्मवित्सत्तमतया महर्षेर्याज्ञवल्क्यस्य प्रस्तावः ततग्रे च जनकराजर्षेः होतुः अस्वलस्य प्रश्नाः —

**ॐ ।। जनको ह वैदेहो बहुदक्षिणेन यज्ञेतेजे तत्र ह कुरुपाञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कः स्विदेषां ब्राह्मणानामनूचानतम इति स ह गवा ँ् सहस्रमकरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ।।१।।**

इति ह इतिहास प्रसिद्धं यत् - वशिष्ठशापेन भग्नदेहतया निमिर्विदेहः यद्वा ब्रह्मज्ञानाग्निदग्धदेहमिथ्यासम्बन्धतया सततब्रह्मचिन्तनेन वा विस्मृतदेहदेहिभावसम्बन्धतया वा विदेहः, तस्य वंशे भवः वैदेहः स च जनकः, पितेव प्रजापालकः जनैः कीयमानत्वाद्वा जनकः, जनेभ्यः कं ब्रह्मसुखं यस्मात् तथाभूतो जनकः, बह्वी दक्षिणा यस्य स बहुदक्षिणः तेन बहुदक्षिणेन अश्वमेधेन राजसूयेन वा ईजे इष्टवान् बभूव । तत्र कुरुपाञ्चालानां वास्तव्याः ब्राह्मणाः ब्रह्माधीयानाः ब्रह्मवेतृत्त्वविशिष्टाः जन्मना कर्मणा च विप्रत्वसम्पन्नाश्च अभिसमेताः बभूवुः । आगता आसन् मिथिलानगरे इति शेषः । एवं यज्ञजिघृक्षितभागान् ब्राह्मणान् वीक्ष्यह तस्य वैदेहस्य वैदेहिपितुः महाराजजनकस्य हृदि विजिज्ञासा वविशेषा जिज्ञासा ज्ञातुमिच्छा बभूव, यद्वा विष्णुविषयिणी जिज्ञासा विजिज्ञासा । ननु औपनिषद् व्याख्यानक्रमे कुत आपतितोऽयं तावको विष्णुः ?

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इतिचेदल्पज्ञोऽसि **तद् विष्णोः परमं पदं सदा पश्यन्ति सूरयः दिवीवि चक्षुराततम्** इति औपनिषदभागेऽपि विष्णुसूक्तस्यापि सङ्कीर्तनश्रवणात्, मन्त्रभागेतु विष्णुसूक्तस्य बहुशः कीर्तनात् **विष्णोर्नुकं वीर्याणि प्रवोचत् प्रतद्विष्णोस्तौतिवीर्याय इदं विष्णुर्विचक्रमे** इत्यादि मन्त्रेषु बहुषश्चर्चितत्वात्। ननु कर्मकाण्डीयमन्त्राणां ज्ञानकाण्डे न विनिगमः ? इति चेत् एषः विभागस्तु युष्माभिः कृतः, परमार्थतस्तु सर्वोऽपि वेदराशिरेक एव, परम्परया साक्षाच्च भगवन्तमेव परब्रह्म महातात्पर्यतया समध्यवस्यति। न च ज्ञानकाण्डे साक्षाद्ब्रह्म मीमांसायां जागरूकायां परम्परया तत्प्रतिपादनस्य दौर्बल्यमिति वाच्यम् वाच्यापेक्षया व्यङ्ग्यस्य समधिकमहत्ववत्वेन तस्य दौर्बल्याभावोपपत्तेः, पत्न्यास्तु साक्षात्कथनापेक्षया परम्परया वर्णने समधिकमाधुर्यनिष्पत्तेश्च, अत एव भगवत्या सीतया ग्रामवधूभिः पृष्टया खञ्जजनमञ्जुवक्रलोचनसङ्केतेन निजपतिं परिचाययामासे। यथोक्तं श्रीमानसे —

**बहुरि बदन विधु आंचल ढाकी। पिय तनु चितइ भौंह करि वांकी।**
**खञ्जनमञ्जु तिरीछे नयननि। निज पति कहेउ तिन्हहि सिय सयननि।।**
(मा० २/११७!६-७)

रूपान्तरम् —

**भूयः समावृत्यपटाञ्चलेन मुखोडुपं वीक्ष्य वपुश्च पत्युः।**
**वक्रत्विषा खञ्जनलोचनेन सङ्केतयामास पतिं च सीता।।**

एवं परम्परया कुलवती काचिन्नवोढा लज्जांवती सङ्केतयति। ननु "त्रैगुण्य विषया वेदा निस्त्रैगुण्यो भवार्जुन" इत्यत्र निस्त्रैगुण्यविषये कर्मकाण्डीय श्रुतीनाम् अप्रसर उक्तः ? इति चेन्न, तत्र "वेदवादरता" इत्युक्त्वात् तानेव विशिनष्टि। वेदवादाः त्रैगुण्यविषयाःवेदाः समासश्चात्र त्रैगुण्यः विषयः येषां ते त्रैगुण्य विषयाः अवेदाः वेद भिन्नाः वेदवादाः—यद्वा त्रैणुण्यं विशृण्वन्ति इति त्रैगुण्यविषयाः त्रैगुण्यविषय एव अवेदा इति त्रैगुण्यविषयावेदाः इति सर्वं समञ्जसम्। एवं विजिज्ञासायां जायमानायां जनको व्यचीचरत्, स्वित् एषां ब्रह्मणानां मध्ये कः अनूचानतमः अनुकूलं श्रुतिस्मृत्यनुरूपं वक्ता इत्यनूचानः अतिशयेन अनूचानः इति अनूचानतमः इति इत्थम् जिज्ञाससमानः। यासां शृङ्गयोः दशदश पादाः लग्नाः बभूवुः। यं प्रशसेयं ब्रह्मविद्यायाः।अथ याज्ञवल्क्यः आत्मनोब्रह्मज्ञत्वं प्रमाणयति —

**तान्होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति। ते ह ब्राह्मणा न दधृषुरथ ह याज्ञवल्क्यः स्वमेवं ब्रह्मचारिणमुवाचैताः**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सोम्योदज सामश्रवा ३ इति ता होदाचकार तेह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेत्यथ ह जनकस्य वैदेहस्य होताऽश्वलो बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी ३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वय ँ् स्म इति त ँ् ह तत एव प्रष्टुं दध्रे होताऽश्वलः ।।२।।**

तानुपेतान् ब्राह्मणान्वीक्ष्य मिथिलाधिराजो जनकः प्राह — भो ब्राह्मणाः । भगवन्तः षैडश्वर्यसम्पन्नाः भवन्तः तपसा, भवत्सु यः अधिकं ब्रह्मवित् सः मयादीयमानाः सहस्र संख्याकाः गाः उदयत्तां गृह्णातु । एवमुक्तवति जनके ते ब्राह्मणाः न द धृषुः धृषिरत्र साहसार्थः, गाः आदातुं न साहसं चक्रुरितिभावः । अथ याज्ञवल्क्यः सामश्रवा नामकं ब्रह्मचारिणमात्मीयमुवाच समादिदेश–सोम्य सामश्रवाः एताः सहस्रसंख्याकाः गाः उदज अस्मद्गोशालां नय एवमादिष्टः गोशालां निन्ये । ब्राह्मणाः चुक्रुधुः कुपिता बभूवुः नः अस्माकं मध्ये त्वमेव कथं ब्रस्मिष्ठः ब्रह्मवित्तमः? अथ जनकस्य होता आश्वलः बभूव आसीत् । सः याज्ञवल्क्यं पप्रच्छ त्वं ब्रहमिष्ठः तथापि अस्माकं मध्ये ? याज्ञवल्क्यः प्रत्युत्तरयामास वयं गोकामाः ब्रहमिष्ठाय नमस्कुर्मः । इत्यनेन सिद्धान्तितमेतत् यत् ब्रह्मिष्ठः आत्मनं ख्यापयति नाहि ।

**यस्यामतं तस्य मतं मतं यस्य न वेद सः ।**
**अविज्ञातं विजानतां विज्ञातमविजानताम् ।।**

(केन ३.२.३)

एवं श्रुत्वाश्वलः जनकस्य होता प्रष्टुं दध्रे साहसं कृतवान् ।

अथ याज्ञवल्क्यमाश्वलः पृच्छति —

**याज्ञवल्क्येति होवाच यदिद ँ् सर्वं मृत्युनाऽऽप्त ँ् सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति होत्रर्त्विजाग्निना वाचावाग्वै यज्ञस्य होता वद्येयं वाक्सोऽयमग्निः स होता स मुक्तिः साऽतिमुक्तिः ।।३।।**

स आश्वलः उवाच पप्रच्छ, याज्ञवल्क्येति संबोधनमभिमुखीकरणाय, त्वं ब्रह्मिष्ठोऽसि तस्मान्मृत्योरमृतस्य चान्तरं वेत्सि, अतः पृच्छामि यत् इदं सर्वं जडचेतनात्मकं जगत् मृत्युना कालात्मना अभिपन्नं तर्हि केन उपायेन समनुष्ठीयमानेन यजमानः मुच्येत अतिमुच्येत च अतः मुक्तेरतिमुक्तेश्च अन्तरं कथय । याज्ञवल्क्योवाच-होताचासौ ऋत्विजाग्निः इति होत्रर्त्विजाग्निः, तेन वागेव होता, अनेनैव आत्मनि भावाः हूयन्ते । स एव मुक्तिः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सैवातिमुक्तिश्च वाणी एव । वेदादिस्वाध्यायद्वारा मृत्युमुखात् जीवं मोचयति । इयमेव च रामनामजपादिद्वारा अतिशयेन मोचयति मुक्तिः सामान्या अतिमुक्तिः अतिशयता मुक्तिः सा चात्यान्तिकी । वागेव मुक्तिरित्यत्र करणे क्तिन् एवमतिमुक्तिः रित्यत्रापि । एवं वाग् यज्ञाङ्गीभूय भगवन्निमित्तव्याहरणासमाश्रितपरमेश्वरगुणगानैकशरणा जीवं मृत्योर्मुञ्चतीति श्रौतं हार्दम् । यथोक्तं श्रीगीतासु —

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ।।**

पुनरहोरात्राभ्यां मुक्तिमतिमुक्तिश्च व्याचष्टे —

**याज्ञवल्क्येति होवाच यदिदि ँ् सर्वमहोरात्राभ्यामाप्त ँ् सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इत्यध्वर्युणर्त्विजा चक्षुषाऽऽदित्येन चक्षुर्वै यज्ञस्याध्र्वर्युस्तद्यदिदं चक्षु सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः साऽति मुक्तिः ।।४।।**

याज्ञवल्क्य ! इदं सर्वं चराचरं मृत्युरूपाभ्ययामहोरात्राभ्यां दिवसनिशाभ्यामितिभावः आप्तं व्याप्तमभिपन्नं ग्रस्तं च, तर्हि केनोपायेन यजमानः आध्यात्मिकं यागं कुर्वाणः तयोः व्याप्तिमतिमुञ्चति । याज्ञवल्क्यः प्राह - चक्षुरूपेणाध्वर्युणा अनेन एको यज्ञो यष्टव्यः, सर्वं रूपं भगवदीयता यदि दृष्टं स्यात् तदा चक्षुरेव प्रतिरुपं भगवद्भावनं मुक्तिर्भवति भगवति जगद्भावनं चातिमुक्तिर्भवति यथोक्तं श्रीगीतासु —

**सर्वभूतेषु चात्मानं सर्वभूतानि चात्ममनि ।**
**ईक्षतेयोगमुक्तात्मा सर्वत्र समदर्शनः ।।**

( गी. १३.२९)

अत्र द्वितीयासप्तभ्यन्ततया निर्दिष्टो द्विरात्मशब्दः परात्मशब्दः, एवं चक्षुर्यदि संसाररूपभावनां त्यजति तदा अध्वर्युर्भूत्वा अहोरात्ररूपान्मृत्योर्मुञ्चति यथोक्तं श्रीभागवते —

**अक्षण्वतां फलमिदं न परं विदामः**
**सख्यः पशूननुविवेशयतोर्वयस्यैः ।।**
**वक्त्रं व्रजेशसुतयोरनुवेणुजुष्टं**
**यैर्वा निपीतमनुरक्तकटाक्षमोक्षम् ।।**

(भा० १०. २१. ७)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ पक्षद्वयान्मुक्ति प्रकारमाह —

**याज्ञवल्क्येति होवाच यदिद ँ सर्वं पूर्वपक्षापरपक्षाभ्यामाप्त ँ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षापरपक्षयोराप्तिमतिमुच्यत इत्युद्गात्रर्त्विजा वायुना प्राणेन प्राणो वै यज्ञस्योद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः साऽतिमुक्ति ।।५।।**

पूर्वपक्षः कृष्णः अपरः शुक्लः, यदि चेत् अस्य आध्यात्मिकयज्ञस्य प्राण एव उद्गाता भवतु, प्रतिश्वासं भगवन्तमेव उद्गायतु तदा उद्गातृरुपः स एव जीवं पक्षद्वयान्मुक्त्वा कालातीतं करोति। यथा व्रजाङ्गनाः प्रतिश्वासं भगवन्तं गायन्त्यः कुर्वाणश्च निजप्राणमुद्गातारम् उभाभ्यां पक्षाभ्यां मुक्ताः एकस्यामेव रात्रयामनन्ताऽनन्तरात्रीणामेकस्मिन्नेव श्रीवृन्दावने पञ्चक्रोशात्मके अनन्तानन्तक्रोशानां समाहारं विधाय रेमिरे रमाललितपदपल्लवेन । नन्वेकस्यां रात्रौ अनन्तरात्रीणां संयोगे किं मानमिति चेत् **भगवनानपितारात्रीः** (भा० १०/२९/१) इत्यत्र बहुवचन मुक्त्ता प्रारंभे विश्रामेचास्याः पञ्चाध्याय्याः **ब्रह्मरात्रउपावृत्ते** (भा० १०/३३/३९) इत्येकवचनप्रयोगात् बहूनामेकस्यां समाहारः सुतरामवगम्यते।

यथा श्रीमानसे —

**मासदिवस कर दिवस भा मरम न जानइ कोई ।**
**रथ समेत रवि थाकेउ निसा कवन विधि होई ।।**

एतद्रूपान्तरम् —

**मासात्मकदिनानाञ्च एकमेवाभवद्दिनम् ।**
**सरथस्थगितः सूर्यः कथङ्कारं निशा भवेत् ।।**

अतिमोक्षमुपसंहरति —

**याज्ञवल्क्येति होवाच यदिदमन्तरिक्षमनारभ्यणमिव केनाऽऽक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति ब्रह्मणर्त्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः साऽतिमुक्तिरित्यतिमोक्षा अथ संपदः ।।६।।**

अश्वलः पप्रच्छ—याज्ञवल्क्य ! रलयोरभेदात् अनारम्बणम् अनालम्बनमन्तरिक्षमिदम् आलम्बनरहितमिव, इवार्थस्तु भगवदवलम्बनेऽपि तस्यपरोक्षत्वात् निराधारमिव प्रतीयते सहितिक्रमणं विनाकोऽपि स्वर्गं नातिरोढुं पारयति । तर्हि । तत्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

केन सोपानेन आक्रमेत् ? याज्ञवल्क्यः प्राह—ब्रह्मणा ऋत्विजा यज्ञे आचार्यानन्तरमेकः ऋत्विग् ब्रह्मा भवति, अस्मिन् यज्ञे आध्यात्मिके मन एव ब्रह्मा, स एव आध्यात्मिकतया चन्द्रः, तेनैव द्रुतगतिना अयं साधकः अंतरिक्षमारूह्य स्वर्गं याति । अयं मनोरुपः ब्रह्मा चन्द्रदैवतः ऋत्विक् अर्थात् यदि मनः विहायजगतीतलसंकल्पं केवलं ब्रह्माभिधेय-श्रीरामनामरुपलीलाधाम्नां चित्तनं करोतु तदा निश्चितमेव विहायसंसारं स्वर्गं साकेतं याति । वेदानुकूलनिर्गुणब्रह्मचिन्तनेन मुक्तिसंज्ञां लभते, श्रीरामब्रह्मचारूचरणाविन्द-नखमणिचन्द्रिका समुच्छलितभक्तिसुधाधारासंधुक्षणा समुच्छ्रितमतिमुक्तिः । यथा च मम—

**मनोहि द्विविधं प्रोक्तं कुमनः सुतमनस्तथा ।**
**कुमनोवासनासंगी सुमनो भक्तिसंयुतम् ।।**

तथा च श्रीमानसे —

**कठिन कालमलकोस धर्म न ग्यान न जोगतप ।**
**परिहरि सकतभरोस रामहिं भजाहिं ते चतुर नर ।।**

(मा० ३.६.३/६)

रूपान्तरम् —

**मलस्यकोशे कठिने हि काले ज्ञानं न धर्मो न जपो न योगः ।**
**विहाय चाशां जगतो खरारिं भजन्मनुष्यश्चतुरो हि लोके ।।**

अथ यज्ञोपयोगिनीनां ऋचां सम्बन्धे प्रश्नः—

**याज्ञवल्क्येति होवाच कतिभिरयमद्यर्ग्भिर्होतास्मिन्यज्ञे करिष्यतीति तिसृभिरिति कतमास्तास्तिस्त्र इति पुरोऽनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति यत्किंचेदं प्राणभृदिति ।।७।।**

जनकस्य होताश्वलः याज्ञवल्क्यं पप्रच्छ—हे याज्ञवल्क्य ! अयं होता अस्मिन् यज्ञे कितिभिः किं संख्याभिः यज्ञकर्म निर्वर्तयिष्यत्यस्मिन्नश्वमेधयज्ञे । याज्ञवल्क्यः प्रत्युत्तरयामास- तिसृभिः ताः कतमाः सर्वासाम् ऋचामिति शेषः ।याज्ञवल्क्यः प्राह - पुरोनुवाक्या, यज्ञात् पूर्वं पठ्यमाना, याज्या यज्ञसमकालं गदिष्यमाणा मनोज्योतिरित्यादि, शस्या सामस्तास्त्रं तदर्थं या पठ्यते सा, आभिः किं जयति ? सर्वमेव आध्यात्मिके श्रीरामनामजपयज्ञात्प्राक् मनोमन्दिरे भगवदावाहनपूर्विका मानसपूजा पुरोनुवाक्या जपकाले भगवत्स्वरूपध्यानं याज्या जपविश्रामे क्षमाप्रार्थनं शस्या इति वयम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथाहुतिविषये प्रश्नाः —

**याज्ञवल्क्येति होवाच्च कत्ययमद्याध्वर्युरस्मिन्यज्ञाआहुतिर्होष्यतीति तिस्र इति कतमास्तास्तिस्र इति या हुता उज्ज्वलन्ति याहुता अति नेदन्ते या हुता अधिशरते किं ताभिर्जयतीति या हुता उज्जवलन्ति देवलोकमेव ताभिर्जयति दीप्यत इति हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयत्यध इव हि मनुष्यलोकः ।।८।।**

अश्वलः पप्रच्छ—श्रुत्यक्षरार्थस्तु सुगमः भावार्थोऽवधेयः–याज्ञवल्क्यं प्रति अश्वलो जिज्ञास्यते यजमानः कति आहुतीः हृष्यति अत्र वर्तमाने लृङ्व्यत्ययात्, याजमानः किं संख्याः किं प्रकाराश्च आहुतीः जुहोति । उत्तरे याज्ञवल्क्यः—तिस्रः काश्चित् उज्ज्वलन्ति दीप्यन्ते काश्चित् अति नेदन्ते, नेद् धातुः श्रौतः अव्यक्तशब्दार्थः आत्मनेपदीयः घृतादिपातेन बहुशब्दं कुर्वान्ति । काश्चिद् अधिशेरते । याः उज्ज्वलन्ति ताभिर्देवलोकं जयति, याः बहुशब्दं कुर्वन्ति ताभिः पितृलोकं पितृणां कुटुम्बवासनावासितत्वात् शब्दबाहुल्यात्, याः अधः शेरते ताभिः मनुष्यलोकं तस्याधस्तनत्वात् । अध्यात्मे च कर्मणामपि त्रेधा आहुतयो भवन्ति । प्रपत्तिलक्षणकर्मणि यदाहूयन्ते भगवति तदा उज्ज्वलन्ति भगवच्छरणागतनिवेदिताः सर्वसमर्पणरूपाः ताभिर्देवलोकं साकेतं जयति या अतिनेदन्ते निवृत्तिकर्मणां ताभिः पितृलोकं,. याश्च अधिशेरते प्रवृत्तिलक्षणकर्मणां सकामामराधनारूपा ताभिर्मनुस्यलोकमिति वयम् ।

नन्वत्र साधनात्रैविध्ये किं मानम् ? श्रीमदभागवतीयवचनमेव —

**अकामः सर्वकामो वा मोक्षकाम उदारधीः ।**
**तीव्रेण भक्तियोगेन यजेत पुरूषं परम् ।।**

(भागवत २/३/१०)

इति विद्वांसो विभावयन्तु ।

अथ आध्यात्मिकयज्ञे देवताविषयकप्रश्नः —

**याज्ञवल्क्येति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायतीत्येक येति कतमा सैकेति मन एवेत्यनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ।।९।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अश्वल: पुनर्याज्ञवल्क्यं पप्रच्छ - याज्ञवल्क्य ! अयं ब्रह्मा यज्ञस्य उपाचार्य: दक्षिणत: आनुकूल्येन कतिभि: देवताभि: यज्ञं गोपायति रक्षति देवता अन्तरेण रक्षणासम्भवान्मखस्य । याज्ञवल्क्य उवाच - एकया, का नाम सा इति पृष्ट: प्रोवाच आध्यात्मिके यज्ञे बुद्ध्यवच्छिन्न: परमात्मा ब्रह्मा मन एव एका देवता । अभिप्रायोऽयं यदा मनो मनोमोहनस्य भगवतो भक्तिभागीरथीविचिषु समासज्जते तदा निरस्तसकलासुरभावं पूतं पुण्डरीकमिव दक्षिणत: यज्ञरूपं विगतविघ्नविघातं परिवर्जितविषमशरशिली-मुखनिशितनिपातं बुद्ध्यावच्छिन्नेन ब्रह्मणा नियुज्यमानं सत् त्रायते स्ववशंवदम्, इत्यनेन मनसो निन्दावचनानि निरस्तानि । तत् अनन्तरम् अनन्ताश्च विश्वे देवा: सर्वे सुरा: तेषां तत्रैव समाहारात् तेन मनोरूपेण देवेन भगवद्भजनमहिम्ना सर्वदा स्वानुकूलेन सर्वं सर्वरूपं परमात्मानं जयति । मनसैव प्रतिकूलेन परमेश्वरपदपद्मविमुखेन नि:सारसंसारसम्बन्धवासनाजागर: अनुकूलेन तेनैव स्वान्तेन शान्तेन भगवद्भजनदान्तेन संसार स्मृत्युपमर्दपूर्वककमलनयननवनलिनचरणस्मृति: इति मन्मनीषितं श्रुतौ भगवदनुश्रुतौ ।

अथ यज्ञस्तोत्रविषयप्रश्ना: —

**यज्ञवल्क्येति होवाच कत्ययमद्योर्दगाताऽस्मिन्यज्ञे स्तोत्रिया: स्तोष्यतीति तिस्त्र इति कतमास्तास्तिस्त्र इति पुरोनुवाक्या च याज्या शस्यैवतृतीया कतमास्ता या अध्यात्ममिति प्राण एव पुरोनुवाक्याऽपानो याज्या व्यान: शस्या किं ताभिर्जयतीति पृथिवीलोकमेव पुरोनुकाक्यया जयत्यन्तरिक्षलोकं याज्यया द्युलोकँ् शस्यया ततोह होताऽश्वल उपरराम ।।१०।।**

अथान्तिमप्रश्नोऽश्वलस्य—याज्ञवल्क्य ! उद्गाता अद्य वर्तमाने दिने अस्मिन् जनकस्याश्वमेधयज्ञे कति संख्याका: स्तोत्रिया: स्तोतुं योग्या ऋच: उद्गातास्तोष्यति । याज्ञवल्क्य प्राह: - तिस्त्र: व्याख्यातपूर्वा: पुरोनुवाक्या याज्या शस्या इति तासामाध्यात्मिकं व्याख्यानम्—प्राण एव पुरोवाक्या तद्भगवन्मयत्वात् पृथिवीं जयति , व्यानं शस्या तेन द्युलोकम् । एवं शरीरे वर्तमानानां यदि भगवद्रूपाधियज्ञनिमित्तत्वं तदा न कर्मबन्ध: । **यज्ञे वै विष्णु:** इति श्रुते: **अधियज्ञोऽहमेवात्र देहे देहभृतां वर** (गीता८/२) इति स्मृतेश्च एवं सर्वेषु प्रश्नेषु समाहितेषु याज्ञवल्क्यं ब्रह्मिष्ठं पूजयन् अश्वल: उपरराम तूष्णीं बभूव ।।श्री:।।

**इति बृहदारण्यकोपनिषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये प्रथमं ब्राह्मणं सम्पूर्णम् ।।**

**।। राघव: शन्तनोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। द्वितीय ब्राह्मणम् ।।

### मङ्गलाचरणम्

**चलाक्षुरितमेघाभं लतायुततरूपमम् ।**
**सीताद्वितीयं श्रीरामं द्वितीये ब्रह्म भावये ।।**

अथ पूर्वस्मिन् ब्राह्मणे शरीरे यज्ञस्य भावना–तत्रापि वाक्प्राणमनसामुपलक्षणतया सकलेन्द्रियाणां भगवदीयतया स्वर्गाभिधेयसाकेतमयत्वमुक्तम् । द्वितीये जारत्कारव-याज्ञवल्क्यसम्वादमुखेन ग्रहातिग्रहव्याख्याान विषयेण मृत्युरूपग्रहग्रस्तस्य जीवस्य तन्मुक्तये भगवतः प्रपत्तिरेव सङ्कीर्त्यते ।

अथ जारत्कारवः प्रश्नमवतारयति —

**अथहैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कति ग्रहाः कत्यतिग्रहा इति । अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहाः अष्टावतिग्रहाः कतमे त इति ।।१।।**

जरन्ति कारुणीज्ञानाग्निना भष्मीभवन्ति कर्माणि यस्य तथाभूतो जरत्काः ऋषिविशेषः तस्य गोत्रापत्यं जारत्कारवः । एवम् ऋतं सत्यस्वरूपं श्रीरामं ब्रह्म तं भजते इति ऋतभगः, ऋतभागस्यापत्यमयं पुमान् आर्तभागः, स एव याज्ञवल्क्यं पप्रच्छ— याज्ञवल्क्य । कति ग्रहा अतिग्रहाश्च भवन्ति ? गृह्णन्ति यान्तं जीवं ये ते ग्रहाः । इन्द्रियाण्यष्टौ अतिशयेन गृह्णन्ति गृहीत्वापि न मुञ्चन्ति इत्यातिग्रहाः दुरासदा इन्द्रियविषयाः । याज्ञवल्क्य आह—उभयेऽप्यष्टौ । अष्टौ के ते ? इति पुनरपि जारत्कारवः पप्रच्छ ।

अथेन्द्रियाणां ग्रहत्वं विषयाणाञ्चातिग्रहत्वं निरूपयति—

**प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन गन्धाञ्जिघ्रति ।।२।।**

प्रकरणत्वात् प्राणः घ्राणः, अपानः गन्धः । अपकृष्टं पार्थिवमानयतीत्यपानः । तेनातिशयेन ग्राहेण गृहीतः गन्धं शोभनमशोभनञ्च जिघ्रति नाशया तमुपमुङ्क्ते ।

अथ वाग्ग्रहत्वं निरूपयति—

**वाग्वै ग्रहः सनाम्नाऽतिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ।।३।।**

वाक तदवच्छिन्नमिन्द्रियं ग्रहः, नाम शब्दः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ जिह्वाया: गृहत्वं प्रतिपादयति—

**जिह्वा वै ग्रहः स रसेनाऽतिग्राहेण गृहीतो जिह्वया हि रसान्विजानाति ।।४।।**

रसेन रसना विषयेण विजानाति विविच्य समास्वादयति ।।श्रीः।।

अथ चक्षुषो ग्रहत्वम् निरूपयति

**चक्षुर्वै ग्रहः स रूपेणाऽतिग्राहेण गृहीतश्चक्षुषा हि रुपाणि पश्यति ।।५।।**

रुपमतिग्राहः अत एवानिच्छतापि चक्षुषा गृह्यत एव पश्यति, रूपभोगं करोति ।

श्रोत्रस्य ग्रहत्वं प्रतिपादयति—

**श्रोत्रं वै ग्रहः स शब्देनाऽतिग्राहेण गृहीतः श्रोत्रेण हि शब्दाञ्छृणोति ।।६।।**

एवं श्रूयते अनेन इति श्रोत्रं श्रवणेन्द्रियं तदपि शब्देन नभोगुणेन ।।श्रीः।।

अथ मनसो ग्रहत्वं निरुपयति—

**मनो वै ग्रहः स कामेनाऽतिग्राहेण गृहीतो मनसा हि कामान्कामयते ।।७।।**

कामः अभिलाषः स एव अतिशयितोग्राहः ।।श्रीः।।

हस्तस्य ग्रहत्व वक्ति—

**हस्तौ वै ग्रहः स कर्मणाऽतिग्राहेण गृहीतो हस्ताभ्यां हि कर्म करोति ।।८।।**

तद्व्यापार एव विवक्षितोऽतिग्राहत्वेन ।।श्रीः।।

त्वचो ग्रहत्वम्

**त्वग्वै ग्रहः स स्पर्शेनाऽतिग्राहेण गृहीतस्त्वचा हि स्पर्शान्वेदयत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ।।९।।**

स्पर्शेन तद्विषयेण वेदयते स्वयमनुभवति जीवात्मानं चानुभावयति एवम्—

**घ्राणवाग्रसनाचक्षुः श्रोत्रस्वान्तःकरत्वचः ।**
**विपयैर्गृह्यमाणत्वात् ग्रहा अष्ठावुदीरिताः ।।**

**गन्धःनामरसोरुपं शब्दः कामः कृतिः स्पृशिः ।**
**भोगस्त्यक्तुमशक्यत्वादतिग्राहा इमेष्ट वै ।।**

अथ मृत्युः सर्वभक्षकः सोऽपि केनाऽपि भक्ष्यते न वा इति पृच्छत्यार्तभागः—

**याज्ञवल्क्येति होवाच यदिदँ् सर्वं मृत्योरन्नं का स्वित्सा देवता यस्या मृत्युरक्षमित्यग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मुत्यं जयति ।।१०।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

याज्ञवल्क्य इति सम्बोध्य पृच्छति जारत्कारवः–पूर्वमेवोक्तमिदं यच्चराचरम् तत् सर्वं मृत्योः कालशक्त्यवच्छिन्नस्य भगवतः अन्नम् अद्यते इत्यन्नं भक्ष्यम् । स्वित् प्रश्ने सः का एतस्मादपि बलवत्तरा देवता दिव्यशक्त्यवच्छिन्ना च यस्याः मृत्युः अन्नं भक्ष्यम् । याज्ञवल्क्य प्राह—अग्निः सर्वाभिदेवताभिः अग्रे नीयते तस्मादग्निः, अतः एव वेदे सर्वप्रथमे मन्त्रे एतस्यैव श्रवणम्—

**ओम् अग्निमीले पुरोहितं यज्ञस्य देवमृत्विजम् होतारं रत्नधावतम् ।।**

(ऋ०वे० १/१/१)

पुरो धीयमानत्वात् पुरोहितं यज्ञस्य देवं यज्ञसम्बन्धिदैवतम्, ऋत्विजम् ऋतुषु यजते इति तथाभूतम्, स्वयमेव होतारं हविर्गृहीत्वा मुखरूपोऽसौ परमात्मने जुहोति तस्मादस्य होतृत्वम् । रत्नधातवम् रत्नानि दधाति पुष्णाति तथा भूतमाग्निमग्रेनीयमानं भगवन्मुखतया, ईले रडलानामभेदात् ईडे, अग्निर्हि भगवन्मुखं श्रुतिर्हि भगवतः पत्नी, पत्नी हि पत्युर्मुखमेव सर्वप्रथमं पश्यति चुम्बति तस्मात् सर्वप्रथमं तस्य स्तवनमेव श्रुत्या विधीयते तस्मात् परमेश्वरमुखतया मृत्युरपि तेनैव भक्ष्यते । यथा चोक्तं पार्थेन श्रीगीतासु—

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ।**
**तथैव नाशाय विशन्ति लोका स्तवापिवक्त्राणि समृद्धवेगाः ।।**

(गीता ११/२९)

तस्यापि जलं जलरूपः परमात्मा अन्नं, जायन्ते जीवाः यस्मात् लीयन्ते च यस्मिन् तज्जलम् इति व्युत्पत्तेः **तज्जलानीति शान्त उपासीत** इति श्रुतेश्च ।

अथ ब्रह्मतत्ववेत्ता क्षीणप्रारब्धं पाञ्चभौतिकं देहं ककं पर्यवसाययति इति विवेच्यते—

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियत उदस्मात्प्राणाः क्रामन्त्याहो ३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मातो मृतः शेते ।।११।।**

याज्ञवल्क्येति सम्बोध्य त आर्तभागः पृच्छति—यत्र यस्मिन् काले अयं पुरुषः म्रियते प्राणैर्वियुज्यते तर्हि तस्मात् प्राणाः क्रामन्ति शरीरान्तरं गच्छन्ति न वा ? नेति नेति कथयित्वा याज्ञवल्क्यः निषेधति, तस्य तत्त्वज्ञस्य प्राणाः उपलक्षणतया सकलेन्द्रियशक्तयः इहैव अस्मिनेव परमात्मनि लीयन्ते, नान्यत्र गच्छन्ति । सः उच्छ्वयति वायुरुपेण प्राणेन शोथं गच्छति, वायुनैवाध्मातः पूर्णः शेते सुखं श्वपिति परमात्मनि । व्यवहारे मृत इति मिथ्या कथ्यते, परमार्थतस्तु भगवद्विस्मरणमेव मरणं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तच्च परमात्मवेत्तरि सम्भवमेव न कथंचित् । न च **शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः गृहीत्वैतानि संयाति वायुर्गन्धानिवासयात्** ।।गीता १५/८।। इति भगवदुक्तसिद्धान्तस्य प्रकृतश्रुत्या विरोध इति वाच्यम्, उभयोरपि भिन्नविषयत्वात्, ब्रह्मतत्त्वज्ञस्य हि क्षीणशरीरारम्भककर्मत्रितये फलतया शरीरान्तरग्रहाणानुपपत्तौ जीवात्मनस्तथात्वासम्भववात् गीतासु च जीवजगत्साधारण्येन जीवात्मनः शरीरोत्क्रमणस्य प्रतिपादितत्वात् उभयऽत्रापि विषय भेदःसुस्पष्ट एव ।

अथ किं जीवम् न त्यजति ? इति प्रतिपादयति—

**याज्ञवल्क्येति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति नामेत्यनन्तं वै नामानन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ।।१२।।**

हे याज्ञवल्क्य ! इति सम्बोध्य जारत्कारवः उवाच पप्रच्छ—यत्र यदा काले पुरुषः म्रियते तदा सर्वेष्वेनं जहत्सु एनं किं न जहाति, न त्यजति ? पूर्वं भवतैवोक्तम् यदयं शेते यथा श्रान्तसुतः पितुरङ्के स्थपिति, तथैवायमपि सततसंसारसागरतरलमायोत्तुङ्ग तरङ्गपरिष्वङ्गसङ्गपरिश्रान्तः शेते, तस्मिन्नपि समये किमप्येनेन सह भवति न वा ? उत्तरयति–नाम जीवसंज्ञा एवं जीवरूपिणं नित्यमात्मानं न जहाति इत्यनेन जीव ब्रह्मणोर्भेदो नित्यता च श्रुत्यैव सुस्पष्टमुक्ता । नन्वस्मिन् व्याख्याने मुण्डकश्रुतेः विरोधः, तत्र हि नदीसमुद्रदृष्टान्तपुरस्सरं त्यक्तनामरूपस्य साधकस्य समुद्र इव सरितांमनामरूपवतीनां विलयसिद्धान्तिततत्वात्, तथा च श्रुतिः—

**यथा नद्यः स्पन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरुपे विहाय ।**
**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ।।**

(मुण्ड०उ० ३/१/१)

इति चेदुच्यते आपाततोऽविचारितश्रुत्यक्षरत्वात् भवति सन्देहः, तत्र संसारकृत-नामरुपाद्विमुक्तिरुक्ता, आशयोऽयं यत् सागरमभिद्रवन्त्यो नद्यः स्थूलं नामरूपं विहाय मिलन्ति समुद्रं किन्तु मुख्यं रूपं जलमयं जलमिति नाम च न जहति, तथैव तत्वज्ञः मैत्रचैत्रादि नाम मनुष्यादिरूपं च जहाति किन्तु शेते । इत्यनेन जीवात्मा रूपम् न त्यजति इत्युक्तम्, नाम न जहाति इत्यनेन जीवसंज्ञाया अपि नित्यत्वमुक्तम् । उपपत्तिमाह— वै निश्चयेन, नाम भगवद्दास इति, जीव इति च अनन्तं नास्ति अन्तो विनाशो यस्य तथाभूतमत एव जटापुषा जीवसंज्ञा भवगत्कैङ्कर्यरूपमपि द्वयमेतत् न परिहृतम् । तथोक्तं श्रीमानसे—

**गीध देह तजि धरि हरि रूपा । भूषन बहु पट पीत अनूपा ।।**
**श्याम गात विशाल भुज चारी । अस्तुति करत नयन भरि वारी ।।**

(मानस ३/३२/१-२)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतद्रूपान्तरम्—

**विहाय वै गृध्रतनुं हरेः सः धृत्वा वपुः पीतपटं सुभूषम् ।**
**चतुर्भुजः श्यामतनुः सनीर नेत्रःस्तुवन्नास्त इलासुतेशम् ।।**

एवम् अनन्ताः सर्वे देवाः भगवतः सर्वे अवतारा इति भावः । तेन अनन्तेन भगवत्सेवकोपयोगिनाम्ना भगवदीयपरिकररूपेण च अनन्तं परमात्मानं जयति वशीकरोति ।

अथ पुरुषगतिं विवृणोति—

**याज्ञवल्क्येति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणाश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवी ँ शरीरमात्मौषधीर्लोमानि वनष्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं पुरुषो भवतीत्याहार सोम्य हस्तमार्त भागाऽवामेवैतस्य वेदिष्यावो न नावेतत् सज्जन इति । तौ होत्क्रम्य मन्त्रयांचक्राते तौ ह यदूचतुः कर्म हैव तदूचतुरथ यत्प्रशश ँ सतुः कर्म हैव तत्प्रशश ँ सतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ।।१३।।**

यत्त यस्मिन् काले अस्य मृतस्य उपरतस्य पुरुषस्य वाक् वणी अग्निं तद्दैवतं, प्राणः घ्राणशक्तिः वातं वायुदैवतम्, चक्षुः नेत्रशक्तिः आदित्यं सूर्यं स्वकारणम्, मनः चन्द्रं निजदैवतं श्रोत्रं कर्णशक्तिः, दिशः दिगभिमानी देवता शरीरे पृथिवीम्, आत्मा अहङ्कारः, आकाशं, लोमानि ओषधिः, केशाः वनस्पतीन् वृक्षान् , लोहितं रक्तं, रेतः शुक्रम् , अप्सु निधीयते । अप्सु इति सप्तम्यन्ताऽनुरोधेन अतः पूर्वत्र सर्वत्र सप्तम्यर्थे द्वितीया । तदा अयं पुरुषः क्व कुत्र भवति, एतस्य जीवात्मनः क्व स्थानमिति प्रश्ने याज्ञवल्क्यः प्राहः—हे आर्तभाग, सौम्य ! हस्तमाहर आनय देहि मह्यम्, आवामेव आर्तभागयाज्ञवल्क्यौ एतस्य वेदिष्यावः एकान्ते यास्यावः, एतत् सजने जनसमूहे न, अनन्तरं तौ मन्त्रयाञ्चक्राते, एकान्ते जीवगतिं विमृष्टवन्तौ, तौ निश्चत्य यत् ऊचतुः तत् कर्म एव प्रशशंसतुः, अर्थात् कर्मणः प्रशस्तिं कृतवन्तौ । पुण्येन कर्मणैव भगवद् भजनादिना पुण्यः भवति पुण्यलोकं साकेतं प्राप्य मोदते, पापेन पापकर्मणा पापः भवति पापीयसीं दशा प्राप्नोति । एवं याज्ञवल्क्याल्लब्धसकलप्रश्नोत्तरः जारत्कारव उपरराम, तूष्णीं बभूव ।।श्रीः।।

**इति वृहदारण्यकोपनिषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये द्वितीयमार्तभागब्राह्मणं सम्पूर्णम् ।**

**।। राघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। तृतीयब्राह्मणम् ।।

अथ परिक्षितविषये प्रश्नाः परिक्षीयन्ते पापानि येन सः परिक्षितोऽश्वमेघः, तस्मिन्भवाः तस्य इमे वा इति पारिक्षिताः ।

अश्वमेधो हि संपूर्णपाक्षयकरः अतएव स्मृतयोप्यामनन्ति—

**अश्वमेधसमं पुण्यं नास्ति क्वापि महीतले ।**
**भ्रूणहत्या समं पापं न किंचिदिहभूतले ।।**

ते अश्वमेधयाजिनः परिक्षिताः तेषां शरीरावसाने कुत्राधिष्ठानमिति प्रश्नः—

**अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेषु चरकाः पर्यव्रजाम ते यतञ्चलस्य काप्यस्य गृहानैम तस्यासीद्दुहिता गन्धर्वगृहीता तम्पृच्छाम कोऽसीति सोऽव्रवीत्सुधन्वाऽऽङ्गिरस इति तं यदा लोकानामन्तानपृच्छामाथैनमब्रूम क्व पारिक्षित अभवन्निति क्व पारिक्षिता अभवम् स त्वा पृच्छामि याज्ञवल्क्य क्व पारिक्षिता अभवन्निति ।।१।।**

अथ लह्यस्य पुत्रः लाह्यायनः तस्य गोत्रापत्यं लाह्यायनिः भुज्युः नाम्रा प्रसिद्धः, जनकसभायां समागतेषु ब्राह्मणेणु कश्चन, याज्ञवल्क्येति संबोध्य पप्रच्छ—गन्धर्वतः समवगतप्रश्नोत्तरोऽपि प्रतिवादिनं याज्ञवल्क्यं मूकीचिकीर्षुः समवतारयति घटनामिमाम् कश्मिचित् समये वयं मद्रेषु मद्रशब्दो देशवाची बहुवचनान्तः स्वभावात् तेषु, चरकाः चरन्ति अध्ययनार्थं भिक्षार्थं वा ये ते चरकाः पर्यटका इतिभावः पर्यव्रजाम परिव्रजितवन्तः । ननु परिपूर्वक वज्रधातोः गत्यर्थकतया लाह्यायनिरूपपरिव्रजधातूतात्तकर्तृवृत्तिव्यापार प्रयोज्यफलाश्रयत्वप्रकारकेच्छानिरूपितोद्देशताकत्वेन ईप्सिततमत्वात् कर्तुरीप्सिततमं कर्म इत्यनेन कर्मत्वात् कथं न द्वितीया ? इति चैन्न विवक्षाधीनानि कारकाणि भवन्ति इति नियमात् अत्र परिव्राजकानामुत्तरदेशसंयोगानुकूलव्यापाराश्रयत्वस्याविवक्षितत्वे तन्निष्ठौपश्लेषिकाधिकरणतायाः विवक्षावश्यकत्वेन तत्र सप्तमी । ते वयं कपिर्नाम ऋषिः तस्य गोत्रापत्यं पुमान् काप्यः तस्य, पतञ्चलनाम्नः कस्यचिद् ब्राह्मणस्य विचरन्तो वयं गृहानैम अगच्छाम । तस्य पतञ्चलस्य एका दुहिता अविवाहिता कन्या अभूत् । सा च गन्धर्वेण गृहीता आविष्टा । तां दृष्टवा वयं परिवार्य तं पृच्छाम् पृष्टवन्तः कः असि इकन्नामासि ? सोऽव्रवीत् गन्धर्व उददीतरत् यत् - अङ्गिरस गोत्रः सुधन्वा नामास्मि । तदा वयं तस्यामाविष्टं गन्धर्वं सत्यापयितुं लोकानामन्तगतिं पृच्छाम । तदैकं गोपनीयं प्रश्नमब्रुवं समुपातिष्ठम्—पारिक्षिताः अश्वमेध परिक्षीणपापविपाकाः क्वाभवन् कुत्रस्थाने प्रतिष्ठिता अभूवन् । हे याज्ञवल्क्य इममेव गन्धर्व प्रति कृतं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्माँल्लब्धोत्तरश्च त्वां प्रतिपृच्छामः-पारिक्षिताः क्व ? यदि त्वं दत्तगन्धर्वसदृशोत्तरो भविष्यसि तदा त्वां ब्रह्मिष्ठं मँन्स्यामहे इति प्रष्टुराशयः ।

ब्रह्मविदवरिष्ठतया समधिगतपरोक्षवादः याज्ञवल्क्यः उवाच - वै निश्चयेन सः कन्यायामाविष्टः गन्धर्वः इत्थमेव युष्मान् उवाच यत् - ते पारिक्षिता अश्वमेघपापक्षयं नयन्तस्तद्दिव्यं लोकनगच्छन् यत्र अश्वमेधयाजिनः वाजिमेधयजनशीलाः गच्छन्ति । तेत्र कुलयान्ति इति पृष्टः खगोलं सविस्तरं वर्णयति—

**स होवाचोवाच वै सोऽगच्छन्वै ते तद्यत्राश्वमेधयाजिनो गच्छन्तीति क्वन्वश्वमेधयाजिनो गच्छन्तीति द्वात्रिँ्शतं वै देवरथाह्न्यायान्वयं लोकस्तँ्समन्तं पृथिवी द्विस्तावत्पर्येति ताँ्समन्तं पृथिवी द्विस्तावत्समुद्रः पर्येति तद्यावतीक्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशस्तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत्तान्वायुरात्मनि धित्वा तत्रागमयद्यत्राश्वमेधयाजिनोऽभवन्नियेवमिव वै स वायुमेव प्रशशँ्स तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुजयुर्लाह्यायनिरूपरराम ।।२।।**

पूर्वार्धस्तु सम्बन्ध एव व्याख्यातः द्वात्रिंशतं द्ववधिकत्रिंशद्योजन परिमाणं देवस्य रथाः आदरार्थे बहुवचनं तान् रथान् , अह्नि दिने, तस्य सदृशोऽयं लोकः पृथिवी, तस्माद्ः द्विगुणिता तस्मात् पृथिवी भागात् समुद्रः द्विः द्विगुमित रूपेण पर्येति, ततः क्षुरस्य धारा इव मक्षिकायाः पत्रं पक्ष इव तावदन्तरेण अवकाशत्वात् य आकाशः तत्र इन्द्रः, सुपर्णो भूत्वा पक्षिरूपः अश्वमेधयाजिनः, वायवे आकाशात् वायवे पवनाय प्रायच्छत् समर्पयति । स वायुः तान् आत्मनि स्वस्वरूपे धृत्वा समधिकसूक्ष्मतया तत्र अगमयत् परमे व्योमन् यत्र अश्वमेधयाजिनः यान्ति । तस्माद् व्यष्टिः समष्टिः च उभयात्मको वायुरेव, अतो वाजिमेधयाजिनः प्रशशंसुः । एवं पारिक्षिताः द्वात्रिंशत्सहस्त्रयोजनं सूर्यरथमतिक्रम्य ततो द्विगुणतां पृथिवीमतिलङ्ध्य, ततोऽपि द्विगुणितं सागरं तीर्त्वा क्षीरसागराख्यं ततः उपरि क्षुरधार इव मक्षिकापक्ष इव यो वै अति सूक्ष्मौ हृदयाकाशमार्गः तस्माद्वायुना नीयमानाः निजस्वरूपे विभ्रताः निहिताः अश्वमेधयाजिसालोक्यं साकेतं प्रतिगम्यन्ते । एवं विद्वान् अपमृत्युं भगवद्विस्मरणपूर्वकमरणं जयति । इत्थं लब्धोत्तरः भुज्यु लाह्यायनिः उपरराम तूष्णीमगात् ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये तृतीयं भुज्युब्राह्मणं सम्पूर्णम् ।**

**।। श्री राघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। चतुर्थब्राह्मणम् ।

**चतुर्भिश्च चतुर्भिश्च चतुर्भिश्च चतुस्तनूम् ।**
**चतुर्थं चतुरात्माऽहं चतुर्थे राघवं श्रये ।।**

अथ चतुर्थे याज्ञवलक्योषस्तसंवादः, प्रस्तूयते यस्मिन् सर्वान्तरत्वेन प्रत्यगात्मनो निरूपणम् , साक्षात्सम्बन्धेन च ब्रह्मणोऽपरोक्षानुभूतिविशेष्य साक्षात्प्रतिपादनम् —

**अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्येति होवाच यत्साक्षादपरोक्षाद् ब्रह्मय आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानीति स त आत्मा सर्वान्तरो यो व्यानेन व्यानीति स त आत्मा सर्वान्तरो य उदानेनोदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ।।१।।**

अथोपरते भुज्यौ जनकराजसंसदि वर्तमानः उषस्तो नाम ब्राह्मणः प्राह—उषसं विवेकरूपं प्रातःकालम् यस्तनोति तथाभूतः पप्रच्छ प्रश्नविषयं कृतवान् याज्ञवलक्य इति सम्बोध्य उवाच प्रश्नाक्षराणि प्रतुष्टाव, हे याज्ञवल्क्य ! अद्याहं सर्वान्तरं प्रत्यगानं विजिज्ञासे, इति प्रश्नमवतारपति, यतः साक्षात् निरस्तसकलकुहकं दिग्देशकालाद्यवच्छिन्नम् अपरोक्षात् अपरोक्षम् अक्षिभ्यां परोभूतम् , परोक्ष इति **परोक्षेलिट्** (पा०अ० ३/२/११५) । इत्यनेन परोपपदात् अक्षिशब्दात् अच् प्रत्ययः टिलोपः परो इत्योकारश्च निपात्यते । प्रकृते हि साक्षात् अपरोक्षात् इत्युभयत्र पञ्चम्यन्तमव्ययम् । एवं साक्षादिति पदेन परमात्मनोऽव्यावहितत्वं सर्वकर्तृकत्वं निवारपति, अपरोक्षादित्यनेन दिग्देशकालाद्यवच्छिन्नत्वं निवारयति, इति प्राञ्चः । नव्यास्तु, साक्षादिति सगुणब्रह्मणो विशेषणम् अपरोक्षादिति निर्गुणब्रह्म विशेषणमिति प्राहुः । एवम् अक्षाणि इन्द्रियाणि तैः सह वर्तमान साक्षम् , तस्मात् साक्षात् क्रियाविशेषणमेवतत् । भक्तानां हि समक्षं सगुणब्रह्म हि सकलैरप्राकृतैः इन्द्रियैः तदुपलक्षितैः कोटिकोटिकन्दर्पदर्पदलनशीलै रवयवैः समेतं करुणानिकेतं प्रकटीभवति । एवम् अपरोक्षादिति निर्गुणब्रह्मणः सङ्कीर्तनं तथा हि-निर्लीनगुणकमपि साकेतनिवासि सर्वेषामवतारि नित्यमविकारि श्रीरामभिद्येयं ब्रह्म । अपरोक्षात् भक्तानां न परोक्षं, यद्वा परोक्षकालतः अतीतं रामावतारात् पूर्वमपि श्रीरामत्वेन तत् प्रसिद्धेः । अथवा साक्षादिति पदेन भगवन्मायाकर्तृकं व्यवधानं निवारयति, अपरोक्षात् इति पदेन भक्तनिष्ठं मायाकर्तृकावरणं निराकरोति ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं साक्षादिति पदं भगवत्कर्तृके भक्तदर्शने, अपरोक्षादिति पदं च भक्त कर्तृके भगवद्दर्शने योज्यम् । तथा च भगवान् भक्तान् साक्षात् पश्यति, भक्तश्चापि भगवान् परोक्षभिन्नतया प्रत्यक्षतो दृश्यते । ननु साक्षाच्छब्दस्य द्रष्टृविशेषणत्वे किं मानमिति चेत्, साक्षिपदनिष्पत्तौ **साक्षात् द्रष्टरि** (पा०अ० ५/२/९१) इति वदन् पाणिनिरेव । एवं साक्षात् पश्यतीति साक्षी इत्यनेन मायावादिप्रजल्पितः परमात्मनि निरवयवत्ववादोऽपि विषादमासादितः । न खलु निरवयवः साक्षात् द्रष्टुं प्रभवेत् , तथात्वाभावे तस्य साक्षित्वमपि न सिद्ध्येत् , साक्षात् शब्दस्य इन्द्रियै सह वर्तमानत्वरूपार्थस्तु प्रागेव व्याख्यातः, न च दृशेर्ज्ञानार्थत्वे साक्षादित्यस्य च व्यवधानशून्यतार्थत्वे साक्षीति शब्दस्य निर्व्यवधानं सर्वज्ञातृत्वरूपेऽर्थे समङ्गीकृते निरवयवत्वादः पुनरूच्छ्वासित इति वाच्यम्। साक्षादिति शब्दस्य पश्यतीति क्रियापदेन सह समभिहारात् दृशेः दर्शनाभिन्नार्थस्य विधात्राऽपि विधातुमशक्यत्वात् सब्दशक्तावेव तादृगर्थस्यासत्वात्तिलेभ्यस्तैलादिरिव तत्रासत्वे ततस्तदनुपलब्धेः । एवम् द्रष्टृशब्देन च विशेषणत्वेन साक्षात् परस्य समुपस्थितिफलवैयर्थ्याच्च । यद्वा अक्षाः विषयाः तै सह सततस्मृतिविषयीभूतैः सहवर्तमानः साक्षः विषयलम्पटो जीवः, तं साक्षं निजभजननिजपदपद्मप्रपत्तिवहिर्भूतम् अत्ति खादति इति साक्षात्। एवम् अपरोक्षम् अविद्या नपरोक्षार्थरूपवेदधर्मविश्वासकं नास्तिकमपरोक्षमअति इत्यपरोक्षात। अथवा साक्षं कार्यकारणभावतया प्रत्यक्षप्रमाणसाधकैरिन्द्रियैः सह वर्तमानमनुमानं साक्षम् तदत्ति इति साक्षात् , अनुमानप्रमाणागोचरम् । एवं परोक्षं तन्नास्ति यस्मिन् तत् अपरोक्षं, चार्वाकीयं प्रत्यक्षवादम् अत्ति खादति इत्यपरोक्षात्। तादृशं सगुणनिर्गुणं ब्रह्म साक्षात्परोक्षात्व्यवह्रियते । यद्वा साक्षात् शब्दः निर्व्यवधानदर्शनपरः, अपरोक्षात्पदञ्च सार्वकालिकावरणनिराशसम्भावनापरम् । तथा च साक्षात् वेदान्तेन प्रतिपाद्यमानम् , अपरोक्षात् प्रत्यक्षदर्शिनाम् ऋषीणां समूहात् तदपेक्ष्य वर्तमानं यद् ब्रह्म, यश्च आत्मा सर्वव्यापकपरमेश्वरः स एव, यश्च सर्वान्तरः सर्वेषाम् आन्तरं हिन्दूजागरणं तदस्यास्तीति सर्वान्तरः । सर्वेषामअन्तं विनाशं राति इति सर्वान्तरः । अथवा सर्वेषाम् अन्तरः अन्तरङ्ग निकटतमः, तम् आत्मानं परं ब्रह्म मे मह्यं व्याचक्ष्व विवृणु । इति शब्दोऽयं प्रश्नमर्यादासूचकः । इति पृष्टो याज्ञवल्क्यः प्राह—एषः अयमेव मया दृश्यमानः ते सेव्यतया त्वत्सम्बन्धिभूतः सर्वान्तरः आत्मा कतमः स, इति प्रश्ने शाखाचन्द्रन्यायेन श्रोत्राद्यवच्छिन्नव्याजेन निर्व्याजब्रह्मप्रतिपादनम् । अवच्छेदकानां निदर्शनम् । यः प्राणेन प्राणिति इत्यादि यश्चाभोक्ताऽपि, प्राणापानव्यानोदानसमानादिभिः, प्राणादिविषयान् अनुभवति, एष एव त्वत्सम्बन्धितभूत आत्मा सर्वान्तरः सर्वेषां प्रेमभाजनमित्युत्तरम् ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथात्मनोऽनिर्वचनीयतां साधयति—

**स होवाचोषतश्चाक्रायणो यथा विब्रूयादसौ गौरसावश्व इत्येवमेवैतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरः । न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारँ् शृणुया न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीयाः । एव त आत्मा सर्वान्तोरऽतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम ।।२।।**

एवं कथयति सति याज्ञवल्क्ये, चक्रस्य गोत्रापत्यं चाक्रायण उषस्तः पुनर्याज्ञवल्क्यं पप्रच्छ—यथा कोऽपि असौ गौः, असौ अजः इति सङ्केतग्राहम् विब्रूयात् तथैव एतद् ब्रह्म तटस्थालक्षणतया भवता इदं व्यपदिष्टं भवति सङ्केतेन निर्दिष्यमानं वर्तते, दर्श्यते न हि, तस्मात् यत् एव न किञ्चित् ततोऽन्यत्, यत् साक्षात् सर्वसाक्षी, अपरोक्षात् प्रत्यक्षं दृश्यते भक्त, सः सर्वान्तरात्मरूपेण व्याकर्तव्य इति प्रश्नः । याज्ञवल्क्यः प्राह-एष इत्याद्यतिसन्निकृष्टःत्वत्सम्बन्धिभतोऽयमात्मा कतमः, देहेन्द्रियमनोबुद्धिषु केनचित् स्वरूपेण प्रदर्शय ?

याज्ञवल्क्यः प्राह स्वरूपेण दर्शयितुमशक्यं, कथमिव ? प्राकृतैरिन्द्रियैस्तस्य ग्रहणासम्भवात् । अतः निषेधमुखेन प्राह—त्वं दृष्टेः द्रष्टारं साक्षित्वेन दर्शनेन्द्रियस्यापि दर्शकं न पश्ये न द्रष्टुं शक्नोषि । यद्वा दृष्टेः दोषबहुलेन प्राकृतचक्षुषा न द्रष्टुं शक्नोषि यथोक्तं श्रीगीतासु—

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ।।**

(गीता ११/८)

एवमन्यत्रापि षष्ठीतृतीयाभ्यां व्याख्यातव्यं, तथा हि — हे उषस्त ! श्रुतेः श्रोतारं कर्णेन्द्रिय करणश्रवणमसम्भवम् । एवं श्रुतेः श्रुत्या श्रोतारं मुख्यतया श्रवणकर्तारं श्रुत्या प्राकृतेन श्रवणेन न शृणुयाः न श्रोतुं शक्नोषि । एवम् मतेरपि मननकर्तारं अथवा मत्या प्राकृतबुद्ध्या मतेर्मनसा वा न मन्वीथाः नैव मन्तुं शक्नोषि । विज्ञातेः तस्या अपि विज्ञातारं तथा न विजानीयाः न विज्ञातुं क्षमसे, तस्मात् निदर्शयामि तेन दर्शयामि, एष ते सर्वान्तरः आत्मा विशिष्टाद्वैतरूपः सर्वान्तरः, अतः अस्मात् अन्यत् आर्तम् व्याकुलम् , अथवा आर्तम् याचकम् **अर्दि याच्ञायाम्** इत्यस्मात् दकारलोपेन निष्ठान्तरूपमेत्, **शेरद्घनं नार्दति चातकोऽपि** इति रघुकाव्योक्तेश्च परमात्मनोऽन्यत् आर्तं याचकं केवलं भगवानेव दाता । यद्वा ऋतं परमात्मा तस्मिन् भवं आर्तत् । यत्तु

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मायावादिभः एतदेवानार्तम् अविनाशि इतोऽन्यन्मिथ्या इति वान्तं तत् श्रुत्यक्षरविरुद्धम् आर्तशब्दस्य क्वचिदपि तन्त्रे मिथ्यार्थत्वेनाप्रसिद्धेः । एवम्—

**दाता सदैको रघुवंशकेतु र्भूतानुकम्पि द्विषतां प्रकम्पी ।**
**ऋतं परब्रह्म कृपालु रामो नित्यं बृहत्सत्यमतोऽन्यदार्तम् ।**

एवं प्राप्तप्रश्नोत्तरः चाक्रायण उषस्त उपरराम तूष्णीं बभूव ।।श्रीः।।

**इति बृहदाख्यकोपनिषदि तृतीयध्याये श्रीराघवकृपाभाष्ये चतुर्थब्राह्मणं सम्पूर्णम् ।**
**।। इति राघवः शन्तनोतु ।।**

## ।। पञ्चमब्राह्मणम् ।।

## मंगलाचरणम्

**अथ समाहतचित्तमनोमलाः**
**गतकला यतयो यमुपासते ।**
**तमिह मैथिलिकण्ठविभूषणं**
**रघुवरं कलये किल पञ्चमे ।।**

**अथ हैनं कौषतकेयः प्रपच्छ याज्ञवल्कयेति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेत्येष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य सर्वान्तरो योऽशयनायापिपासे शोकं मोहं जरां मृत्युमत्येति । एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणोभे ह्येते एषणे एव भवतस्तस्माद् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याभ मुनिरमौनं च मौनं च निर्विद्याऽथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवातोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ।।१।।**

अथ कहोलः ब्राह्मणः याज्ञवल्क्यं पृच्छति—याज्ञवल्क्य । साक्षात् सर्वसाक्षिकं, ननु ब्रह्मणः साक्षित्वे किं मानम् ? **सर्वलोकस्य साक्षीति श्रुतिः, गतिर्भर्त्ता प्रभु साक्षी** (गीता–८/१८) तमात्मानं मे व्याचक्ष्वेति । उत्तरमाह—अशनाया बुभुक्षा,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पिपासा जलं पातुमिच्छा, इमे द्वे यः अत्येति एवं शोकमोहजरामृत्यूनपि अतीतः, स एव आत्मा । एतमात्मानं निजसेव्यत्वेन सर्वरूपेण विदित्वा पुत्रवित्तलोकेति त्रिप्रकारिकामेषणां विहाय व्युत्थाय परिव्रज्य अथान्तरं भिक्षाचर्यं वैदिक सिद्धान्तानुसारं भिक्षाचरणं कुर्वन् एवं सकलप्रपञ्चमुक्तः ब्राह्मणःपाण्डित्यं निर्विद्य अभिमानतया त्यत्त्वा बाल्येन बालभावेन तिष्ठासेत् । बालवत् सम्मानमानादिवर्जितो भवेत् । पश्चाद्बाल्यमपि निर्विद्य मौनी स्यात् । अथ अमौनं मौनं त्यक्त्वा ब्राह्मणः केन स्यात् ? येन केनाप्याश्रमधर्मसम्बन्धिना स्यात् । एवम् ईदृक् परमात्मा अत अन्यत् सर्वमार्तं विपद्ग्रस्तम् एवम् लब्धोत्तरः कहोलः विरराम तृष्णीमगात् ।।श्रीः।।

**इति बृहदारण्यकषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये कहोलनाम पञ्चमब्राह्मणं सम्पूर्णम् ।**
**।। इति राघवः शन्तनोतु ।।**

## ।। षष्ठब्राह्मणम् ।।

**अथ चलाललिताम्बरधारिणं**
**सुभुजदूषणरावणमारणम् ।**
**भरतभावनया हृदि भावितं**
**रघुवरं किल षष्ठ उपैमि तम् ।।**

**अथहैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्चेति वायौ गार्गीति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्चेति गन्धर्वलोकेषु गार्गीति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्चेत्यादित्यलोकेषु गार्गीति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्चेति चन्द्रलोकेषु गार्गीति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्चेति नक्षत्रलोकेषु गार्गीति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्चेति देवलोकेषु गार्गीति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्चेतीन्द्रलोकेषु गार्गीति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेषु गार्गीति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेषु गार्गीति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्चेति सहोवाच गार्गिमाऽतिप्राक्षीर्मा ते मूर्धा व्यपप्तदनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गिमाऽतिप्राक्षीरिति ततो ह गार्गी वाचक्नव्युपरराम ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाचं खनतीति वाचक्नुः ऋषिः, तस्य गोत्रापत्यं पुत्री वाचक्नवी गार्गी ओतप्रोतत्वविषयं पृच्छति—

**जले वातोऽनिलोऽन्तरिक्षे गन्धर्वे च नभस्तसलम् ।**
**स सूर्ये स विधौ सोऽपि नक्षत्रे सोऽपि दैवते ।।**
**स वासवे चैव लोके प्राजापत्ये तथैव सः ।**
**ब्रह्मलोके सोऽपि चेत्थं ओतप्रोतपरम्परा ।।**
**अतोऽन्यत् प्रष्टुकामा सा मातिप्राक्षी रितिदृतम् ।**
**याज्ञवल्क्येन सा क्षिप्ता गार्गी वै ब्रह्मवादिनी ।।**

**इति बृहदारण्यकोपनिषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये गार्गीनाम षष्ठब्राह्मणं सम्पूर्णम् ।**

**।। इति राघवः शन्तनोतु ।।**

## ।। अथ सप्तमब्राह्मणम् ।।

**नीलनीलाम्बुजश्यामलंकोमलं मैथिलीमण्डनं चैनसां खण्डनम् ।**
**राममाभामयं ब्रह्म मायाहरं, भूभुजां सत्तमं सप्तमे सम्भजे ।।**

इदानीं याज्ञवल्क्यारूणिसंवादव्याजेन सूत्रात्मनः सविस्तरं विवेचनं प्रस्तौति—

**अथ हैनमुद्दालक आरूणिः पप्रच्छ याज्ञवल्क्येति होवाच मद्रेष्ववसाम पतञ्चलस्य काप्यस्य गृहेषु यज्ञमधीयानास्तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति सोऽब्रवीत् कबन्ध आर्थर्वण इति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिका ँ्श्च वेत्थ नु त्वं काप्य तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानिं संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्चलः काप्यो नाहं तद् भगवन्वेदेति सोऽब्रवीत्पतञ्चलं काप्यं याज्ञिका ँ्श्च वेत्थ नु त्वं काप्य तमन्तर्यामिणं इमं च लोकं परं च लोक ँ् सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽबवीत् पतञ्चलः काप्यो नाहं तं भगवन् वेदेति सोऽब्रवीत् पतञ्चलं काप्यं यज्ञिका ँ् श्च यो वै तत्काप्य सूत्रं विद्यात्तं चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित्सदेववित्स वेदवित्स भूतवित्स आत्मवित्स सर्वविदिति तेभ्योऽब्रवीत्तदहं वेद तच्चेत्वं याज्ञवल्क्य सूत्रमविद्वा ँ् स्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धाते**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विपतिष्यतीति वेद वा अहं गौतम तत्सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चित्ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ।।१।।**

अथ एनं याज्ञवल्क्यमारूणिः अरूणस्यापत्यं पुमान् अरूणपुत्रः उद्दालकः याज्ञवल्कय इति सम्बोध्य पप्रच्छ– मद्रेषु साम्प्रतं (चेन्नइ) मद्रास इति प्रसिद्धेषु यज्ञं यज्ञसम्बन्धिनीं प्रक्रियामधीयानाः समधिगच्छन्तः आवसाम निवासं कृतवन्तः वयम् । तत्र काप्यस्य कपि गोत्रस्य पतञ्चलस्य गृहेषु तिष्ठन्तः, तस्य ब्राह्मणस्य भार्या या गन्धर्वेण गृहीता तां पतञ्चलपत्न्यामाविष्टं यक्षं वयमधीयानाः यज्ञक्रियां–कोऽसि किं जातीयोऽसि ? इत्यपृच्छाम पृष्टवन्त आस्म । अस्मासु पृष्टवत्सु तस्यामाविष्टो गन्धर्व उवाच–अहमथर्वणः अपत्यं पुमानाथर्वणो नामतः कबन्धोऽस्मि । अत्रालङ्कारिकरीतया कश्चनापरोऽप्यर्थोऽवगम्यते । गन्धर्वविशो भार्यायामिति प्रघट्टकेन प्रतीयते यदनुषितगुरुकुलानधीतशास्त्रा, चात एव गृहकर्मण्येव व्यासक्तबुद्धिरासीत् सा, तस्यां गन्धर्व इव ब्रह्मज्ञं मन्यमानस्य कस्यचिदावेशो बभूव । आपाततः समधिगतवेदार्थोऽपिमुमुक्षायामप्रवृत्तत्वाद् ग्राम्यगीतादिषुकृतव्यसनत्वाच्च श्रुत्या तस्मिन् गन्धर्वत्वप्रयोगः कृतः । गन्धर्वस्तावत् भोगबहुलः उपदेययोनिविशेषः । यो विषयसुखलालसापरः तत्तद्देवपरितोषणपरो नृत्यगीतादिभिः, एवमलब्धनिर्वेदो विषयेषु, कर्मकाण्डादिप्रक्रियाभिः सामगानादिभिश्च तोषयति तत्तद्देवान्, अन्ततस्तु कामलिप्सुरनवाप्तपरमात्मपदपद्मपरागानुरागतया समवशिष्टप्राक्तनजन्मकर्मविपाक—कुवासनः शरीरत्यागेऽपि मुक्तं मन्यमानोऽप्यमुक्तः कलत्राद्याशक्ततया बुभुक्षुस्तस्यामेवाविष्टः, अत एवात्मानं कबन्धं मन्यते । कबन्धो नाम शिरोविहीनः शरीरभागः श्रुतिशिरो वेदान्तः तत्प्रतिपाद्यो भगवाँश्च । अतएव समामनन्ति गोस्वामितुलसीदासमहाराजाः—

**क्षीरसिन्धु गवने मुनिनाथा । जह रह श्रीनिवास श्रुतिमाथा ।**
(मा० १-१२८-४)

रूपान्तरम्—

**नारदो मुनिनाथस्तु जगाम क्षीरसागरम् ।**
**यस्मिन् वसति श्रुतिशिरः श्रीनिवासः सदा हरिः ।।**

एवं श्रुतिशिरोभूतं ब्रह्मज्ञानं वर्जितवेदार्थस्तदयुक्तश्च जीवः कबन्ध इव । व्युत्पत्यर्थश्च कं ब्रह्मसुखं वा बध्नाति संसारकर्मभिर्न मुमुक्षुर्भवति यस्तथाभूतः इति श्रुत्यर्थोऽत्र मे प्रतिभाति । पुनः सः कपिगोत्रोत्पन्नं पतञ्चलं याज्ञिकान् यज्ञप्रतिपादककर्मकाण्डमधीयानान् अस्मान् आरूणिरब्रवीतृ समपृच्छत्–हे काप्य ! नु किं तत्सूत्रं ब्राह्मणः धारणाशक्तिविशेषं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेत्थ जानासि, येनायं लोकः दृश्यमानसंसारः परश्च स्वर्गादिः चकारेण तल्लोकवासिनः सर्वाणि भूतानि चराचराणि सन्दृब्धानि निबद्धानि सूत्रे स्रज इव । एवं कृतप्रश्नः पतञ्चलः प्रत्यब्रवीत्–भगवन् पूज्यवर ! अहं तत्सूत्रं न वेद्मि न जानामि कूटधार्मिगृहस्थत्वात् कर्मभिर्बद्धो बन्धननिदानं कथं जानीयाम् । भूयो गन्धर्वः द्वितीयं जिज्ञास्यमपृच्छत्–हे कपिगोत्र पतञ्चल ! त्वं याज्ञिकैः सह किं वेत्थ, किं जानासि तमन्तर्यामिणम् ? अन्तस्थितः यमयती तच्छीलः यः हृदये स्थित्वा समस्त जीवन् नियमयति सोऽन्तर्यामी अत्र अन्तरुपपदात् यम्धातोः **सुप्यजातौ णिनिस्ताच्छील्ये** इत्यनेन णिनिः आदिवृद्धिः पुनः कर्मणि अट् कुप्वाङ्नुम्व्यवायेऽपि इत्यनेन णत्वम् अन्तर्यामणम् । यः इमं लोकं परलोकं सर्वाणि भूतानि चराचराणि, अन्तरः सर्वेषां हृदयस्थितः नियमयति तत्तत्कर्मसु नियुङ्क्ते, इति पृष्टः । अस्मासु मौनीभूतेषु याज्ञिकेषु पूर्ववत् पतञ्चलः प्रतिवचनं दत्तवान्–नाहं वेद । अथ गन्धर्वः पतञ्चलमस्मान् याज्ञिकांश्च अब्रवीत्, मुख्यतः अस्मत् कुलपतित्वेन पतञ्चलमेव नामग्राहं सम्बोध्य–हे काप्य ! यः कश्चन ब्रह्मिष्ठः, पूर्वं मया पृष्टं सकलजगत् सन्दृब्धण हेतुं सूत्रं निखिलजगन्नियन्तारं तमन्तर्यामिणं विद्यात् स एव ब्रह्मवित् ब्रह्मज्ञो ब्रह्मलब्धा च स एव लोकदेवभूतदिसर्वात्मनां वित् विन्दको वे त्ताच । सः तेभ्यः पतञ्चलसहितेभ्यः मत्रभुखेम्यो याज्ञिकेभ्यः अब्रवीत्, तस्मादेवाहमपि सूत्रमन्तर्यामिणं च जानामि । हे याज्ञवल्कय ! त्वं चेत् यदि तत्सूत्रं तं च अन्तर्यामिणं अविद्वान् वेत्तीति विद्वान् न वेत्तीति अविद्वान् अजानन्, ब्रह्मगवीः ब्रह्मणाम् ब्राह्मणानां गावः इति ब्रह्मगव्यः **गोरतद्धितलुकि** इत्यनेन समस्तगोशब्दात् टच् प्रत्यये अनुबन्धकार्ये टित्वान्ङीपि ब्रह्मगवी, एतस्यैव शसि ब्रह्मगवीः, उदजसे नयसि चेत्, तर्हि ते मूर्धा शिरः विपतिष्यति विकृतं सत् भूमिसाद् भविष्यति, इत्याक्षेपप्रकारः । याज्ञवल्क्यः प्रत्युत्तरितवान्–हे गौतम ! तद् गोत्रज आरूणे वा, निश्चयेन अहं त्वया गन्धर्वात् ज्ञातं स्त्रीमुखात् तत् सूत्रं तमन्तर्यामिणं च अहं याज्ञवल्क्यः वा निश्चयेन वेद जानामि, तस्माद् गाः नयामि इति विज्ञाप्यमानः याज्ञवल्क्य वाक्ये शंशयानश्च उद्दालकः समाक्षिपत्–यः कश्चिदपि ब्रह्मानभिज्ञः वेद जानमि सूत्रमन्तर्यामिणमिदमित्याकारकं व्यलीकं वचनमपि ब्रूयात् वक्तुं शक्नोति । वचने का दरिद्रता अतः यथा त्वं वेत्थ तथा तेन प्रकारेण सूत्रमन्तर्यामिणं च बूहि व्याख्याहि इति, इति शब्दः आरूणिवाक्यानुवादं सूचयति ॥ श्रीः॥

अथ सूत्रं निरूप्यते—

**स होवाच वायुर्वै गौतम तत्सूत्रं वायुना वे गौतम सूत्रेणायं च लोकः परश्चलोक. सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम पुरूषं**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**प्रेतमाहुर्व्यस्त्र्ँ सिषतास्याङ्गानीति वायुना हि गौतम सूत्रेण संदृब्धानि भवन्तीत्येवमेवैतद्याज्ञवल्क्यान्तर्यामिणं ब्रूहीति ।।२।।**

याज्ञवल्क्यः निश्चित्य उवाच–वै शब्दः एवार्थः, हे गौतम् ! वायुरेव तत्सूत्रं भगवदीयजीवसमाहरणरूपशक्तिविशेषावच्छिन्नदेवता येन लोकंपरलोकसहितानि चराचराणि भूतानि सन्दृब्धानि ससन्दर्भं सूत्रितानि भवन्ति । युक्तिमाह—अत एव वायुरूपसूत्राभावे प्रेतं मृतं पुरूषं जना आहुः कथयन्ति, अस्य अङ्गानि व्यस्त्रंसिषत विषकलितानि जातानि । न कोऽपि जीवन्तं कथयति अस्य अङ्गानि विषस्त्रंषितानि तत्र वायुरूपसूत्रस्य सत्वात् तस्मात् गौतम ! सम्पूर्णानि भूतानि सूत्ररूपेण वायुनैव सन्दृब्धानि, तस्माद् वायुनाम्ना व्यह्वियमाणो रूपरहितस्पर्शवत्वाभिन्नशक्त्यावच्छिन्नो भगवानेव सूत्रम् । इत्युत्तरेण सन्तुष्ट उद्दालक एवमेवैतत् इति वाक्येन याज्ञवल्क्योत्तरं समर्थयति, एतत् त्वदुक्तमेव यथा मया गन्धर्वात् ज्ञातं तथैव भवताप्युक्तम् । अथ याज्ञवल्क्य अन्तर्यामिणं ब्रूहि ।।श्रीः।।

साम्प्रतमन्तर्यामी निरूप्यते—

**यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।३।।**

भगवतो हि पञ्चधाविग्रहाः परिकल्पिताः परो, विभवः, व्यूहः, अन्तर्यामी अर्चा इति । तत्र परो नाम समधिश्रितासमोर्ध्वपरमानन्ददिव्यकल्याणगुणगण सरस सरसिज समुच्छलितनिसर्गनिर्मलभक्ति परिमलसमाकृष्टपरमोत्कृष्टभावुकभक्तभ्रमरनिकरारस्यमानः प्रेममकरन्दगोविन्दयक्षकिन्नरसुरनरमुनिहनुमदादिपरिकरपरिचर्यमाणः श्रीमच्चरणारविन्दश्रीसीतासमलङ्कृतवामभागभूरिभाग चमत्कृतचपलाचाकचिक्यचारमीकररोचिष्णु सिंहासने विराजमानः साकेत बिहारी सर्वावतारावतारी भूभारहारी परब्रह्मपरमेश्वरः श्रीरामहरिरेव विभवः, नृसिंहवामनादि भगवदवतारविशेषाः व्यूहः, वासुदेवसङ्कर्षणप्रद्युम्नानिरूद्धाः चित्ताहंकार बुद्धिस्वामिनः अर्चावताराः, साम्प्रतं श्रीवैष्णवाद्यैः पूज्यमानाः शिशुराघवबाल गोपालश्रीरामश्रीकृष्णश्रीमन्नारायणादिप्रतिमाः अन्तर्यामी, समस्तप्राणिनां अन्तःस्थितो नियम सर्वभूतानि समनुपदमेव व्याख्यायमानः अन्तःस्थितो यमयति इति तच्छीलः इति तस्य व्युत्पत्तिः । य परमातमा पृथिव्यां तिष्ठन् अत्र तिलेषु तैलिमितिवत् अभिव्यापकाधारे सप्तमी । पृथिवीमभिव्याप्य तिष्ठन् पृथिव्या अन्तरः तस्या अति समीपः जडप्रायत्वात् यं निकटस्थमपि पृथिवी न वेद न जानाति यस्य च पृथिवी शरीरं इत्यनेन निरवयवत्ववादो निराकृतः । तथा चिदचितोः परमात्मनः शरीरत्वम्, पृथिव्येव यस्य चेष्टाश्रयः इति भावः यश्च अन्तरः शरीरीव शरीरे पृथिवीं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यमयति नियमयति गन्धान्नपृथक्करोति एषः ते तव स्वामिभूतः आत्मा परमात्मैव अन्तर्यामी अमृतः मृतभिन्नः ।।श्रीः।।

अथ जले

**योऽप्सु तिष्ठन्नद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयत्येष त आत्मान्तर्यामयमृतः ।।४।।**

अप्सु जले, अद्भ्यः जलात् अन्तरः अन्तरङ्गसारः, आपः जलानि यं न विदुः तिरोहितचैतन्यरूपजलत्वावच्छेदात् तदभिमानवत्वाच्च परिच्छिन्नज्ञातृशक्तित्वाच्च स्थानानुकूलं तं पदार्थमेव स्वेच्छया शरीरत्वेन स्वीकरोति । अत आह—यमयतीपैति अन्तरः सन् अपः जलानि यमयति, समुद्रनियन्त्रित्वं अन्तर्यामिणः श्रीरामस्य संघटते ।।श्रीः।।

अथाग्नावन्तर्यामित्वं तिरूपयति—

**योऽग्नौ तिष्ठनग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरोयमयत्येष त आत्मान्तर्याम्यमृतः ।।५।।**

एवमेव अग्नौ अग्निमभिव्याप्य तिष्ठन् श्रीसीतारूपेण अग्नेरन्तरः तस्मात् विलक्षणः अत एव सीताया अग्निप्रवेशादन्तर्यामित्वं सङ्गच्छते यथोक्तं श्रीमानसे—

**सुनहु प्रिया व्रत रूचिर सुशीला । मै कछु करब ललित नर लीला ।।**
**तुम पावकमह करहु निवासा । जब लगि करहुँ निसाचर नासा ।।**
**जबहिं राम सब कहा बखानी । प्रभुपद धरि हिय अनल समानी ।।**

(मा०-३-२४-१,२,३)

रूपान्तरम्—

**श‍ृणु प्रिये व्रतरूचिरे सुशीलके करोमि वै ललितमुनष्यचेष्टितम् ।**
**कुरुष्व भो वसतिमथाग्निमाश्रिता तनोम्यहं दनुजवधञ्च यावता ।।**
**यदैव रामः सकलं निजेहित निवेदयामास विदेहनन्दिनीम् ।**
**तदैव सीता प्रभुपादपङ्कज निधाय चित्ते ज्वलनं विवेश सा ।।**

अग्नि नियामकत्वं लङ्कादहनप्रसङ्गे हनुमता कृते श्रीसीता प्रार्थने द्रष्टव्यम् यथोक्तं श्रीबाल्मीकीयरामायणे —

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ।**
**यदि वा त्वेकपत्नीत्वं शीतो भव हनूमतः ।।**

**दह्यमाने च लांगूले चिन्तयामास बानरः ।**
**प्रदीप्तोऽग्निरयं कस्मानन मां दहति सर्वतः ।।**

**सीतायाश्चानृशंस्येन तेजसा राघवस्य च ।**
**पितुश्च मम सख्येन न मो दहति पावकः ।।**

(बा. रा. ५/५३/२८,३४,३८)

अथान्तरिक्षेऽन्तर्यामित्वं निरूपयति —

**योऽन्तरिक्षे तिष्ठन्नन्तरिक्ष दन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षँ शरीरं योऽन्तरिक्षमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।६।।**

अन्तर्गतानि ऋक्षाणि नक्षत्राणि यस्य तदन्तरिक्षम् , अत्र **व्यत्ययो बहुलम्** इत्यनेन रेफस्य लोपः । एवं यः अन्तरिक्षे तिष्ठन् तस्माद् विलक्षणः तच्छरीरः तदन्तरस्तं मयमपति, स एव तवापि व्यापकीभूतः मरणवर्जितपरमात्मा । अन्तर्यामीत्यर्थः ।।श्रीः।।

अथ वायावन्तर्यामित्वं निरूपयति —

**यो वायौ तिष्ठन् वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।७।।**

वाति सर्वत्र गच्छति सुरभिमसुरभिञ्च सूचयति यस्तथाभूतः वायुस्तस्मिन् तिष्ठन् ततोऽपि विशेषः, तदीय शरीरावच्छिन्नः तत् समीपगः तं यमयति यस्स एव त्वदात्मभूतोऽन्तर्यामी । इदं तृणावर्तवध प्रसङ्गे भगवति श्रीकृष्णे द्रष्टव्यम् ।।श्रीः।।

अथ दिव्यन्तर्यामित्वं प्रतिपादयति —

**यो दिवि तिष्ठन्दिवोऽन्तरो यं द्यौर्न देव यस्य द्यौः शरीरं यो दिवमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।८।।**

दीव्यति प्रकाशते या सा द्यौः स्वरादिसत्यपर्यन्तः पञ्चधाविभक्तो देवलोकः तस्यां तिष्ठन् ततोऽपि विशिष्टः तद्वत् सूक्ष्मशरीरः तं समीपस्थः सन्नियमयन् त्वदात्मभूतो भजतेऽन्तर्यामित्वम् । इदं श्रीरामायणे मारीचक्षेपणादौ श्रीभागवते च व्योमासुरादिवधादौ श्रीरामकृष्णयोरन्तर्यामित्वं स्पष्टमेव ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथादित्येऽन्तर्यामित्वं निरूपयति —

**य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।९।।**

आदित्यः सूर्यः तस्मिन् तिष्ठन् ततों ? पि विलक्षणः **सूर्यस्यापि भवेत् सूर्य** इति स्मृतेः, एवं परिच्छिन्नत्वात् यं सूर्यनारायणोऽपि न वेद सः सूर्यशरीरः सूर्यनियामकः त्वदात्मैव अनर्तामीत्यर्थः ।।श्रीः।। यथोक्तं श्री रामस्तवराजे —

**सूर्य मण्डल मध्यस्थं रामं सीता समन्वितम् ।**

(रामस्तवराज–५०)

अथ दिक्ष्वन्तर्यामित्वं निरूपयति —

**यो दिक्षु तिष्ठन्दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१०।।**

दिक्षु पूर्वादिषु तत्र निर्लेपतया तिष्ठन् ताभ्योऽपि विशिष्टः यं ताः न विद्युर्जडत्वात् स एव दिक्छरीरं दिशां नियन्ता अन्तर्यामी ।।श्रीः।।

**यश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकँ शरीरं यश्चन्द्रतारकमन्तरो यमयत्येष स आत्मान्तर्याम्यमृतः ।।११।।**

चन्द्रस्य तारकाणां च समाहारः इति चन्द्रतारकं नक्षत्रमण्डलं तेजोऽवच्छिन्नत्वेन तदपि यं न वेद शेषं पूर्ववत् ।।श्रीः।।

अथाकाशेऽन्तर्यामित्वं प्रतिपादयति —

**य आकाशे तिष्ठन्नाकाशादन्तरो यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१२।।**

नन्वन्तरिक्षं तु व्याख्यातं तर्हि भूय आकाश व्याख्याने पुनरूक्ति दोषः कथं न ? इति चेच्छृणं अन्तरिक्षं नभस्तलम् आकाशो हृदयाकाशः इति विषयभेदान्न पुनरूक्तिदोषः, शेषं पूर्ववत् ।।श्रीः।।

अथ तमस्यान्तर्यामित्वं निरूपयति —

**यस्तमसि तिष्ठँ स्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१३।।**

तमसि अन्धकारे अत्र तमसा योगमायैव विवक्षिता ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ तेजस्यन्तर्यामित्वं निरूपयति —

**यस्तेजसि तिष्ठँ स्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजसोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१४।।**

तेजसि महसि तिष्ठन् तदन्तरः, यं तेजोऽपि न जानाति, शेषं पूर्ववत् । अत्र तेज:शब्दो विज्ञानपरः ।।श्रीः।।

अथ भूतेष्वन्तर्यामित्वं निरूपयति —

**यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यँ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतमथाध्यात्मम् ।।१५।।**

स एव भूतेषु भूतानि अभिव्याप्य तिष्ठन् ततो विलक्षणतया **भूतानां भूत सत्तमः** इत्युक्तेः सर्वभूतनियन्ता सोऽन्तर्यामी इत्यधिभूतम् भूतान्यधिकृत्यव्याख्यातम् । अथाध्यात्मं व्याख्यायते ।।

इदानीमात्मानि वर्तमानमन्तर्यामित्वं विभाव्यतेऽष्टाभिर्मन्त्रैः । आत्मनि इदम् अध्यात्मम्, **अव्ययं विभक्ति समीपसमृद्धि वृद्ध्यर्थाभावात्ययासम्प्रतिशब्द प्रादुर्भाव पश्चाद्यथानुपूर्व्य यौगपद्य सम्पत्तिसादृश्य साकल्यान्त वचनेषु** इतिसूत्रेण समासः अध्यात्मेद्येश्च इत्यनेन टच् प्रत्ययः नस्तद्धिते इत्यनेन टिलोपः इत्यध्यात्मम् । तस्य व्याख्यानार्थं पम्प्रति प्राणादिष्यन्तर्यामित्वम् एकैकं सविस्तरं श्रुत्या निरूपयते । पूर्वं पृथिवीमारभ्य भूतपर्यन्तं व्याख्यातमधिभूततया इत्यवतरणिका —

**यः प्राणे तिष्ठन्प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१६।।**

प्रकर्षेणाणीति प्राणः घ्राणरूपः यस्तत्रतिष्ठन् तस्माद् विलक्षणस्तेनाज्ञातस्तच्छरी-रस्तत्समीपस्तन्नियमयति एषोऽतिसन्निकृष्टस्त्वदभिन्नात्मसम्बन्धतया मरणधर्ममतीतमन्तर्यामी ।

अथवाच्यन्तर्यामित्वं निरूप्यते —

**यो वाचि तिष्ठन्वाचोऽन्तरो यं वाङ् न वेद यस्य वाक्शरीरं यो वाचमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१७।।**

वाचमभिव्याप्त अनतरः वाचिस्थितोऽपि वाग्दोषैरस्पृष्टतया ततोऽन्तरत्वमितिभावः यं वाक्जडत्वान्न वेद शेषं पूर्ववत् ।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ चक्षुष्यन्तर्यामित्वं निरूप्यते —

**यश्चक्षुषि तिष्ठँश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१८।।**

चष्टे पश्यति सर्वं येन तच्चक्षुः इन्द्रियाभिमानि, परिच्छिन्नतया यं चक्षुर्न वेद शेषं पूर्ववत् ।।श्रीः।।

अथ श्रौत्रमन्तर्यामित्वं निरूपयति —

**यः श्रोत्रे तिष्ठञ्छ्रोत्रादन्तरो यँ श्रोत्रं न वेद यस्य श्रोत्रँ शरीरं यः श्रोत्रमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।१९।।**

श्रूयते समाकर्ण्यते येन तच्छ्रोत्रं तत्रापि तिष्ठन् ततो विलक्षणः तत्रत्यदोषैरलिप्यत्वात् श्रोत्रमन्तरो यमयति शब्दतो व्यतिरिक्तग्रहणान्नियमयति । समानमन्यत् ।।श्रीः।।

अथ मानसमन्तर्यामित्वम् —

**यो मनसि तष्ठन्मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।२०।।**

मनसि ततोऽपि सूक्ष्माकारः तदुपश्लिष्य तदभिव्याप्य च, मनः संकल्पावच्छिन्नं सत् यं निरस्तनिखिलावच्देदकं न वेद शेषं समानम् ।।श्रीः।।

अथ त्वाचमन्तर्यामित्वम् —

**यस्त्वचि तिष्ठँस्त्वचोऽन्तरो यं त्वङ् न वेद यस्य त्वक्शरीरं यस्त्वचमन्तरो यमयत्येष त आत्मान्तर्याम्यामृतः ।।२१।।**

त्वचमभिव्याप्य शेषं सुगमम् ।।श्रीः।।

अथ वैज्ञानमन्तर्यामित्वं —

**यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानँ शरीरं यो विज्ञानमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ।।२२।।**

विविच्य जानाति येन तद्विज्ञानं बुद्धिः विपूर्वकात् ज्ञाधातोः **करणाधिकरणयोश्च** इति सूत्रेण करणे ल्युट्, यद्वा विजानाति इति विज्ञानं प्रत्यागात्मा, अत एव शतपथब्राह्मणे य आत्मनि तिष्ठन् इत्यादि सङ्गच्छते ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत्र तिष्ठन् ततोऽपि विलक्षणः यं विज्ञानं स्वयं न वेद सर्वस्य विज्ञातृत्वात्। स एव विज्ञानशरीरः सन् विज्ञानं यमयति एवं गुणविशिष्टः ते तव शाश्वतसंबन्धी आत्मा अमृतः अन्तर्यामी ।।श्रीः।।

इदानीं रैतमन्तर्यामित्वम् —

**यो रेतसि तिष्ठन् रेतसोऽन्तरो यँ तो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयत्येष त आत्मान्तर्याम्यमृतोऽदृष्टो द्रष्टाऽश्रुतः श्रोतामतो मन्ताविज्ञातो विज्ञाता नन्यतोऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञातैष त आत्मान्तयर्याम्यमृतोऽतोऽन्यदार्तं ततो होद्दालक आरूणिरूपरराम ।।२३।।**

रेतसि शुक्रे तदभिव्याप्य तिष्ठन् वर्तमानः रैतसः, अन्तः विशिष्टः अधातुत्वात् यं रेतो न वेद विशुद्धविज्ञानमयत्वात् यस्य रेतः शरीरं चेष्टाश्रयः यः अन्तरः रेतः यमयति नियन्त्रयति, एषः त्वदभिन्ना अन्तर्यामी अदृष्टः न दृष्टुं शक्यः, न श्रुतः स्वयमपि श्रोता, अविज्ञातः विज्ञानेन स्वयमपि तज्ज्ञत्वाद् विज्ञाता अमतो मनसा तस्य संकल्पप्रेरकः। एषः पृथिव्यदिभूतान्तानां प्राणदि रेतः पर्यन्तानां च त्रयोविंशतेस्तत्वाना-मतिसंन्निकृष्टः, तद्दोषैरलिप्तः तत्तच्छरीरः, तत्तत् नियन्त्रित्वात् मृतानामेषाममृतः सन् अन्तर्यामी । यद्यपि पृथिव्यादिभूतपर्यन्तानाम् आप्राणरेतसाम् अन्तर्यामित्वं श्रीसीतारामाभिधेयब्रह्मणि यथाश्रुति संगमयितुं शक्यते, इहतु संकेतमात्रं विस्तरभिया, प्रत्यक्षरसंगमनमन्तरयामिप्रकरणस्य नातिरचयिष्यमाणे श्रीरामचरितमानसस्य द्वितीयसोपानस्य श्रीराघवकृपाभाष्ये दर्शयिष्यामः । अतः अस्मात् परमात्मनः अन्यत् भिन्नमार्तं व्याकुलीभूतमनार्तम् आर्तिहरं च केवलं सरयूतीरं बालकैः सह क्रीडत् कौशल्यास्तन्यपानलालसं श्रीराघवख्यं ब्रह्म इति श्रुत्वा अरुणपुत्रः औद्दालकः उपरराम लब्धोत्तरः संतोषमगमत् ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये अन्तर्यामिवर्णनं नाम सप्तमं ब्राह्मणं संपूर्णम् ।**

**।। श्री राघवः शन्तोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अष्टमब्राह्मणम् ।।

**प्रावृण्नम्भोदतडित्प्रभाहरौ भक्तानुकम्पाकुशलौ नराकृती ।**
**तौ दम्पती ब्रह्ममयौ श्रुतिश्रुतौ सीताखरारी कलये किलाष्टमे ।।**

अथ सकलोपाधिविवर्जितं यत् साक्षात्परोक्षाद् ब्रह्म इत्यादि श्रुतिभिर्निरुपाधितया निरूपितम् तद्भूयो व्याख्यातुकामा श्रुतिः गार्गीनामब्राह्मणं प्रारभते -

अत्र गार्गी अतिप्रश्नविषये **मूर्धा ते विपतिष्यति** इति वदता याज्ञवल्क्येन पूर्वं निषिद्धापि साम्प्रतं प्रश्नद्वयं प्रस्तोतुं ब्राह्मणाननुज्ञां याचते—

**अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो हन्ताहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति पृच्छ गार्गीति ।।११।।**

अथ उपरते चारुणौ वाचक्नवी वाचक्नुपुत्री ब्रह्मवादिनी भगवती गार्गी, उवाच विज्ञापयामास—हन्त इति सम्बोधनार्थनिपातः भगवन्तः पूजयनीयाः ब्राह्मणाः अहमिमं याज्ञवल्क्यं द्वौ प्रश्नौ प्रक्ष्यामि गीप्सिष्यामि, यदि मे मम द्वौ प्रश्नौ वक्ष्यति सः समाधानमुत्तरयिष्यति । जातु चेत् युष्माकं मध्ये कोऽपि इमं ब्रह्मोद्यं ब्रह्म वदतीति ब्रह्मोद्यस्तं ब्रह्मवादिनं याज्ञवल्क्यं न जेता न कोऽपि जेतुं प्रभविता इति अनेन पणेन सह अनुज्ञां याचे । ब्राह्मणा ऊचुः गार्गि ! पृच्छ प्रश्नौ कुरु ।।श्रीः।।

'अथ गार्गी याज्ञवल्क्यं सावधानं करोति—

**सा होवाचाहं वै त्वां याज्ञवल्क्य यथा काश्यो वा वैदेहो वोग्रपुत्रं उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं त्वां द्वाभ्यां प्रश्नभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गीति ।।२।।**

सा गार्गी प्रश्नयोः बाणाभ्यां तुलनां कुर्वाणा दुरूत्तरत्वं प्रस्तौति—हे याज्ञवल्क्य ! यथा काश्यः काश्यां जातः कश्चित् वीरः, यथा च वार्थश्चकार, उग्रपुत्रः विदेहराजवंशजः उद्गता ज्या यस्मात् तादृशं न्यस्तप्रत्यञ्चकम्, अधिज्यम् अधिरोपिता ज्या यसिमन् तथाभूतं धनुः कृत्वा सपत्नान् शत्रून् अतिविध्यतस्तच्छीलो बाणः शरस्य फलम् तद्युक्तौ शरौ हस्ते गृहीत्वा उपोत्तिष्ठेत् शत्रोः समक्षं उपस्थितो भवति, तथैवाहमपि त्वा बाणोपमौ द्वौ प्रश्नौ जिह्वाधनुषि वाग्रूपज्यायुक्ते सन्धाय उपोदस्यां सम्मुखं उपस्थिता अस्मि, सावधानं सज्जो भव, तौ प्रश्नौ मे मह्यं मम सम्बन्धिनौ वा ब्रूहि समाधत्स्व । पृच्छ गार्गी इति याज्ञवल्क्यः अनुजानीते । श्रीः ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यद्यपि षष्ठे ब्राह्मणे ओतप्रोतप्रश्नः कृतपूर्वः स एवाष्टमेऽपि करिष्याणो वर्तते, तथाप्युभयोर्भिन्नविषयत्वात् नदोषः—

**सा होवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथिव्या यदन्तरा धावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिँ्स्तदोतं च प्रोतं चेति ।।३।।**

हे याज्ञवल्क्य ! दिवः यदूर्ध्वं स्वार्गादुपरितनं, यच्च पृथिव्या अवाक्, यच्च द्यावापृथिव्योरत्तरम् यच्च भूतं परोक्षं, भवत् वर्तमानयच्च, भविष्यत् भावि तत् कस्मिन् ओतं प्रोतं किमाधारकमिति भावः, एतस्याधारं जिज्ञासे । श्रीः ।

याज्ञवल्क्य उत्तरयति—

**स होवाच यदूर्ध्वं गार्गि दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति ।।४।।**

**दिवो यदूर्ध्वं यदवाक् पृथिव्याः यदन्तरा भाति नभोऽवनी च ।**
**आकाश एतत् विशदावकाशे ओतं तथा प्रोतमवेहि गार्गि ।।**

इति सारार्थः । श्रीः ।।

गार्गी सन्तोषं वर्णयति—

**साहोवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गीति ।।५।।**

सा प्रसन्नोवाच–हे याज्ञवल्क्य ! ते तुभ्यं नमस्तेऽस्तु यत् मे प्रथमप्रश्नस्य ससम्यक्समाधानं अवोचः । अथ अपरस्मै प्रश्नाय आत्मानं सावधानं धारयस्व । याज्ञवल्क्यः प्रत्याह—गार्गि पृच्छ, समयगवहितोऽस्मि ।।श्रीः।।

सोपक्रमं द्वितीयप्रश्नं करोति—

**साहोवाच यदूर्ध्वं याज्ञवल्क्य दिवो यदवाक् पृथव्या यदन्तरा धावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ।।६।।**

उपक्रमे मन्त्रद्वयस्यानुवादः गार्ग्यैव कृत्वा प्रश्नः क्रियते—याज्ञवल्क्य ! यत्त्वया दिवमारभ्य भविष्यदन्तं आकाशओतप्रोतम् इत्युक्तं सः आकाशः कस्मिन् ओतः प्रोतः इति । ।श्रीः।।

**सहोवाच यदूर्ध्वं गार्गि दिवोयदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति ।।७।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अनुवादमात्रमेतत् पूर्वतः सम्बन्धः । अथाक्षरं विशिनष्टि—

**स होवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्व-मदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वानाकाशमसङ्गमरसमगन्धमचक्षुष्क-मश्रोत्रमवागमनोऽतेजस्कमप्राणममुखम मात्रमनन्तर मबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ।।८।।**

हे गार्गि ! यद् अक्षरम् अश्नुते सर्वं व्याप्नोति न क्षरति वा नक्षीयते वा, अम् ब्रह्मानन्दामृतं क्षरति यस्मात् तथा भूतं वा, यद् ब्राह्मणाः वेदाध्ययनशीला अभिवदन्ति । अतो नोक्तपूर्वं वच्मि कीदृशं तत् ? अत आह—अस्थूलं स्थूलत्वरहितम्, तदभावे अणुः स्यात् अतआह—अनणु अणु भिन्नम् इत्यनेनैव जीवात्मपरमात्मनोर्भेदः स्पष्टं प्रतिपादितः । जीवात्मा अणुः **एष्वणुरात्मा चेतसा वेदितव्यः** (मु० उ० २-१-७) अयं च परमात्मा च अनणुः अणुभिन्नत्वे सति ह्रश्वं स्यात् ? अत आह अह्रश्वं, तर्हि दीर्घः स्यात् ? तन्निषेधति—अदीर्घं दीर्घत्वरहितम् । एवम् अलोहितं तद्भिन्नं अरक्तमितिभावः, अस्नेहं स्नेह भिन्नं,किम् छायामात्रम् ? अत आह—अच्छायम् नास्ति छाया यस्मिन् एवं तमोवायुरहितम् । तथा हि तमश्च वायुश्च तमोवायू ताभ्याम् रहितम्, अनाकाशम् आकाश-भिन्नम् असङ्गं सङ्गवर्जितम्, अरसम् रसभिन्नम्, अगन्धं गन्धभिन्नम्, अचक्षुष्कम् नास्ति चक्षुर्यस्मिन् तथाभूतम्, एवं श्रोत्रभिन्नं वाङ्मनस्तेजोभ्यो व्यतिरिक्तम्, अप्राणं न सन्ति प्राणा यस्मिन् तथाभूत, मुखभिन्नं मात्राभिन्नम् अन्तरर्बाह्य- धर्मभिन्नं च, तद् किञ्चन न अश्नाति न भुङ्क्ते एवम् कश्चनापि तद् न अश्नाति नाशनविषयी करोति, एवं भोक्तृभोग्यधर्मवर्जितम् । अस्थूलादिप्रकरणे ब्रह्मणि जीवकल्पिताः विशेषाः धर्माः प्रतिषिद्धाः । अर्थात् अस्थूलं केवलं स्थूलमेव न हि, एवम् केवलं अण्वेव नहि दीर्घमपि, सर्वत्र नञ्घटितपदेन अन्यव्यवच्छेदो निराकृतः ब्रह्मणः सर्वमयत्वात्, तत्र सकलविरूद्धधर्माश्रयत्वस्योपपत्तेश्च । श्रीः ।।

अथ अक्षरस्य सर्व शास्त्रित्वं वर्णयति—

**एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसो विधृतो तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृता तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्पन्दते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशँ् सन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ।।९।।**

**गार्गि अम्बार्थनद्योर्ह्रश्वः** इत्यनेन ह्रश्वः । प्रशासने नियन्त्रणे विधृतौ धारितौ, सूर्यश्च चन्द्रमाश्च इति सूर्याचन्द्रमसौ **देवता द्वन्द्वेच** इत्यनेन आनङादेशः । एवम्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतस्यैव नियन्त्रित्वे सर्वे तिष्ठन्ति मनुष्याः दानं ददति । एवं पितरः दर्वीं सुधापात्रम् अन्वायत्ता आधीनाः ।।श्रीः।।

अथाक्षरस्य ज्ञानाज्ञानपरिणामं निरूपयति—

**यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ।।१०।।**

हे गार्गि । एतद् अक्षरम् सर्वव्यापकं ब्रह्म अविदित्वा सेव्यत्वेन न ज्ञात्वा, बहूनि वर्षसहस्राणियावत् जुहोति, तपति वा स अन्तवत् फलं लभते अन्य देवतोद्देशत्वात् तत्फलानां च सान्तत्वात् । यश्च एतत् अक्षरं अविदित्वा इतः अस्मांल्लोकात् प्रैति गच्छति । स् कृपणः असमर्थो वा । यः एतदक्षरं विदित्वा स एव ब्राह्मणः ब्रह्मणः अयम् ब्राह्मणः भगवदीयो भवति ।।श्रीः।।

उपसंहरन्नाह—

**तद्वा एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतँ श्रोत्रमतं मन्त्रविज्ञातं विज्ञातृनान्यदतोऽस्ति द्रष्टृनान्यदतोऽस्ति श्रोतृनान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञात्रे तस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति ।।११।।**

हे गार्गि ! एतदक्षरम् अदृष्टम् अश्रुतम् अमतम् अविज्ञातं दर्शनश्रवणमननविज्ञान-विषयबहिर्भूतम्, किन्तु द्रष्टृत्वादिधर्मोपेतम् । अर्थात् सर्वं पश्यति सर्वं श्रृणोति, सर्वंमनुते सर्वं विजानाति, एतस्माद् अन्यत् द्रष्ट्रादि न, अस्मिन्नेवाक्षरे आकाशोऽपि ओतप्रोतः ।।श्रीः।।

उत्तरात् सन्तुष्टा गार्गी निर्णयति—

**सा होवाच ब्राह्मणा भगवन्तस्तदेव बहु मन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वे जातु युष्माकमिमं कश्चिद् ब्रह्मोद्यं जेतेति ततो ह वाचक्नव्युपरराम ।।१२।।**

हे ब्राह्मणाः ! तदेव बहुमन्यध्वं सौभाग्यं यत् अस्माद् ब्रह्मविद्वरिष्ठात्, नमस्कारेण प्रणिपातेनैव मुच्येध्वं अपमानितः सति युष्मभ्यम् शापमपि दद्यात् । युष्माकं मध्ये कोऽपि इमं ब्रह्मवादिनं न जेता इति निर्णीय ततः वाचक्नवी गार्गी उपरराम ।।श्रीः।।

**इति बृहदांरण्यकोपनिषदि तृतीयाध्याये श्रीराघवकृपाभाष्ये गार्गीसन्तोषणनामाष्टमब्राह्मणं समपूर्णम् ।**

**।। राघवः शन्तनोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। नवमब्राह्मणम् ।।

**सजलवारिदभानुसुताद्युतिं दनुजकाननवह्नि धनुर्धरम् ।**
**अवनिजादयितं रघुनंदनम् अनवमं नवमे समुपास्महे ।।**

अथ याज्ञवल्क्यशाकल्यसंवादे देवतासंख्यानिरूपणम्—

**अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्येति स है तयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविद्युच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रयस्त्रि ँ शदित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति षडित्योमिति होवाच कत्येव देवा याज्ञवल्क्येति त्रय इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येति द्वावित्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्यध्यर्ध इत्योमिति होवाच कत्येव देवा याज्ञवल्क्येत्येक इत्योमिति होवाच कतमे ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ।।१।।**

गार्ग्यामुपरतायामनन्तरं शाकलगोत्रः विदग्धःपप्रच्छ कति संख्याकाः देवाः याज्ञवल्क्य ! सः एतयैव संकेतनिर्दिष्ट्या प्रतिपेदे ज्ञातवान् । निविदा उच्यन्ते— वैश्वेषां देवानां भावः वश्वदेवं तस्य निविदः संकेताः पूर्वं व्यासेन पश्चात् समासेन इति प्रश्नोत्तरक्रमः । त्रयः त्रिंशत्त्रयः त्रिसहस्राणि इति व्यासक्रमः, समासे त्रयस्त्रिंशत् षट् त्रयः द्वौ अध्यर्धः सार्धैकः एका इति ।।श्रीः।।

अथैकादशत्रिगुणितानां देवानामवधारणमाह—

**स होवाच महिमान एवैषामेते त्रयस्त्रि ँ शत्त्वेव देवा इति कतमे ते त्रयस्त्रि ँ शदित्यष्टौ वसव एकादश रुद्रा द्वादशादित्यास्त एकत्रि ँ शदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रि ँ साविति ।।२।।**

इमे महिमानः विभूतयः, वस्तुतस्तु त्रयस्त्रिंशत् देवाः । के ते ? अष्टौ वसवः **अग्न्यादयः**, एकादशरुद्राः **प्राणादयः** द्वादआदित्याः चैत्रादयः, इन्द्रः प्रजापतिश्च इतित्रयस्त्रिंशत् ।।श्रीः।।

अथ वसून् जिज्ञासते—

**कतमे वसव इत्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि चैते वसव एतेषु हीदं सर्व ँ हितमिति तस्माद्वसव इति ।।३।।**

वसन्ति सर्वाणि ये ते वसवः अत्र यौगिकं वसुत्वं न तु पौराणिकम् अग्नि पृथिवीवाय्वन्तरिक्षसूर्यद्युलोकचन्द्रनक्षत्रेषु सर्वेषां निवासात् तएव वसवः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ रूद्र जिज्ञासा—

**कतमे रुद्रा इति दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति तद्यद्रोदयन्ति तस्माद्रुद्रा इति ।।४।।**

अत्रा पियौगिकमेवरुद्रत्वं दशैमे प्राणापानव्यानोउदानसमानननागकूर्मकृकलदेवदत्त-धनंजयवैश्वानराः आत्माचैकादशोरुद्रः । नैते देवगणप्रसिद्धाः इत्यत आह–एते यदा शरीरं त्यक्त्वा निःसरन्ति तदा मृतं प्रति सर्वे रुदन्ति रोदनहेतुत्वात् रुद्राः रोदयन्ति इतिरुद्राः इति व्युत्पत्तेः ।।श्रीः।।

अथ द्वादशादित्यव्याख्या—

**कतम आदित्या इति द्वादश वै मासाः संवत्सरस्यैत आदित्या एते हीदँ सर्वमाददाना यन्ति ते यदिदँ सर्वमाददाना यन्ति तस्मादादित्या इति ।।५।।**

अत्र संवत्सरस्य द्वादशमासेषु आदित्यभावना आददानाः गृह्णन्तः प्राणिनामायुः यन्ति गच्छन्ति तथा भूताः मासेषु तथात्वात् ।।श्रीः।।

इन्द्रप्रजापति व्याख्यानम—

**कतम इन्द्रः कतमः प्रजापतिरिति स्तनयित्नुरेवेन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुरित्यशनिरिति कतमो यज्ञं इति, पशव इति ।।६।।**

स्तनयित्नुः मेघः इन्द्रः यज्ञः पशवः पश्वालम्भन प्रधानत्वात् अशनिः सर्वभक्षकः वज्रात्मकम् आयुधं वा ।।श्रीः।।

के षड्देवाः ? अत आह—

**कतमे षडित्यग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्चैते षडेते हीदँ सर्वँ षडिति ।।७।।**

दीव्यन्ति इति देवाः संक्षेपे अग्नि पृथिवी वाय्वाकाशसूर्यदिक्षु सर्वेषां समाहाराः ।।श्रीः।।

पुनः संक्षेपः मन्त्रद्वयमेकान्वयि—

**कतमे ते त्रयोदेवा इतीम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवावित्यन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति योऽयं पवत इति ।।८।।**

**तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति यदस्मिन्निदँ सर्वमध्याध्नोंत्तेनाध्यर्ध इति कतम एको देव इति प्राण इति स ब्रह्म त्यदित्याचक्षते ।।९।।**

सर्वेषां त्रिषुलोकेषु समाहारात् त्रयोलोकाः देवाः तेषामपि प्राणान्नयोः समाहारात् द्वावेव प्राणान्ननामानौ देवौ, तयोरपि सार्धैके अन्तरभावात् सार्धैक एव देवः । योऽयं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पवते एकः प्राणः अर्धश्च बहिर्वायुः तस्यापि । प्राणे समाहारात् प्राण एवैका देवता । इदमेवस्यष्टयति तदाहु इत्यनेन तदाहुः तस्मादेव कथयन्ति—अयम् एकः अन्यान् पवते पुनाति इव, तस्मादाहुः—अयम् एकः प्राणः यद्यपि श्रुतावपि एतस्य सार्द्धैकता स्पष्टं नोक्ता शांकरभाष्यादावपि एतस्य व्याख्या प्रतिबिम्बोऽपि नास्ति । तथापि मया श्री राघवकृपावलम्बेन समर्जितश्रीवैष्णवाशीर्वादकदम्बेन स्वप्रतिभया व्याख्यायते । अत्र इव शब्देन सार्द्धैकता व्याख्याता, वायोरिह् कार्यद्वयम्, एकं शरीरान्तःसञ्चरणम् अपरं लोकानां पवित्रीकरणम् । प्रणने तु कस्यचिद् हस्तेक्षेपो नास्ति, किन्तु द्वितीयस्यां क्रियायां तु अग्नेरपि हस्तक्षेपः, अत एव एकः पवनः अपरश्च पावकः कथ्यते, इदमेव श्रुतिसंकेतयति पवते इव, इव शब्दोऽत्र अर्द्ध पावनत्वं ध्वनयति, इदं सर्वम् अत्रैव अध्यर्धितम् । अध्यर्ध्नोति, इत्यध्यर्धं तस्यापि प्रणे समाहारात् प्रणैव एका देवता, तदेव त्यत् परोक्षवाचकम् ।।श्रीः।।

अथ प्राण ब्रह्मणः अष्टौ भेदाः निरुप्यन्ते—

**पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण॑ँ स वै वेदिता स्यात् । याज्ञवल्क्य वेद्वा अहं तं पुरुष॑ँ सर्वस्यात्मनः परायणं यमात्थ य एवाय॑ँ शरीरः पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यमृतमिति होवाच ।।१०।।**

तस्य प्राणस्य पृथिवी एव आयतनम् उपभोगसाधनम् । लोक्यते इति लोकः, अग्निः लोकः दर्शन शक्तिः, मनः ज्योतिः सङ्कल्पप्रकाशकशक्तिः, यः वैनिश्चयेन सर्वस्य स्थूल सूक्ष्मसङ्घातस्य आत्मनः आध्यात्मिकशरीरस्य तं पुरूषं परायणं परमाश्रयं विद्यात्, स एव वेदिता विज्ञः स्यात् । अथाक्षिपति शाकल्यः—यं त्वं सर्वस्यात्मनः परायणमात्थ अहं तं पुरुषं वेद, त्वम् तु अविद्वान् आत्मानं पण्डितंमन्यं मन्यसे याज्ञवल्क्य अहं जानामि यः शरीरः स एव एषः प्राणाख्यः सकलपरायणभूतः एतदन्तरं शाकल्यः वद इति प्रष्टुं नोदयति । शाकल्यः प्राह—का देवता ? तं याज्ञवल्क्यः उत्तरितवान्—अमृतं मृतानि शरीणि "अन्तवन्त इमे देहा नित्यस्योक्ता शरीरिणा" अनाशिनोऽप्रमेयस्य तसमाद्युध्यस्व भारत ।। गीता २/१८ इति स्मृते । तद् भिन्नममृतं, यद्वा अम्–ऋतम् इति पदः यम्, अमृतं अम् ऋतम् ।

इत्यमृतम् ऋतं सत्यं प्राणाः सत्याः तस्य सत्यमिति श्रुतेः । अम् महाविष्णुरूपं श्रीरामाख्यं परब्रह्म, व्यूहरूपवासुदेवव्यावृत्यर्थम् ऋतमिति विशेषणम् ।।श्रीः।।

भूयः देवतान्तरं पृच्छति—

**काम एव यस्यायतन॑ँ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण॑ँ स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तं पुरूष ँ्सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेतिस्त्रिय इति होवाच ।।११।।**

आयतनं चेष्टाश्रयः, हृदयं लोकः लोक्यते दृश्यते अनेन इति व्युत्पत्तेः । तस्य काममयस्य पुरुषस्य स्त्री देवता, कामः खलु सामान्येच्छा, यत्तु स्त्रीव्यतिकराभिलाषः कामः इति प्राहुः तथा सति योषित्यव्याप्त्यापत्तिः, तत्रापि कामस्य सत्वात् स्त्री व्यतिकराभिलाषाभावाच्च, तस्मात् इच्छैव कामः । तस्य हृदयं लोकः स्थानम् मनो ज्योतिः तस्य काममयस्य पुरुषस्य स्त्री भगवतो लीलाशक्त्युपबृंहिता इच्छाशक्तिः इयमेव ईश्वरेच्छा कथ्यते नैयायिकैः । नन्वस्मिन् व्याख्याने तार्किकानुगतत्वापत्तिः ? भवतु नाम श्रुतिसिद्धान्तरक्षणमेव महदुत्तरमस्माकम्, न हि सर्वविरोधः, अत एव विरोधपरिहाराध्यायमाह भगवान् वादरायणः । भवन्तोऽपि यदि श्रुत्यर्थं व्याकुपयिष्यन्ति तर्हि अस्मत् प्रतिपक्षता भवद्भिः सहापि तथैव वेदान्तनये सर्वस्य ब्रह्ममयत्वात् न केनचित् विरोधः अनुरोधस्तु श्रुतिसिद्धान्तरक्षणे ।।श्रीः।।

अथ देवतान्तरं पृच्छति—

**रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ँ्स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुष ँ्सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः ए एष वदैव शाकल्य तस्य का देवतेति सत्यमिति होवाच ।।१२।।**

रूपाणि यस्यायतनम् चक्षुर्लोकः सः कः सुरः ? "आदित्यस्थः" स किं देवः ? सत्यं तस्य हि दैवतम् ।।श्रीः।।

अथ देवतान्तरं पृच्छति—

**आकाश एव यस्यायतन ँ्श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ँ्स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुष ँ्सर्वस्यात्मनः परायणं यमात्थ य एवाय ँ्श्रोत्रः प्रतिश्रुत्कः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति दिश इति होवाच ।।१३।।**

आकाशायतनो श्रोत्रलोको को नाम वै सुरः ? श्रौत्र तस्य हि को देवः ? दिशस्तदैवतं स्मृतम् ।।श्रीः।।

अथ छायादैवतं पृच्छति—

**तम एव यस्यायतन ँ्हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायण ँ्स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुष ँ्सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति मृत्युरिति होवाच ।।१४।।**

तमः अन्धकारः, छाया पुरुषः, प्रतिबिम्बं नरः, तस्य मृत्युः काल एव देवता ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**रूपाण्येव यस्यायतनं चक्षुर्लोको मनोजयोतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ्स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषँ् सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य तस्य का देवतेत्यसुरिति होवाच ।।१५।।**

आदर्शोदर्पणम् आसमन्ताद् दृश्यन्ते रूपाणि यस्मिन् सः आदर्शः इति व्युत्पत्तेः ।।श्रीः।।

**आप एव यस्यायतनँ् हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ्स वै वेदिता स्यात् । याज्ञवल्क्य वेद वा अहं तं पुरुषँ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य तस्य का देवतेति वरुण इति होवाच ।।१६।।**

आपः जलानिः वरुणः जलनिन्तृदेवता अदितेर्नवमपुत्रः ।।श्रीः।।

**रेत एव यस्यायतनँ्हृदयं लोको मनोज्योतिर्यो वैतं पुरुषं विद्यात्सर्वस्यात्मनः परायणँ् स वै वेदितास्याद्याज्ञवल्क्य वेद वा अहं तं पुरुषँ् सर्वस्यात्मनः परायणं यमात्थ एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य तस्य का देवतेति प्रजापतिरिति होवाच ।।१७।।**

रेतः वीर्यम् पुत्र एव पुत्रमयः पुत्रशब्दोऽत्र सन्ततिपरः प्रजापतिः, ब्रह्मा कश्यपो वा ।।श्रीः।।

एवं बहूनां प्रश्नानामुत्तरं प्रस्तुवन् ईशद्रोषाविष्टः याज्ञवल्क्यः प्राह—

**शाकल्येति होवाच याज्ञवल्क्यस्त्वाँ् स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता इति ।।१८।।**

याज्ञवल्क्यः शाकल्य इति सम्बोध्य उवाच भर्त्सयामास यत्—हे शाकल्य ! स्विद् अहं वितर्कयामि इमे ब्राह्मणाः कुरुपञ्चालाः मम समक्षं अतिवादे नियोज्य अङ्गारावक्षयणं अविक्षीयन्ते निवसन्ति यस्मिन् तत् अवक्षयणं अङ्गाराणाम् अवक्षयणम् इत्यङ्गारावक्षयणम्, अकृताः कृतवन्तः व्यत्ययादेकवचनम् । यथा सन्दंशेन अङ्गारा निस्सार्यन्ते, किन्तु ज्वलति तदेव तथैव अनेकान् प्रश्नान् धृष्टतया कुर्वन् मम क्रोधरूपानङ्गारान् त्वमेव निर्गमयसि तैर्भस्मसात् भविष्यसि ।।श्रीः।।

अथ प्रतिष्ठादेवताभिः सह दिशः पृच्छति—

**याज्ञवल्क्येति होवाच शाकल्यो यदिदं कुरुपाञ्चालानां ब्राह्मणानत्यवादिः किं ब्रह्म विद्वानिति दिशो वेद स देवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः स प्रतिष्ठाः ।।१९।।**

याज्ञवल्क्यं सम्बोध्य शाकल्य प्राह—यत् ब्रह्मज्ञंमन्यस्त्वम् इमान् कुरुपाञ्चालब्राह्मणान् अत्यवादीः वादे पराजितवानसि, वस्तुतः स एव ब्रह्मवित् यो देवताप्रतिष्ठाभिः सह दिशो जानाति । किं त्वं वेत्थ ? स्वीकरोति याज्ञवल्क्यः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथपूर्वदिग्देवताविषयकप्रश्नः—

**किं देवतोऽस्यां प्राच्यां दिश्यसीत्यादित्यदेवत इति स आदित्यः कस्मिन्प्रतिष्ठित इति चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितमिति रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्ती त्येवमेवैतद्याज्ञवल्क्य ।।२०।।**

प्राच्यां दिशि पूर्वस्याम् आदित्यः सूर्यः—

श्लोकः— **आदित्यदेवता पूर्वा चक्षुष्वेष प्रतिष्ठितः ।**
**चक्षुरूपे च तद्धृदि ततो रूपनिदर्शनाः ।।श्रीः।।**

अथ दक्षिणदिङ्निरूपणम्—

**किं देवतोऽस्यां दक्षिणायां दिश्यसीति यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठितेति श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाँ ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवती त्येवमेवैतद्याज्ञवल्क्य ।।२१।।**

**दक्षिणायाः यमो देवः स च यज्ञे प्रतिष्ठितः ।**
**दक्षिणायां मखः सापि श्रद्धायां सा च हृत्स्थिता ।।श्रीः।।**

**किं देवतोऽस्यां प्रतीच्यां दिश्यसीति वरुणदेवत इति स वरुणः कस्मिन्प्रतिष्ठित इत्यप्स्विति कस्मिन्न्वापः प्रतिष्ठिता इति रेतसीति कस्मिन्नुरेतः प्रतिष्ठितमिति हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ।।२२।।**

**प्रतीच्याः वरुणो देवः जले सोऽपि प्रतिष्ठितः ।**
**जलं रेतसि तच्चापि हृदयेऽस्ति प्रतिष्ठितम् ।।**

**प्रतिरुपस्ततो जातः औरसः कथ्यते सुतः ।**
**उरसा जात इत्युक्तिः उरोरूपेण रेतसा ।।श्रीः।।**

**किं देवतोऽस्यामुदीच्यां दिश्यसीति देव सोम त इति स सोमः कसिमन्प्रतिष्ठित इति दीक्षायामिति कस्मिन्नुदीक्षा प्रतिष्ठितेति सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येवसत्यं प्रतिष्ठितं भवतीत्येवमेवैतद्याज्ञवल्क्य ।।२३।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सोमः चन्द्रमाः, दीक्षा यज्ञानुष्ठाननियमनियोगः सत्यं भूतार्थभावितम् ।

**किं देवतोऽस्यां ध्रुवायां दिश्यसीत्यग्निदेवत इति सोऽग्निः कस्मिन्प्रतिष्ठित इति वाचीति कस्मिन्नुवाक् प्रतिष्ठितेति हृदय इति कस्मिनू हृदयं प्रतिष्ठितमिति ।।२४।।**

**वसतां सर्वभूतानां सर्वतो मेरूपर्वतम् ।**
**व्यवधानं विना चोर्ध्वा ध्रुवा सैव दिशा स्मृता ।।**

**तस्यास्तु देवता वह्निः स वै वाचि प्रतिष्ठितः ।**
**सा च वाग्घृदये न्यस्ता ततः शाकल्य गीप्सितम् ।।श्रीः।।**

अथ हृदयशरीरयोः अन्योन्याश्रयत्वं तत् स्थित्यधीनस्थितिमत्वं साधयति—

**अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतदन्यत्रास्मान्मन्यासै यद्धयेतदन्यत्रास्मास्याच्छ्रूनो वैनदद्युर्वया ँ् सि वैनाद्विमन्थीरन्निति ।।२५।।**

याज्ञवल्क्य प्राह—हे अहल्लिक ! इदं शाकल्यस्य नामान्तरम्, यत्र यस्मिन् समये एतद् इदं हृदयमस्मात् एतस्मात् शरीरात् अन्यत्र अन्यस्मिन् स्थाने मन्यासै मन्यसे, मन्यासे इति व्यत्ययात् छान्दसो दीर्घः लट् लकारेऽपि । एत ऐ **इत्यनेन** मन्यसे इति एकारस्य ऐ आदेशः । यदि एतत् शरीरं हृदयात् अन्यत्र स्यात् तदा श्वानः कुक्कुराः एनत् अद्युः खादेयुः, वयांसि पक्षिणः विमथ्नीरन् चञ्चुभिर्विकर्षेयुः विलोडयेयुर्वा ।।श्रीः।।

अथ समानपर्यन्तानां प्रतिष्ठा शाकल्यशिरो निपातश्च—

**कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इत्यपान इति कस्मिन्न्वपानः प्रतिष्ठित इति व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इत्युदान इति कस्मिन्नूदानः प्रतिष्ठित इति समान इति स एष नेति नेत्यात्मा गृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो नव्यथते न रिष्यति । एतान्यष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरूषान्निरुह्य प्रत्युध्यात्यक्रामत्तं त्वौपनिषदं पुरूषं पृच्छामि । तं चेन्मे न विवक्ष्यसि मूर्धाते विपतिष्यतीति । त ँ् ह न मेने शाकल्यस्तस्य ह मूर्धा विपपातापि हास्य परिमोषिणोऽस्थीन्यप जह्रुरन्यन्मन्यमानाः ।।२६।।**

शाकल्यः पृच्छति–त्वं, जीवः आत्मा अन्तर्यामी इति कस्मिन् प्रतिष्ठितौ । याज्ञवल्क्यः प्राह–प्राणे, प्राणः अपाने, स च व्याने, सोऽप्युदाने, स च समाने प्रतिष्ठितः । अयमेव आत्मा यः नेति नेति इति निषेधपरतया व्याख्यायते, अगृह्यः केनापि न गृह्यते, अशीर्यः न शीर्यते शस्त्रादिभिः, असङ्गः न सज्यते अनासक्तस्वरूपः,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असितः खड्गतः न व्यथति न व्यथामनुभवति अखण्डत्वात्, न रिष्यति नैव ह्रासं गच्छति, सर्वव्यापकत्वात् । एवम् पूर्वोक्तानि अष्टौ एव आयतनानि निवासस्थानानि देवाः लोकाः पुरुषाश्च । अथ शाकल्य ! त्वया पृष्टानां सर्वेषां प्रश्नानां मया सम्यक् समाधानं कृतम्, अतो मयापि कश्चन प्रश्नः क्रियते—इमामष्टौपुरुषान्निरुह्य नियम्य प्रत्यूह्य च स्वे स्वे स्थाने समायोज्य यः अत्यक्रामत् जीवात्मतोऽपि विलक्षणः साकेताधीशः परब्रह्म परमात्मा, त्वाम् तमेव औपनिषदमुपनिषदा गृह्यमाणम् उपनिषत्सु दृष्टं वा पुरुषं पृच्छामि । यदि मे न वक्ष्यसि तदा ते मूर्धा विपतिष्यति, कबन्धतः पृथग्भूतं शिरः भूमौ विपतिष्यति । तम् औपनिषदं पुरुषं शाकल्य न मेने नावबुद्धवान् बभूव । अनन्तरं तस्य शिरः तत्क्षणं विपपात कबन्धतो विकृत्तं सत् भूमौ पतितं बभूव, अस्थीनि अपि तस्य अन्यत् किमपि धनं मन्यमानः, परिमोषिणः परितःमुष्णन्ति चोरयन्ति धनं एते परिमोषिणः चोराः अपजह्रु एवं ब्रह्मवेत्तारमवमन्यमानस्य शाकल्यस्य अस्थीनामपि विडम्बनैषा ।।श्रीः।।

अथ सर्वान् प्रष्टुमामन्त्रयते याज्ञवल्क्यः—

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान् वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः ।।२७।।**

अथ मृते शाकल्ये याज्ञवल्क्य उवाच–भोः पूजनीयाः ब्राह्मणाः ? वः युष्माकं मध्ये यः कामयते सः मां पृच्छतु अथवा सर्वे सम्भूय पृच्छन्त, अहमपि यः कामयते उत्तरंदातुं तं पृच्छामि । अथवा सर्वान् वः पृच्छामि किन्तु तं प्रष्टुं प्रष्टुमामन्त्रयितुं वा केऽपि न दधृषुः धृषिरत्र साह सार्थस्छान्दसो धातुः ।।श्रीः।।

अथ तान् ब्राह्मणान् प्रति एतैः वक्ष्यमाणैः श्लौकैः पप्रच्छ प्रश्नविषयाँश्चकार—

**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा ।**
**तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः ।।१।।**

**त्वच एवास्यरुधिरं प्रस्यन्दि त्वच उत्पटः ।**
**तस्मात्तदातृण्णात् प्रैति रसो वृक्षादिवाहतात् ।।२।।**

**मांसान्यस्य शकराणि किनाटँ स्नाव तत् स्थिरम् ।**
**अस्थीन्यन्तरतो दारुणि मज्जा मज्जोपमा कृता ।।३।।**

**यद् वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।**
**मर्त्य स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ।।४।।**

**रेतस इति मा वोचत् जीवतस्तत् प्रजायते ।**
**धानारूह इव वै वृक्षोऽञ्जसा प्रेत्य सम्भवः ।।५।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यत् समूलमावृहेयुर्वृक्षं न पुनराभवेत् ।**
**मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात् प्ररोहति ।।६।।**

पुरुषं वृक्षेण तुलयति अथ सार्धषड्भिः । वृश्चयते इति वृक्षः, एषः पुरुषः प्राणी वनस्पतिः विशालवृक्षो यथा तथैव अमृषा सत्यो भाति, तस्य पुरुषवृक्षस्य लोमरूपाणि पर्णानि । त्वक् चर्मास्य वृक्षस्य बहिरूत्पाटिका बाह्यावृणानि अस्य पुरुषस्य त्वचः चर्मणः सकाशात् रुधिरं रक्तमिव अस्यापि उत्पटः निर्यासः प्रस्यन्दि, तस्मात् तदातृण्णात् तृणु हिंसायाम् तृणहिं सितं तस्माद् आहतात् वृक्षात् रसः इव एतस्माद् पुरुषादपि आतृण्णात् तत् रुधिरं प्रैति गच्छति ।

मांसस्थानीनि अस्य वृक्षस्य शकराणि अन्तर्भागाः किनाटमेव अन्तःकाष्ठं स्नायुः, तत् तन्तवश्च अन्तर्दारुणि एव अस्थि उपमानि मज्जा उभयत्रसमाना ।

यथा वृक्णः छिन्नवृक्षः मूलात् नवतरः नवीनतया प्ररोहति, तथैव मृत्युना वृक्णः छिन्नः पुरुषः कस्माद् मूलात् प्ररोहति, संसार वृक्षस्य मूलं कथयन्तु ब्राह्मणाः ?

यदि कोऽपि कथयेत् रेतस्य मूलात् प्ररोहति तदा मावोचत मा कथयतु, यतो हि रेतस्तु जीवतः सकाशात् प्रजायते अत्र मृतात् जातस्य प्रश्नः, वृक्षस्तु धानारोह इव अञ्जसा सुगमतया सम्भवति ।

यदि केऽपि समूलं वृक्षं आवृहेयुः छिन्द्युस्तदा वृक्षः पुनर्न भवति एवं मर्त्योऽपि मृत्युना वृक्णः कृत्तः जीवजीवनशरीरसम्बन्धसंयोगः कस्मात् मूलात् प्ररोहति प्ररोहं गच्छति ।।श्रीः।।

**जात एव न जायते को वेनं जनयेत् पुनः । विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणतिष्ठमानस्य तद्विद इति ।२९।**

यदि कोऽपि कथयतु जातः सञ्जायते, इत्यपि न वाच्यं "जातस्य हि ध्रुवो मृत्युः" इति स्मृतत्वात् एनं कः जनयति उत्पादयति ? एवं सर्वेषु मौनं गतेषु श्रुतिः स्वमेव परमकरुणा मातेव प्राह—दातुः अतिस्रष्टुः रातिः रायते इति रातिः तिष्ठमानस्य भगवच्छरणागतौ वर्तमानस्य तद्विदः ब्रह्मज्ञानिनः परायणं परमाश्रयः । इति इत्थम् विजित्य सर्वान् ब्राह्मणान् याज्ञवल्क्यः दशसहस्रसंख्याकाः जनकराजगावः स्वपर्णशालां समनयत् समाप्तेयम् आख्यायिका सम्पूर्णश्चाध्यायः ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि श्रीचित्रकूटस्थ सर्वाम्नाय श्री तुलसी पीठाधीश्वर जगद्गुरु रामानन्दाचार्य श्रीरामभद्राचार्य प्रणीतश्रीराघवकृपाभाष्ये तृतीयोध्यायः सम्पूर्णः ।।**

**।। श्रीराघवः शन्तनोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अथ चतुर्थोऽध्यायः ।।

### ।। प्रथमब्राह्मणम् ।।

**पयोमुगसितोत्पलच्छविहरं हरेणानिशं**
**मनोनयननीरजस्नुतहिमाम्बुभिर्भावितम् ।**
**विदेहतनयापतिं श्रुतिततीनतं ब्रह्म तच्–**
**चतुर्थमिह चिन्तये मनसि राममात्मास्पदम् ।।**

अथ जनकयाज्ञवल्क्यसंवादमिषेण निरवधिक दिव्यकल्याणगुणगणधाम्नो विभून्नः परमव्योम्नि श्रीसाकेते विराजमानस्य परब्रह्मणः श्रीरामस्य तत्तत् परिच्छेदभिन्नतया सकलोपाधिनिर्मुक्ततया च महामहिमान्वाख्यानस्य वक्तव्यतया वेदान्तनये च सकलकार्यकारककारणकलापरहितस्यैव तत्तदुपाधिविमुक्तस्य मूर्तत्वेनामूर्तत्वेन च नयननिलये मनोमन्दिरे च समुपास्यतया राद्धान्तितत्वेन प्रतिपक्षिपक्षाणांश्रुतिविरोधा– नुरोधेनानुपादेयतया स्वतः प्रमाणतया च श्रुतीनाम् तत्र निरस्तसमस्त—भ्रमप्रमादविप्रलिप्साकर्णपाटवादि पुँदोषशङ्कापङ्कलङ्कावकाशतया च तास्वेव श्रद्दधानानां श्रीवैष्णवानां मनोनयनमहोत्सवस्य धृताखण्डज्ञानगौरवस्य भग्नभक्तरौरवस्य भगवतः श्रीराघवस्य विशुद्धब्रह्मवैभवप्रतिपिपादयिषिततया ससमारम्भं चतुर्थोऽयमरभ्यते चाध्यायः ।

तत्र प्रथमं भगवतीमैथिलीपितुः योगिराजस्य सीरध्वजस्य जनकस्य अगिनहोत्रविद्यायां शास्त्रानुकूलप्रश्नोग्त्तरपरितोषितयोगियाज्ञवल्क्यस्य तेनैव महर्षिणा सह ब्रह्मविद्याविषयकविनष्टविविधविवादविगलितविविधसुविषाद—विशदीकृत–विविधविबुधविद्वदाह्लादविशदशुभसम्बादशुभारम्भोपक्रमः ।।

**ॐ जनको ह वैदेह आसाञ्चक्रेऽथ ह याज्ञवल्क्य आवव्राज । तँ होवाच याज्ञवल्क्य किमर्थमचारीः पशूनिच्छन्नण्वन्तानिति उभयमेव सम्राडिति होवाच ।।१।।**

ॐ इति परमदुरूहब्रह्मविद्याप्रतिपादनसमागन्तुकसकलदुरितनिराकरणचिकीर्षया सगुणनिर्गुणरूपश्रीमदुत्तरकोसलभूपपरब्रह्म स्वरूपभगवतः विश्वविश्वप्रणम्यप्रणवाख्य–नामस्मरणरूपमङ्गलाचरणम् । ह सुविदितमेतत् वैदेहः विगतो देहो यस्य स विदेहो निमिः, तस्य वशिष्ठशापाद् विगतदेहता पुराणादौ प्रसिद्धा । तस्य विदेहस्य निमेः गोत्रापत्यं पुमान् वैदेहः सीरध्वजः परब्रह्मरूपश्रीसीतायाः परमपूज्यपितृचरणः, यद्वा विनष्टं ब्रह्म चिन्तनेन व्यपोहितं वा देहाभिमानं येन सः विदेहः विशोधितश्च

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शास्त्रविहितसत्कर्मभिः देहो येन स विदेहः, उताहो विदूरितम् देहात्माज्ञानम् येन सः विदेह, अथवा विगलितो देहात्मभावो यस्य सः विदेहः, यद्वा वेदान्तवेद्यस्य परब्रह्मणः वेदनं सेव्यसेवकभावेन उपासनमेव विदा तस्यां ईहा चेष्टा यस्य स विदेहः, अग्रे तन्मुमुक्षाया असकृद् वक्ष्माणत्वात् । विदेह एव वैदेहः स्वार्थेऽण् प्रत्ययः । अमूषां सर्वाषां व्युत्पत्तीनां सोपज्ञे प्रामाणिकोदाहरणं श्रीगोस्वामितुलसीदासकृतगीतरामायणे श्रीविश्वामित्रवाक्ये द्रष्टव्यं विस्पष्टप्रतिपत्तये तस्य मयेह ससंस्कृतं रूपान्तरं प्रस्तूयते—

**सुजन सराहैं जो जनक बात कही है । रामहि सोहानि जानि,**
**मुनिमन—मानी सुनि नीच महिपावली दहन बिनु दही है ।।१।।**

**कहैं गाधिनंदन मुदित रघुनंदन सों**
**नृपगति अगह, गिरान जाति गही हैं ।**
**देखे सुने भूपति अनेक झूँठे झूँठे नाम**
**साँचे तिरहुति नाथ साखी देति मही है ।।२।।**

**रागऊविराग भोग जोग जोगवतमन**
**जोगी जागवलिक प्रसाद सिद्धि लही है ।**
**ताते न तरनि ते न सीरे सुधाकरहुँ तें**
**सहज समाधि निरुपाधि निरबही है ।।३।।**

**ऐसेउ अगाध बोध रावरे सनेह बस**
**बिकल बिलोकति दुचितई सही है ।**
**कामधेनु—कृपा हुलसानी तुलसीस—उर**
**पन—सिसु हेरि मरजाद बाँधी रही है ।।४।।**

(गीतावली रामायण बा० का० ॥८५॥)

एतद् रूपान्तरम् मय निर्मितेषु श्लोकेषु—

**तत्साधु साधु सुजनाः प्रशशंसुरीड्यं यद्राजसंसदि वचो जनको जगाद ।**
**ज्ञात्वा च कौशिकरघूत्तम मोदकृत्तन्नीचा ददाह दहनेन विना नृपालिः ।।**
**रामं जगाद मुदितः किल गाधि सूनु र्ग्राह्या गिरा दुरवगाह गतिर्न राज्ञः ।**
**दृष्टाः श्रुताः बहुनृपा विथयाभिधानाः सत्योनृपो हि जनकोऽवनिजाप्रसूति ।।**
**वैराग्यरागभवभोगसुयोगगोप्ता श्री याज्ञवल्क्यकृपयाऽदृत सिद्धिरेषः ।**
**तप्तो न वै तरणिना शशिना न शीत—श्चित्ते सदा निवहत् सहजं समाधिम् ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ईदृङ्नृपो दुरवगाध विवेक बोध–स्त्वत् स्नेहयन्त्रितमना विकलो विभाति ।**
**हृष्टा कृपा सुरगवी तुलसीश चित्ते मर्यादया निगडिता पणवत्सदर्शम् ।।**

यद्वा विः विभुः तुरीयावस्थायाः स्वामी विष्णुः श्रीरामः, तस्मै सर्वस्वभूतसुतायाः दानमिति विदा, तस्यां विभवे श्रीरामाय दायाम् पुत्रीदानक्रियायाम् ईहा चेष्टा यस्य सः विदेह, विभवे विभून्मे वा श्रीरामाय पुत्रीं दातुं समीहमानस्य योगिराज–जनकस्य मनो व्यापारो द्रष्टव्यः श्री गीतावली रामायणे—

**जनक विलोकि बार बार रघुवर को ।**
**मुनिपद सीस नाय, आयसु असीस पाय**
**एई बात कहत गवन कियो घरको ।।**

**नींद न परति राति, प्रेम पन एक भाँति**
**सोचत सकोचत बिरंचि हरिहरको ।**
**तुम्हतें सुगम सब देव देखिबे को अब,**
**जसहंस किए जोगवत जुग पर को ।।**

**ल्याये संग कौसिक, सुनाए कहि गुनगन**
**आए देखि दिनकर-कुल-दिन करको ।**
**तुलसी तेऊ सनेह को सुभाउ बाउ मानो**
**चलदल को सो पात करै चित चरको ।।**

(गीतावलीरामायण बालकाण्ड ।।६७।।)

एतद्रूपान्तरम्—

**दर्शं दर्शं किल रघुवरं योगिराजो विदेहो**
**नामं नामं चरण युगले मस्तकं गाधिसूनोः ।**
**लब्ध्वानुज्ञामृषिवरमुखादाशिषश्चाप्यमोघा यानं मनसि कलयन् सद्म श्चक्रे भावमेतम् ।**

**निद्रा रात्रौ न समविषये प्रेम चैव प्रतिज्ञा**
**शोचन् पाद्मा जनपुरभिदो याचमानोऽर्थसिद्धेः ।**
**युष्माकं ते सहज सुभगा दर्शनेऽपि प्रतीपाः**
**सर्वे कामाः मम पणमते ँ हंसपर्णोपमानाः ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सहानीतं रामं कुशिकतनयः श्रावितगुणं
समायातो दृष्ट्वा दिनकर कुलोद्यद्दिनकरम् ।
तदीयस्नेहोऽसौ तरल इव वातैश्च तुलसी विधत्ते मे चित्तं
चलदलदलं चञ्चलमिव ।।

स एव विदेहो वैदेहः, अथवा वेदस्य विशेषतो वेदान्तभागस्य ज्ञानकाण्डस्य प्रतिपाद्योऽयं वैदः ब्रह्ममयो भगवान् श्रीरामः तस्मिन् वैदे श्रीरामे ब्रह्मणि जिज्ञास्ये ईहा जिज्ञासा रूपा चेष्टा यस्य स वैदेहः । श्रीरामं कोटिकोटिकन्दर्परमणीयं सौमित्रिसेवितम् वीक्ष्य विदेहराजो विस्मृतवेदान्तसिद्धान्तः परमेश्वरपदपद्मप्रेम– सम्प्लावितशान्तस्वान्तः कौशिकं प्रति जिज्ञासते । तद्यथा श्रीमद्रामायणे वाल्मीकीये अत्र पञ्चमि श्लौकैः समेषां पाङ्क्तकर्मणां नियन्तारं पञ्चमपरमपुरूषार्थविषयं शतशतपञ्चबाणसुन्दरं प्रपञ्चातीतं प्रभुं श्रीरामं प्रति कियती विद्वन्मनोरमा जिज्ञासा—

इमौ कुमारौ भद्रंते देवतुल्यपराक्रमौ ।
गजतुल्यगती वीरौ शार्दूलवृषभोपमौ ।।

पद्मपत्र विशालाक्षौ खड्गतूणीधनुर्धरौ ।
अश्विनाविव रूपेण समुपस्थितयौवनौ ।।

यदृच्छयेव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ।।

वरायुधधरौ वीरौ कस्य पुत्रौ महामुने ।
भूषयन्ताविमं देशं चन्द्रसूर्याविवाम्बरम् ।।

परस्परस्य सदृशौ प्रमाणेङ्गितचेष्टितैः ।
काकपक्षधरौ वीरौ श्रोतुमिच्छामि तत्वतः ।।

(बा० रा० १-५०,१७-१८-१९-२०-२१)

इत्थमेव पञ्चभिरेव (चौपायीभिः) श्रीरामचरितमानसे जनको जिज्ञासाञ्चक्रे—

कहहु नाथ सुन्दर दोउ बालक । मुनिकुल तिलक कि नृपकुल पालक ।।
ब्रह्म जो निगम नेति कहि गावा । उभय वेष धरि की सोइ आवा ।।
सहज विराग रूप मन मोरा । चकित होत जिमि चन्द चकोरा ।।
ताते प्रभु पूछऊँ सति भाऊ । कहहु नाथ जनि करउ दुराऊ ।।
इन्हहि विलोकत अति अनुरागा । बरबस ब्रह्म सुखहिं मन त्यागा ।।

(मानस १-२१६,१-२-३-४-५)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपान्तरम्—

ब्रूहि कौशिक कस्यस्तो बालकौ दौ च सुन्दरौ ।
तिलकौ ऋषिवंशस्य किं नृपान्वयपालकौ ।।
नेति नेति तु यद् ब्रह्म कथयन् निगमो जगौ ।
किम् तद् वेषद्वयंधृत्वा आगतं वद कौशिक ।।
निसर्गतस्तु वैराग्यरूपं मे मानसं प्रभो ।
स्थगितं चात्र सम्मूढं चकोर इव चन्द्रके ।।
तस्माद् पृच्छामि सद्भावात् रहस्यञ्चात्र कौशिक ।
नाथ ब्रूहि कृपां कृत्वा मैतद् गोपय गोप्यवित् ।।
एतौ पश्यन् महाभागावनुरक्तं मनो मम ।
अभ्यस्तपूर्वं ब्रह्मसुखं समात्याक्षीद्बलादहो ।।

तथाभूतो वैदेहः आसाञ्चक्रे अत्र प्राञ्चः ब्राह्मणानांकृते आसनव्यवस्थाश्चक्रे इति व्याचक्षते किन्त्विदमनुचितं यतो हि व्याकरणतन्त्रे आसनपर्यायरूपेण आसा शब्दस्य प्रयोगो न मिलति । वस्तुतस्तु आसाञ्चक्रे इति न पदद्वयम्, अत्र हि 'आस' उपवेशने इतयस्मात् धातोः परोक्षार्थे लिट्लकारे 'दयायासश्च' इत्यनेन कृञोऽनुप्रयोगे आत्मनेपदे आसाश्चक्रे, ब्रह्मविद्याजिज्ञासुः सन् सद्गुरुं प्रतीक्षमाणो जनकः उपसत्तुं समुपविवेशेति हार्दम् । ह निश्चयेन अथ अनन्तजन्मनां पुण्यपुंजे समवेते सति याज्ञवल्क्यः ब्रह्मविद्वरिष्ठः आवाज आजगाम ।

विदेहः सम्पूज्य तं याज्ञवल्क्यं तदागमनकारणं ज्ञातुकामः पप्रच्छ—याज्ञवल्क्य ! किमर्थमचारीः, अत्र गमनार्थक चरधातोः लुङ्लकरे मध्यमपुरुषैकवचने रूपम् । गमनार्थो हि चरधातुः चरगतिभक्षणयोरित्यनुशासनात् । त्वं किं प्रयोजनकः सन् अत्रागमः प्रायेण राज्ञः पार्श्वे आगमने ब्राह्मणानां प्रयोजनद्वयं भवति बुभुक्षुस्वभावानां सकामानां पशवः मुमुक्षुप्रकृतीनां निष्कामानां ब्रह्मसिद्धान्तजिज्ञासा । मम पार्श्वे रागविरागयोः भोगयोगयोश्चापि प्रवृत्तिनिवृत्तिलक्षणयोरपि धर्मयोरेकत्र समुपलब्धेः इदमेव स्पष्टयति । पशूनिच्छन् पशुशब्दोऽत्र भोग्यधनस्योपलक्षणं यद्वा अनित्यानां भोग्यपदार्थानामुपलक्षणं च, अथवा अण्वन्तानि अणुः सूक्ष्मः अन्तः निर्णयः निष्कर्षो वा येषां ते अण्वन्ताः वेदार्थदर्शनप्रकरणविशेषाः तान् अण्वन्तान् । इति शब्दोऽत्र प्रश्नपरिसमाप्तिसूचकः । सः याज्ञवल्क्य उवाच–सम्राट् ! उभयमपि तात्पर्यमेतत्, न खलु ब्राह्मणःकिमपि स्वार्थमिच्छति निष्किञ्चनत्वात् । वसुन्धरायाः सर्वेषां स्वानामुपरि तस्यैवाधिकृतत्वात्,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मात् सम्राट् पशून्नेच्छामि, स्वाश्रमवासिनां भरणपोषणाय अण्वन्तसिद्धान्तान् स्वविदितानपि त्वया सह चर्चा व्याजेन निर्णीय त्वदर्थम् इति याज्ञवल्क्यीयं हार्दम् ।।श्रीः।।

अथ वागवच्छिन्नं ब्रह्मनिरूपयति—

**यत्ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनिरब्रवीद्वाग्वै ब्रह्मेत्यवदतो हि किँ स्यदित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां नमेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति सवै नो ब्रूहि याज्ञवल्क्य । वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत । का प्रज्ञता याज्ञवल्क्य वागेव सम्राडिति होवाच । वाचा वै सम्राट् बन्धुः प्रज्ञायत ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः–**

**सूत्राण्यनुव्याख्यानानि व्याख्यानानीष्टँ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट् प्रज्ञायन्ते वाग्वै सम्राट् परमं ब्रह्म नैनं वाग्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानाप्येति य एवं विद्वानेतदुपास्ते । हस्त्यृषभँ सहस्रं ददामीति होवाच जनको वैदेहः । स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।। २ ।।**

कश्चिदाचार्यः यत् किमपि अब्रवीत् तद् वयं शृणवाम, अनन्तरं त्वां किमपि उपदिशाम । जनकः प्रोवाच–शलिनस्य पुत्रः शैलिनिः मां वाग् वै ब्रह्म इत्यब्रवीत् । याज्ञवल्क्य समाक्षिपत्–अयमुपदेशस्तु तथैवापूर्णो यथा कश्चित् मातृमान् पितृवान् आचार्यवान् इति ब्रूयात्, तत्र मातरि पितरि आचार्ये च देवताया एकदेशता कदाचित् मृतायां मातरि मृते वा पितरि ऊपरतेचा चार्ये तत्सत्वस्य चाक्षतेः नेदं पूर्णं ब्रह्म । एवमेव कस्यचिद् मूकस्य पार्श्वे वागभावेऽपि तज्जीवनस्य तथैवोपलब्धेः, एवमिदं ब्रह्मणः एकपादेति । पादशब्दोऽत्र अंशवाची अर्थात् वाक्शक्त्यावच्छिन्नं ब्रह्म एकविभूतिविशिष्टशक्त्यवछिन्नं परिछिन्नतयोपास्यं तस्मादिदं न समग्रं समग्रोपासना तु सकलोपाधिविवर्जितस्य सर्वशक्तिमतः परमात्मनः । भवतु, किं शैलिनिस्तुभ्यमायतनादि-कमपि समब्रवीत् ? न मे इति जनकराजः प्रोवाच । याज्ञवल्क्यः अवदत्–वैनिश्चयेन तस्य वागवच्छिन्नब्रह्मणः वागेव आयतनं शरीरम् । ननु वागेव ब्रह्म वागेव शरीरमिति कथम्, एकस्मिन्नेव ब्रह्मणि विरुद्धधर्मद्वया–वच्छेदकता ? इति चेत् उच्यते–वाग् वै ब्रह्म इत्यत्र द्रोणोब्रीहिरितिवत् अवच्छेद्यावच्छेदक –भावेनान्वयः । तथाहि वाग्रूपं यच्छक्त्यात्मकं वस्तु तदवच्छिन्नं ब्रह्म, यद्वा नीलोघटइतिवत् अभेदसंबन्धे वागभिन्नं ब्रह्म एवं अभेद संसर्गावच्छिन्नवाक्त्वनिष्ठप्रकारतानिरूपितब्रह्मत्वावच्छिन्न-

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ब्रह्मनिष्ठविशेष्यताकशाब्दबोधः । प्रकृते अवच्छेदिकायामेव वाचि तदायतनत्वभावनम् । आकाशः प्रतिष्ठा प्रतितिष्ठति यस्यां तथाभूता वाग् आकाश एव प्रतितिष्ठति उच्चरितानुच्चरिता वा, अतएव गौतमः "शब्दगुणकमाकाशमिति व्याजहार" । अध्यात्ममपि श्रोत्रत्वावच्छिन्नाकाश एव तदुपलब्धेः वधिरे तथात्वाभावे तस्याप्यभावदर्शनात् । इयं वाक् प्रज्ञा प्रज्ञायते यया सा प्रज्ञा तदेवोपपादयति,—हे सम्राट् ! वाचैव ऋगादयो चत्वारो वेदाः, पुराणेतिहासं, षड्वेदाङ्गानि, सर्वोपनिषदः, काव्यानि, सूत्राणि, भाष्याणि सर्वाण्येव प्रकर्षेण ज्ञायन्ते एनत् वागवच्छिन्नं मत्वैव परब्रह्मेति भावेनोपासीत । एवमुपासीनं सर्वाणि भूतानि सेवन्ते, देवा अपि अस्मै बलिं हरन्ति क्षरन्ति सर्वान् कामान्, अयं देवो भूत्वा परलोकं भुंक्ते इति सारार्थः ।।श्रीः।।

अथ उदङ्कोक्तां सफलां प्राणोपासनां वर्णयति—

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवानब्रूयात्तथा तच्छौल्बायनोऽब्रवीत्प्राणो वै ब्रह्मेत्यप्राणतो हि कि्ँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता याज्ञवल्क्य प्राण एव सम्राडिति होवाच प्राणस्य वै सम्राट् कामायायाज्यं याजयत्यप्रतिगृह्यस्य प्रतिगृह्णत्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट् कामाय प्राणो वै सम्राट् परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ्ँ स हस्रं ददातीतिहोवाच वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।। ३ ।।**

यः कश्चित् अब्रवीत् आचार्यः तदाकर्णयेम । शल्वस्य पुत्रः शाल्वायनः उदङ्कः **प्राणोवैब्रह्म** इत्यब्रवीत् । इदमप्येकपाद एक विभूतिविशिष्टम् , का विभूतिः ? ब्रह्मणः प्रियमित्येनदुपासीत, प्रियता प्रियत्वं हि ईश्वरस्य आनन्दमात्रा, अतएव तत्कामाय यजन्ति, यां यां दिशं यान्ति तत्र तत्र निजवधं प्रति आशङ्कन्ते, तस्मै सर्वाणि भूतनि कल्याणं क्षरन्ति प्राणोपासकः देवो भूत्वा देवानप्येति देवेषु प्रलीनो भवति, एनं प्राणो न जहाति, किन्तु नेयं समग्रोपासना । इतोऽपि सूक्ष्मतरं किमपि पुनर्जिज्ञासते जनकः- ब्रूहि भगवन्, विद्यामहत्वं सूचयति हस्त्यूषभं गोसहस्रं दास्यामि । हस्तिन इव ऋषभाः जायन्ते यत्र तादृक् । याज्ञवल्क्यः प्रत्याचख्यौ-यावत् शिष्यं न समनुशिष्येत् तावत् शिष्यात् किमपि ना हरेत् इति । मम याज्ञवल्क्यस्य पिता अमन्यत् जानातिस्म

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

माञ्चाववोधितवान् । मन धातुरत्र अन्तर्भावितण्यर्थः, तस्मात्वामननुशिष्यः त्वत्तो न किमपि जिहीर्षामीति तात्पर्यम्। यथोक्तं गोस्वामिचरणैः—

**हरइ शिष्य धन शोक न हरई । सो गुरु घोर नरक महँ परई ।।**

(मा०उ० ५८/७)

रूपान्तरम् —

**अहृत्वा शिष्य शोकं यो शिष्यानां हरते धनम् ।**
**स गुरुर्घोरनरके पतत्येव न संशयः ।।**

ननु कथं याज्ञवल्क्यो नानुशास्ति जनकम् ? अत्रोच्यते– जनको हि आचार्यसेवी तस्यपार्श्वे अनेके महाश्चर्याचार्याः आगच्छन्ति, तेभ्यः सः किमपि किमपि विकारहितं वस्तु लभते । आचार्याणां परस्परं विप्रतिपन्नानां सत्वात् बुद्धेरप्यव्यवसायित्वम् अव्यवसायात्मकत्वे च तस्याः समाधौ प्रवेशानवसरात्, तदसत्वे ब्रह्मविद्यायां चानधिकृत्वात् पूर्वं तन्मतनिराशस्यैवावश्यकत्वात् । यथोक्तं श्रीगीतासु—

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ।**
**बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ।।**

(गी० २/४१)

**भोगैश्वर्यप्रसक्तानां तयापहृतचेतसाम् ।**
**व्यवसायात्मिका बुद्धिःसमाधौ न विधीयते ।।**

(गी० २/४४)

एवमेव त्वाक् प्राणाद्युपासनासु विप्रतिपद्यमानायाः जनकराजबुद्धेः विप्रतिपत्तिनिराचिकीर्षया ब्राह्मणेऽस्मिन् षण्णामप्याचार्याणां मतानि निराचिकीर्षुःपूर्वम् तदुपासनानाम् एकांशत्वन्यूनत्वप्रदर्शनेन जनकराजं ताभ्यो विरिरमयिषुः खण्डनमेवावलम्बते। पूर्वं अतत्त्वोपदेशश्च दक्षिणाग्रहणं पापं मन्यमानः प्रत्युपासनावसानं, जनकेन प्रलोभ्यमानोऽपि पितृवचनं स्मरति महतः समादरात् इति एतस्य ब्राह्मणस्य सारः । श्रुतिविप्रतिपन्ना हि बुद्धिः स्थिरा भवति । स्थिरायाञ्च तस्यां हि ब्रह्मविद्यायाः स्थिरत्वौचित्यं, यथोक्तं भगवता श्रीगीतायाः द्वितीये—

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।**
**तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ।।

(गी० २/५२-५३)

एवं चक्षुरादिष्वप्यूह्यम् ।

अथ चाक्षुषब्रह्मवर्णनं निरूपयति—

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्य ब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्वार्ष्णोऽब्रवीच्चक्षुर्वै ब्रह्मेत्यपश्यतो हि कि ँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनतदुपासीत का सत्यता याज्ञवल्क्य चक्षुरेव सम्राडिति होवाच चक्षुषा वै सम्राट् पश्यन्तमाहुरद्राक्षीरिति स आहाद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट् परमं ब्रह्म नैतं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ ँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पितामेऽमन्यत नाननुशिष्य हरेतेति ।।४।।**

चक्षुः तदवच्छिन्नदेवता, सत्यमेतत् स्वरूपं एतेन दृश्यमानं सत्यत्वेनोपलभ्यते शेषं पूर्ववत् ।।श्रीः।।

अथ श्रोत्रब्रह्मणोपासनां निर्वक्ति—

**यदेव ते कश्चिदब्रवीत्तच्छृणमेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तद्भारद्वाजोऽब्रवीच्छ्रोत्रं वै ब्रह्मेत्यशृण्वतोहि कि ँ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य श्रोत्रमेवायतनमाकाशः प्रतिष्ठाऽनन्त इत्येनदुपासीत काऽनन्तता याज्ञवल्क्य दिश एव सम्राडिति होवाच तस्माद्वै सम्राडपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छत्यनान्ता हि दिशो दिशो वै सम्राट् श्रोत्र ँ श्रोत्रं वै सम्राट् परमं ब्रह्म नैन ँ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभ ँ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।।५।।**

गर्दभीविपीतः दर्गभी माया तां विविच्य ततो व्यपैति भगवच्चरणारविन्दशरणं यस्तथाभूतः, अकारस्य छान्दसोलोपः, कर्तरिक्तः । भारद्वाजः भरद्वाजस्य गोत्रापत्यम् ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रोत्रं तदुपलक्षितदिक्त्वावच्छिन्नं सोपाधिकं ब्रह्म आकाशः हृदयाकाशः, प्रतिष्ठा अनन्ता इमे शब्दाः । यथोक्तं व्याकरणमहाभाष्ये श्री पतञ्जलिना बृहस्पतिरिन्द्राय दिव्यं वर्षसहस्त्रं शब्दपारायणं प्रोवाच नांन्तं जगाम शब्दानां (पा०म०प०अ० १) ।।श्रीः।।

अथ जाबालोक्तमनोब्रह्म सफलं वर्णयति—

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयातथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किँ्स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे ऽब्रवीदित्येक पाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य मन एवायतनमाकाशः प्रतिष्ठाऽऽनन्द इत्येनदुपासीत का आनन्दता याज्ञवल्क्य मन एव सम्राडिति होवाच मनसा वै सम्राट् स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ् सहस्त्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।।६।।**

जबालायाः अपत्यं पुमान् जाबालः । मनसोऽपि आकाशः प्रतिष्ठा, आनन्दः स्वरूपं, स्त्रियां प्रतिरूपः पुत्रः अभिहार्यते मनः संकल्पेन आनन्दोऽनुभूतये । हरति प्रापयति ददाति आययति इति हृदयं, स्थितिरेतस्य स्वरूपं सर्वाणि भूतानि हृदय एव सूक्ष्मतः प्रविष्टानि प्रतिष्ठितानि ।।श्रीः।।

**यदेव ते कश्चिदब्रवीत्तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान्पितृमानाचार्यवान्ब्रूयात्तथा तच्छाकल्योऽब्रवीद्धृदयं वै ब्रह्मेत्यहृदयस्य हि किँ् स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मे ब्रवीऽदतयेकपाद्वा एतत्सम्राडिति स वै नो ब्रूहि याज्ञवल्क्य हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता याज्ञवल्क्य हृदयमेव सम्राडिति होवाच हृदयं वै सम्राट् सर्वेषां भूतानामायतनँ् हृदयं वै सम्राट् सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट् परमं ब्रह्म नैनँ् हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभँ् सहस्त्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ।।७।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मन्त्रस्तु संबन्धेएव क्रोडीकृतः सारांशस्तु कारिकासु—

जनकं षट् समागत्य षोढावै ब्रह्मभावनाम् ।
वाचि प्राणे दृशि श्रोत्रे मनोहृदययोर्जगुः ।।

जित्वा शैलिनि रित्याह वाग् वै ब्रह्मसमाश्रितः ।
तद्व्याप्यत्वात् सोपधित्वात् याज्ञवल्क्येन खण्डितम् ।।

उदङ्कःप्राण इत्याह प्राणो वै ब्रह्म साल्वजः ।
खंडितं याज्ञवल्क्येन व्याप्योपाधित्वयुक्तितः ।।

वर्कुः चक्षुषि वार्ष्णोऽथ चक्षुर्वै ब्रह्म चोत्तमान् ।
व्याप्योपाधित्वयुक्त्या तत् याज्ञवल्क्यो निराकरोत् ।।

गर्दभीपीतकः कर्णे श्रोत्रं वै ब्रह्म चादरात् ।
उपाधेरेकदेशित्वात् निराचक्रे महर्षिणा ।।

सत्यकामेन चाप्युक्तं मनो वै ब्रह्म इत्यथ ।
आनन्दोपाध्यवच्छेदात् दूरापास्तं महर्षिणा ।।

हृदये ब्रह्म शाकल्यः हृदयं वै ब्रह्म चाब्रवीत् ।
व्याप्यत्वात् स्थित्युपहितं याज्ञवल्क्यस्तदाक्षिपत् ।।

एता षड्भावनाः षट्सु यद्यपि श्रुतितः श्रुताः ।
अपूर्णत्वात् तथाप्येताः सोपाधित्वादपाकृताः ।।

एक भावेन नैवेष्टाः श्रुतीनां ब्रह्म भावना ।
तस्माद् षडपि प्रत्युक्ता सर्वभावसमृद्धये ।।

उपास्यं सर्वभावेन सर्वोपाधिविवर्जितम् ।
पूर्णं सर्वमयं ब्रह्म श्रुतीनां हार्दमित्यदः ।।

एवं संक्षिप्य सारांशः यथा बुद्धिविवेचितः ।
षडाचार्यब्राह्मणस्य प्रीतये श्रीखरद्विषोः ।।श्रीः।।

इति बृहदारण्यकोपनिषदि चतुर्थाध्याये श्रीराघवकृपाभाष्येषडाचार्यं नाम प्रथमं ब्राह्मणम् ।

।। राघवः शन्तनोतु मे ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अथद्वितीयब्राह्मणम् ।।

### मङ्गलाचरणम्

निसर्गनीलोत्पलदिव्यदेहं रक्षोवधेऽहं गुणशीलगेहं ।
रामं प्रभाव्रीडितकोटिकामं सीताद्वितीयं कलये द्वितीये ।।

उपसन्नमथो गतज्वरं प्रणतं मैत्रसुतापदेः पदं ।
श्रुतिसारविवित्सुरादरात् पितरं भूमिभुवः स्मरामितम् ।।

अथद्वितीये षडाचार्योपदिष्टोपासनास्वेकभावतापरिच्छिन्नतां विभाव्य ताभ्यो विरज्यमानो जनकश्चणकेभ्य इव कनकं जिघृक्षुः श्रोत्रियं ब्रह्मनिष्ठं याज्ञवल्क्यं समुपसर्त्तुं समीहते "तद् विज्ञानार्थं सगुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं" (मुण्डक-१/२/१२) इति श्रुतेः—

**ॐ जनको ह वैदेहः कूर्चादुपावसर्पन्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानु मा शाधीति स होवाच यथा वै सम्राण्महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीतैवमेवैताभिरुपनिषद्भिः समाहितात्माऽस्येवं वृन्दारक आढ्यः सन्नधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसीति नाहं तद् भगवन्वेद यत्र गमिष्यामीतयथ वैतेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ।।१।।**

अथ विदेहराजो जनकः कूर्चात् कूर्चवत् वर्तुलाकारात् निजासनात् अवासर्पन् उत्थाय निकटं गत्वा तत् पदपाथोरुहयोः प्रणिपतन् उवाच निवेदयामास हे याज्ञवल्क्य ! परमाचार्य ते तुभ्यं नमोऽस्तु, मा मां अनुशाधि अनुपमं मोक्षैकसारं ब्रह्मशाधि समुपदिश । याज्ञवल्क्य उवाच–हे सम्राट् ! यथामहान्तमध्वानं मार्गम् एष्यन् गमिष्यन् स्थले रथं जले नावं समाददीत स्वीकरोति तथैव प्रवृत्तिलक्षणाभिः निवृत्तिलक्षणाभिश्च नवरूपाभिः उपनिषद्भिः समाहितात्मा संयुक्तकार्यकारणः असि, अत एव त्वं वृन्दारकः पूज्य आढ्यः धनवान् ज्ञान सम्मानाभ्यां परिपूर्णः एवम् अधीताः वेदाः येन सोऽधीतवेदः अत एव पूज्यः, उक्ताः उपनिषदः ब्रह्मरहसयश्रुतयः यस्मै येन वा तथाभूतस्त्वं किमिदं विचारयसि । यत् इतः संसारात् विमुच्यमानः मुमुक्षुः क्व गमिष्यसि किं ते गन्तव्यमिति तदन्तरेण गमनमपि हास्यास्पदं निरर्थकञ्च । जनकः प्रोवाच—हे भगवन् ! तत् अहमपि न वेद । याज्ञवल्क्यः प्राह—इदमेवष डाचार्योपदेशव्यतिरिक्तम् अभिनवं ते तुभ्यं वक्ष्यामि प्रकाशयिष्यामि इति ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथदक्षिणनेत्रस्थपुरुषं परिचाययति—

**इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन्पुरुषस्तं वा एतमिन्धँ्सन्तमिन्द्र इतयाचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ।।२।।**

जनक ! गन्तव्यं निकटमस्तीतिइति माभेतव्यं, यः अयं दक्षिणे अपशव्ये अक्षन् अक्षिणी अत्र "सुपां सुलुक्" इत्यनेन ङिलोपः, उत्तरपदपरत्वात् नकारलोपः निषेधश्च। दक्षिणे नेत्रे योऽयं पुरुषः स इन्धोनाम्ना प्रसिद्धः। इन्धयति दीपयति भक्तहृदय प्रेमाणं यस्तथाभूतः,एवं सन्तं तमिन्धं पुरुषम् इन्द्र इति व्याचक्षते। कथं विपरीतनाम्ना व्याहरन्ति परोक्षेण ? अत आह–देवाः प्रत्यक्षद्विषः प्रत्यक्षं न मन्यन्ते द्विषन्ति, परोक्षप्रियाः परोक्षं प्रियं येषां तथा भूता इव भवन्ति ।।श्रीः।।

एवमेव इन्द्र इति व्याह्रियमाणो कोसलेन्द्रो भगवान् रामः यथा दक्षिणे नेत्रे तथैव तत्पत्नी भवगती सीता पारोक्ष्येण इन्द्रपत्नी विराडन्ननाम्ना परिकीर्तिता तां वर्णयति—

**अथैतत् वामेऽक्षणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष सँ्स्तावो य एषोऽन्तर्हृदय आकाशोऽथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहित पिण्डोऽथैतयो रेतत्प्रावरण यदेतदन्तर्हृदये जालकमिवाथैनयोरेषा सृतिः संचरणी यैषा हृदयादूर्ध्वा नाड्युच्चरति यथा केशः सहस्रधा भिन्न एवमस्यैता हिता नाम नाड्योऽऽन्तर्हृदये प्रतिष्ठिता भवन्त्येताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवत्यस्माच्छारीरादातमनः ।।३।।**

एवमेव वामेऽक्षणि वामनेत्रे एतस्य पत्नी प्रत्यक्षतः इन्द्राणी परोक्षतश्च सीता सैव विराड्रूपा, तयोः विराडन्नयोः एष संस्तावः अन्तर्हृदयाकाशः तदेव एतयोः इन्द्रेन्द्राणीदम्पत्योः अन्नं भक्षणीयं लोहितं यत् मांसपिण्डं हृदयनामकं तदेव एनयोः दम्पत्योः प्रावरणं प्रावारः अनेनैवावृतौ न दृश्येते। जालकमिव यस्तन्तु समुदायः तदेव एतयोः श्रुतिः मार्गः केशा इव सहस्रधा प्रविभक्ताः ता एव हिताभिधाना नाड्यः एताभिः इदं युगलं स्रवत्यास्रवति च अतएव अयं शारीरात् जीवात्मनः प्रविविक्ताहारतरः अतिशयेन प्रविविक्तः आहारः यस्य स प्रविविक्ताहारः तस्मादपि सूक्ष्मतरतया अयं प्रविविक्ताहारतरः सूक्ष्मतर भोजनसेवी ।।श्रीः।।

अथ प्राणात्मभूतविदुषः सर्वज्ञतां जनकस्याभयप्राप्तिश्चनिरूपयति—

**तस्य प्राचीदिक् प्राञ्चः प्राणा दक्षिणा दिग् दक्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिगुदञ्चः प्राणा ऊर्ध्वा दिगूर्ध्वाः प्राणा अवाची दिगवञ्चः प्राणा ! सर्वादिश५ सव्रे प्राणाः स एष नेति नेतयशएत्मागृह्यो न**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**हि गृह्यते ऽशीर्यो न हि शीर्यते ऽसङ्गो नहि सज्यतेऽसितो न व्यथते न रिष्यत्यभयं वै जनक प्राप्तो ऽसीति होवाचः याज्ञवल्क्यः । स होवाच जनको वैदेहोऽभयं वेदयसे नमस्तेऽस्त्विमे विदेहा अयमहमस्मि ।।४।।**

एवं पूर्वादयो दिशः तस्यतत्तन्नामप्राणसंज्ञां भजन्ते सर्वात्मकत्वात् । एष आत्मा ग्रहीतुमशक्यत्वात् अगृह्यः, शरणानर्हत्वात् अशीर्यः, अनासक्तत्वत्वादसङ्गः, अयं ह्रासं न गच्छति अतः अभयं भयवर्जितं परमात्मदासत्वात् हे जनक ! त्वमभयं प्राप्तः इमं सेव्यत्वेनात्मानमनुभव इति याज्ञवल्क्यः उवाच । जनकः प्रत्युवाच त्वा त्वामपि अभयं गच्छतात् परमात्मासेवकत्वेन स्वीकरोतु । हे याज्ञवल्क्य ! ते तुभ्यं नमः, यो नः अभयं वेदयसे ज्ञातयसे एतस्य परमाविनाशि ब्रह्मज्ञानस्य निष्क्रये गवां सहस्रैः किम् , इमे विदेहाः समस्तमिथिलादेशः अयमहं मिथिलाधिपतिरपि अद्यप्रभृति त्वदीय एव इति सर्वतो भावेन याज्ञवल्क्यायात्मानं समर्पयति ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि चतुर्थाध्याये श्रीराघवकृपाभाष्ये जनकोपसत्तिर्नाम द्वितीयं ब्राह्मणं सम्पूर्णम् ।**

**।। राघवः शन्तनोतु मे ।।**

## ।। तृतीयब्राह्मणम् ।।

**अतिशीपुष्पसंकाशं कृपाकल्लोलिनीनिधिम् ।**
**सौमित्रिसेवितं रामं स्तुये सीतातृतीयकम् ।।**

द्वितीये जनकोपसत्तिर्वर्णिता, तस्मा उपसन्नाय सरहस्यमात्मतत्वं वर्णनीयं वर्तते, **खल्वनुपसन्नाय वर्णयेदात्मतत्वम्** इति शिष्टाचारात् । ननु आत्मशब्दोऽत्र किमभिप्रायकः प्रत्यगात्माभिप्रायः उताहो परमात्माभिप्रायः ? उभयार्थ इति ब्रूमः, कथमिति चेत् उच्यते—शाब्दिकनये द्वेधा हि व्याचक्षते आत्मपदार्थः प्रथमं सातत्यगमनार्थक अत् धातोः, द्वितीयं व्यापनार्थात् आप्लृ धातोश्च, उभयत्रापि प्रदोषरादित्वात् साधुत्वमामनन्ति । प्रथमे कल्पे अतति सततं गच्छति जननमरणरूपे संसारप्रपंचे व्यवधानमन्तरेण संसरन् गतागतं विधत्ते । द्वितीयम् आप्नोति सर्वं व्याप्नोतीत्यात्मा एषः पक्षः सर्वेश्वरपरकः । नन्वात्मशब्दस्य विपुलार्थत्वे मानाभावः ? इति चेन्न, परमात्मेति परमशब्दस्य विशेषणतैव सूचयत्यनेकार्थकत्वमात्मनः, सत्यामेकार्थतायां व्याभिचाराभावेन परमशब्दस्य विशेषणतैव नोपपद्येत "सम्भवव्यभिचाराभ्यां स्याद् विशेषणमर्थवत्" एवमात्मशब्दस्य जीवात्मपरकत्वव्यावृत्तये परमशब्दस्य विशेषणता सुसंगता । परमश्चासौ आत्मा इति

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परमात्मा, जीवात्मनो हि कोटिकोटिप्राक्तनजन्मक्रूरकर्मजनित कल्मषकषायदूषिततया न पूज्यत्वम् , परमात्मनस्तु सर्वोपाधिविवर्जितविशुद्धबोध विग्रहमयस्वरूपतया पूज्यमानत्वात् "सन् महत् परमोत्तमोत्कृष्टा पूज्यमानैः" इति सूत्रेण समासः **अनादित्वात् निर्गुणत्वा त् परमात्मायमव्ययः** (गीता १३-३१) इति स्मृतेः । एवं विद्यमानो हि परमशब्दः विधेयान्वितः विशेष्यम् पूज्यमानतया संयोज्य ततोऽपूज्यं जीवात्मानं व्यावर्तयति । साम्प्रतं हि आत्मतत्वस्य परमात्मभूतस्य तत्वं निरूपयति —

**जनकँ् वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इत्यथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्चाग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तँ् हास्मै ददौ तँ् ह सम्राडेव पूर्वं पप्रच्छ ।।१।।**

ह निश्चयेन, वैदेहं विदेह एव वैदेहः तं द्वितीयब्राह्मणे जनकोपसत्तिर्वर्णिता नमस्तेऽस्त्विमे विदेह । अयमहमस्मि (वृ०उ० ४.२-४) इत्यादिना । अनन्तरं गतो याज्ञवल्क्यः ततश्च प्राप्ताभये जनके पूर्वापेक्षया समधिकविदेहता आगता । अयमर्थोऽण् प्रत्ययेन स्वार्थिकेन द्योत्यते अतिशयेन विदेहः वैदेहः । यद्वा याज्ञवल्क्यागमनेन दास्यमान ब्रह्मविद्यया राजायमनुकम्पितो भविष्यतीति त्रिकालज्ञा श्रुतिः, जनके महर्षेरहैतुकीमनुकम्पां द्योतयितुं छन्दसि बाहुलकबलेन कन् प्रत्यये विषयेऽप्यनुकम्पितार्थे दर्शयत्यण् प्रत्ययकार्यम् । अनुकमम्पितो विदेह वैदेहः तं निजानुकम्पाभाजनं योगिराजजनकं याज्ञवल्क्यः अनाहूतोऽपि जगाम । स इत्थं मेने विचारितवान् यज्जनकस्य विदेहराजस्य समक्षं न वदिष्ये, यतो हि साम्प्रतमयं ब्रह्मवित् निरस्तसकलसंशयः अतो "गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्न संशयाः" इति नियममनुवर्तयिष्यामि । इति जनकस्य न वदिष्ये, इत्यत्र निरस्तसकलकार्यकारककलापतया कर्मत्वाविलक्षणेन षष्ठी । किन्तु अग्निहोत्रे विदेहराजजनकः, याज्ञवल्क्यश्च अग्निहोत्रे अग्निहोत्र सम्बन्धि कस्याँश्चिच्छास्त्रीय-चर्चायां समूदाते "भासनोपसंभाषा-ज्ञान-यत्न विमत्युपमन्त्रणेषु वदः" (पा० अ० १-३-४७) इत्यनेन ज्ञाने सम्पूर्वकवदधातोरात्मने पदे लिट्लकारे प्रथमपुरुषद्विवचने अभ्यासादि कार्ये समुपसृष्टे दीर्घे समूदाते परस्परं संवादं चक्राते इत्यर्थः । तस्मिन्नग्निहोत्र-संवादे जनकेन संतोषितो याज्ञवल्क्यः जनकराजाय वरं ददौ, स जनकः, कामप्रश्नं कामः मुमुक्षा तथैव प्रकरणात् तद् विषयकः प्रश्नः कामप्रश्नः, यद्वा कामः मनश्छन्दं तमनतिक्रम्य प्रश्न इति कामप्रश्नः, अर्थात् याज्ञवल्क्ये समागते यस्मिन् कस्मिन्नपि काले जनको यथेच्छप्रश्नाय याज्ञवल्क्यदत्तेन वरेण पूर्णमधिकृतोऽस्तीति भावः । वव्रे वृतवान् , याज्ञवल्क्यः तं कामप्रश्नरूपं वरं जनकाय ददौ समनुजज्ञौ तं स्वाधिकारं स्मरन् सम्राड् एव योगिराजजनकः ऋषेरिच्छामन्तरेणापि नोपदेक्ष्यन्तमपि याज्ञवल्क्यम् अतिथिक्रियया सम्पूज्य उपदेशानिच्छाप्रस्तावात् पूर्वमेव पप्रच्छ गीप्साञ्चकार ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ पुरुषव्यवहारे समुपयोक्ष्यमाणानामादित्यादि सम्बन्धिनां पञ्चज्योतिषां विषये प्रश्नः । तत्र प्रथम आदित्यज्योतिर्विषये प्रश्नः —

**याज्ञवल्क्य किं ज्योतिरयं पुरुष इति । आदित्यज्योतिः सम्राडिति होवाचादित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीत्यवेमेवैतद्याज्ञवल्क्य ।।२।।**

याज्ञवल्क्य ! इति सम्बोधयति अयं पुरूषः किं ज्योतिः ? किन्नामकं ज्योतिर्यस्य तथा भूतः, एषः स्थूलसूक्ष्मशरीरावयवसंघातावच्छिन्नपुरुषः केन ज्योतिषा युक्तः जगति व्यवहरति, यथा तिमिरमये पथि गच्छन् पथिकः किमपि प्रकाशसाधनमालम्बते, प्रकाशमन्तरेण तमोमयवर्त्मनि तद्गमनासम्भवात्, एवं पुरुषस्य किमवभाषकं, किमिदं ज्योतिः एतस्य कार्यकरणसंघातस्य कोऽप्यवयवविशेषस्तदन्तरवर्ती उताहो तस्माद् व्यतिरिकतम् ? इति जनकजिज्ञासितम् । ब्रह्मविद्वरिष्ठोऽपि विप्रतिपन्नविषये आचार्यप्रमाणमाचक्षते, इति पृष्टः सन् याज्ञवल्क्यः तं सम्राडिति सम्बोधयति । सम्यक् राजते समत्वलक्षणेन ब्रह्मज्ञानेन वा राजते यः सः सम्राड्, इति व्युत्पत्तौ राजृदीप्तौ इति दीप्त्यर्थकराजृधातोः समुपसृष्टात् क्विपि प्रत्यये "व्रश्च भ्रश्च".....इत्यादिना जकारस्य षत्वे जश्त्वे 'मो राजि समः क्वौ (पा०अ० ८/३/२५) इत्यनेन अनुस्वारनिषेधे सम्राड्, त्वमात्मभूतः सन् न कस्यचिदिन्द्रियस्य परतन्त्रः परमात्मपदपद्मदुर्गः तत एव विजितषड्वर्गशत्रुः सम्यग् राजसे । तथापि मां सम्भावयितुं ते प्रश्नः । याज्ञवल्क्य-सदृशस्य ब्रह्मज्ञस्य निरभिमानितैषा शोभत एव । ज्ञानिनो हि निसर्गसिद्धामानित्वादि-सद्गुणसम्पत्तिशालितोपपत्तेः । यथोक्तं नीतौ —

**विद्या ददाति विनयं विनयाद्याति पात्रताम् ।**
**पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ।।**

श्रीमानसेऽपि श्रीयाज्ञवल्क्यस्य विनयमधुरत्वरूपमहात्मलक्षणं स्पष्टमेव । तद्यथा भरद्वाजेन श्रीरामविषयकप्रश्नान् पृष्टः सन् स्मयमान उवाच याज्ञवल्क्यः —

**जाज्ञवलिक बोले मुसुकाई । तुमहि विदित रघुपति प्रभुताई ।।**
**राम भगत तुम मनक्रम बानी । चतुराई तुम्हारि मैं जानी ।।**
**चाहहु सुनै राम गुन गूढ़ा । कीन्हेहु प्रश्न मनहुँ अति मूढा ।।**

(मानस १/४७/२-३-४)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रूपान्तरम् —

याज्ञवल्क्यो भरद्वाजं स्मयमान उवाच ह ।
प्रभुत्वं श्री रघुपतेर्विदितं ते मुनीश्वर ।।
मनसा कर्मणा वाचा रामभक्तस्त्वमुत्तमः ।
अहं विज्ञातवानद्य चातुरीं ते महामते ।।
श्रोतुमिच्छसि रामस्य गुणान् गूढ़ान् द्विजर्षभः ।
तथाप्यकर्षीः प्रश्नांस्त्वं नितरां बनिशो यथा ।।

हे सम्राड् ! आदित्यज्योतिः तथा हि दानं खण्डनं दितिः "दोऽव" खण्डने इत्यस्माद्धातोः भावे क्तिन् प्रत्ययः । एवं नास्ति दितिः खण्डनं तदात्मकम् अल्पज्ञानाभासं यस्यां सा अदितिः अखण्डज्ञानवृत्तिः, यद्वा न विद्यते दितिः खण्डः यस्मिन् सोऽदितिः **सत्यं ज्ञानमनन्तं ब्रह्म** इत्यादि लक्षणलक्षितः अखण्डज्ञानशक्तिबलैश्वर्यवीर्यतेज सम्पन्नः परमेश्वर परमात्मैव **अतिदिद्यौरदितिरन्तरिक्षमदितिर्म्माता सपितासपुत्रः विश्वेदेवाऽअतितिः पञ्चजनाऽअदितिर्ज्जातमदितिर्ज्जनित्वम्** ।। इति मन्त्रवर्णात् । एवम् अदितेः परब्रह्म परमेश्वरात् नेत्रावच्छदेन जातः आदित्यः दित्यादित्येदित्यपत्युत्तरदाण्यः पा. ४-१-८५ इत्यनेन ण्य प्रत्यये अनुबन्ध कार्ये आदित्यः । "चक्षोः सूर्यो अजायत" इति मन्त्रवर्णात् । अदितिर्वा देवमाता भगवच्चक्षुरवतारभूता, तस्यां जातः आदित्यः स एव ज्योतिर्यस्य तथाभूतः । उपपत्तिमाह—अयं पुरुषः आदित्येन ज्योतिषा अत्राभेदे समानाधिकरण्यं ज्योतिर्विशेषणत्वादादित्यस्य ज्योतिषा इत्यत्र करणे तृतीया । एवम् आदित्यरूपेण ज्योतिषा अवभाष्यमानोऽयं पुरुषः अयम् एषः संसारे आस्ते, तिष्ठति । पल्ययते परितः अयते अत्र परितः रकारस्य लकारे पल्ययते सूर्यरूपज्योतिषा प्रकाश्यमानः अव्याहतगतिः सर्वत्र गच्छति । एवम् कराभ्यां कर्म कुरुते कर्तृत्वाभिमानित्वाद्, कर्म फलस्य तत्रैव सत्वेन "स्वदितञितः कर्त्रभिप्राये क्रियाफले" पा०अ० आत्मनेपदम् । एवम् कर्मावसानेविपल्येति प्रलयं याति परमात्मनि, इत्युत्तरेण सन्तुष्टः प्रथमं ज्योतिर्विषये सम्मतिम् आह—हे याज्ञवल्क्य ! त्वदुक्तं समाधानम् एतत् एवमेव इदृशमेव अर्थात् स्वव्यतिरिक्तेनैव सूर्यरूपेण ज्योतिषा जीवो जगति व्यवहरति इति ।।श्रीः।।

अथ चन्द्र ज्योतिषि जिज्ञासते—

**अस्तमित आदित्ये याज्ञवल्क्य किं ज्योतिरेवायं पुरुष इति चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म करुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ।। ३ ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जनकः पुनः पृच्छति—अथ हे याज्ञवल्क्य ! आदित्ये सूर्ये अस्तं प्रकाशोपसंहारलक्षणम् इते प्राप्ते आध्यात्मिकदृष्टौ चक्षुषि वर्तमाने सूर्ये ज्योतिषि विश्रान्ते चक्षुषि रूपदर्शनाक्षमे अयं पुरुषः किं ज्योतिः किन्नामज्योतिरवछिन्नः ? इति पृष्टः सन् याज्ञवल्क्यः प्राह—अयं चन्द्रमा ज्योतिः मनोमयः । उपपत्तिमाह—चन्द्रेण इव ज्योतिषा मनोमयेन सूर्यज्योतिरभावेऽपि पुरुषोऽयं जगति तिष्ठति गमनादिकर्म कुरुते प्रलीयते च एवमेतद् इति कथयन् स्वीकरोति ।।श्रीः।।

अग्निर्ज्योतिविषये प्रश्नः —

**अस्तमित आदित्ये यारुवल्क्य चन्द्रमस्यस्तमिते किं ज्योतिरेवायं पुरुष इत्यग्निरेवास्य ज्योतिर्भवतीत्यग्निनैवायं ज्योतिषास्ते पल्ययते कर्मकुरुते विपल्येतीत्येवमेवैतद्याज्ञवल्क्य ।।४।।**

एवं अस्तङ्गते सूर्ये अस्तङ्गते च चन्द्रे उभयोरभावे अयं पुरुषः किं ज्योतिः किन्नाम ज्योतिष्कः ? इति प्रश्ने अस्य पुरुषस्य अग्निः एव ज्योतिः तेनैव ज्योतिषा समवभासमानः सूर्यचन्द्रज्योतिरभावेऽपि कर्म कुर्वन् प्रलीयते, एवमेतद् इत्युक्त्वा जनकः समाधाने सन्तोषमाह ।।श्रीः।।

अथवाग्ज्योतिर्जिज्ञासते—

**अस्तमित आदित्ये यारुवल्क्य चन्द्रमस्यस्तमिते शान्तेऽगौ किं ज्योतिरेवायं पुरुष इति वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्मकुरुते विपल्येतीति तस्माद्वै सम्राडपि यत्र स्वः पाणिर्न विनिर्ज्ञायतेऽथ यत्र वागुच्चरत्युपैव तत्र न्येतीत्येवमेवैतद्याज्ञवल्क्य ।।५।।**

जनकः पृच्छति—हे याज्ञवल्क्य ! सूर्ये अस्तङ्गते चन्द्रे च निमग्ने, अग्नौ च शान्ते दाहकत्ववर्जिते, अयं पुरुषः किन्नाम ज्योतिष्कः भवति ? उत्तरमाह—त्रयाणाम् सूर्यचन्द्राग्निज्योतिषामभावेऽपि पुरुषो वाग्ज्योतिष्को भवति । तेनैव ज्योतिषा प्रेर्यमाणः कर्म कुर्वाणो लीयते । उपपत्तिमाह—तस्मात् हे सम्राड् ! तस्मादेव हेतोः यत्र यस्मिन् गहने अन्धकारे यत्र स्वः पाणि हस्तोऽपि न विनिर्ज्ञायते न दृश्यते । तथाऽपि यत्र वागुच्चरति उच्चरतीति कर्मकर्तृ प्रयोगः, अत्र हि उच्चार्यमाणयाः वाचः उच्चरणकर्मभूताया अतिशयतां द्योतयितुं वाचः स्वव्यापारस्वातन्त्यात् कर्तुव्यापारस्यचाविक्षणीयत्वेनोपपत्तेः । यथोक्तं दीक्षितेन सिद्धान्त कौमुमद्यां यदाकार्ये सौकर्यं द्योतयितुं कर्तृ व्यापारो नो विवक्षितस्यदा कारकान्तराण्यपि कर्तृ संज्ञां लभन्ते स्वव्यापारे स्वतन्त्रत्वात् । (वै.सि.कौ. क. प्र.) तत्र उपनर्यीति निश्चित्य उपैति । याज्ञवल्क्यः एवमेवैतद् इति स्वसन्तोषमाह ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथात्मज्योतिर्विषये प्रश्नः —

**अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किं ज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवतीत्यात्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति ।।६।।**

एवं वाचि शान्तायां मौनावस्थायां मूकत्वमागते वा पुरुषे आत्मैव प्रत्यगात्मैव ज्योतिः अनेनैव कर्मकुर्वन् प्रलीयते । एवं क्रमेण सूर्यचन्द्राग्निवाचां ज्योतिषां एकैकशः नाशं प्राप्तानां परमार्थतः आत्माभिन्नपरमात्मैवज्योतिः तस्य नित्यसत्वात् अविनाशित्वात् अनुपहितचैतन्यवत्वात् व्यापकत्वाच्च नैवास्य नाशो न वा ह्रासः । यथोक्तं श्रीभगवता —

**न जायते म्रियते वा कदाचि न्नायं भूत्वा भविता वा न भूयः ।**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।**

(गीता २-२०)

**न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।**
**अजोनित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ।।**

(क.उ. १-२-१८)

तस्मादात्मनो ज्योतिष्ट्वम् सार्वकालिकं पारमार्थिकं च परमप्रकाशरूपत्वात् ।

**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।।**

(क.उ.२-२-१५)

यथोक्तं श्रीरामचरितमानसे —

**विषय करन सुर जीव समेता । सकल एकते एक सचेता ।।**
**सबकर परम प्रकाशक जोई । राम अनादि अवध पति सोई ।।**

(मानस १/११७/५-६)

रूपान्तरम् —

**विषयाः करणान्येव देवाः जीवाश्चराचराः ।**
**एकैकस्मादिमे सर्वे भान्ति सँल्लब्धचेतनाः ।।**

**सर्वेषामेव भूतानां यः परमः प्रकाशकः ।**
**रामोऽयोध्यापतिः सोऽसावनादिः परमेश्वरः ।।**

इदानीमात्मस्वरूपं विविच्यते । अत्र विप्रति पद्यन्ते दार्शनिकाः देहात्मबुद्धयश्चार्वाकाः । अतश्चार्वाकमतप्रर्वतकस्तथाकथितबृहस्पतिः प्राह—

**यावज्जीवेत् सुखं जीवेत् ऋणं कृत्वा घृतं पिवेत् ।**
**भस्मीभूतस्य देहस्य पुनरागमनं कुतः ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ईश्वरास्तत्र राजानः व्यवायो मोक्ष एव च ।
स्त्रियः स्वरूपाश्चाप्सरसः निद्रैवात्यन्तिको लयः ।।

स्त्रीव्यवायोत्थितानन्दः समाधिः परिकीर्तितः ।
सशैय्या सा भवेत् स्वर्गः नरकं तद्वियोजनम् ।।

न ज्ञानं न पुनर्जन्म नैव कर्म न च श्रुतिः ।
एवमादीनि वाक्यानि प्रलपन्त्यमनीषिणः ।।

तन्मते प्रत्यक्षमेव प्रमाणम्। वेदास्तु केषाञ्चिद् ब्रह्मणानां रचना, इति समस्तोऽपि जल्पनाप्रपञ्चः इतः प्रागेव त्रिकालज्ञेन भगवता श्रीकृष्णेन आसुरसम्पत्तिनिरूपणे क्रोडीकृतः। तस्माद् भगवदुपेक्षितसिद्धान्तत्वात् निराधारत्वाच्च नैवैतन्मतं विचारकोटावाधेयम्। देहात्मबुद्धिवादस्तु तर्काग्नौ तूलराशिरिव। तथात्वे कस्यचिदेकस्यावयवस्य वैकल्ये आत्मनोऽपि वैकल्यं स्यात् एवं तदनित्यत्वे जीवात्मनोऽप्यनित्यतायां तेषां नाशे तथा चापत्तावात्मनः पुनः कोषे रिक्ते सति तद् रचयितुः कस्यचिद् कल्पनौचित्येन परमेश्वरस्य स्वीकारापत्तौ त्वत् सिद्धान्त एव नाध्यवसीयेत्। एवं देवतिर्यङ्नरादिषु विवेकाविवेकतारतम्ये न देहजनितदोषाणामात्मनि समारोपात् तत्र विज्ञत्वानभिज्ञत्वकामित्व-क्रोधित्वसञ्ज्ञत्वकाणत्वादिदोषभूयस्त्वेन तत्र क्वापि निर्दोषतानापत्तेः। कर्तारमन्तरेण शरीररचनानापत्तौ विप्रतित्तौ च ततिच्छरीरतारतम्यप्रस्तावे पुनः कर्तृकल्पनायां पूर्व उक्तस्यैव दोषस्य वज्रायमाणत्वात्। पत्नीपुत्राद्यात्मवादस्तु तेषामसत्वे शरीरसत्वेनैव कुठारेणौदुम्बरतरूरिवधूलिसात्कृतः। **एवमात्मा हि दारा सर्वेषाम् आत्मा वै जायते पुत्रः** इत्यादि वचनानां सिंहोमाणवक इतिवत् भागलक्षणातो निर्वाहः। एवमेव मनस् आत्मत्वादे उन्मत्तानां मृतत्वापत्तिः, नहि आत्माभावे देहसत्ता। वृक्षादीनामपि मनसोऽसत्वे जीवतत्वानुपलम्भापत्तेः। न च तत्र आत्मैव नास्तीति वाच्यं तस्याभावे तेषां हरितत्वाद्यनुपपत्तेः, आत्मनोऽभावे शवस्य क्षणमपि विकारवर्जितत्वं न दृष्टं किञ्चित्कालानन्तरं तत्र दुर्गन्धाद्यप्युपलभ्यते। नहि आत्मनोऽसद्भावे मृतायां कस्यांञ्चित् योषिति सन्तानोत्पत्तिर्दृष्टा, तथैव अनंगीकारे आत्मसत्तायाः वृक्षेषु फलपुष्पादिदर्शनमप्यनुपपन्नं स्यात्। आत्मसत्तायामेव तेषां शाखाः हरिताः फलपुष्पपल्लववन्तो दृश्यन्ते। नहि कुठारकृत्तस्य वृक्षस्य फलपुष्पपल्लवानि दृश्यन्ते, तस्मात् मनोऽपि नात्मा। अथैन्द्रियात्मवादोऽपि निर्मूल एव। अन्यथा चक्षुराद्यभावे कथं जीवस्य जीवनं स्ताय, मूक बधिरादयो श्रुत्याद्यभावेऽपि जीवन्तो दृष्टाः। आत्मव्यतिरेकेण जीवनासम्भवस्य सर्वेषां निर्विरोधत्वेन स्वीकृतत्वे अनीन्द्रियवतामपि वृक्षाणां जीवनोपलम्भदर्शनात्। तत्र व्यप्तिभंगापत्तेर्दुर्वारत्वात् त्वयापि कोटिकोटिजन्मस्वपि निवारयितुमशक्यत्वात्। वृक्षादीनां जीवनत्वे किं मानमिति चेत्, वृक्षाः प्राणवन्तः हरितशाखाफलपुष्पपल्लवत्वात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यन्नैवं तन्नैवमिति व्यतिरेकगर्भमनुमानमेव प्रमाणम् , छिन्नमूलतरौ पल्लवादीनामनुपलब्धेः, प्रत्यक्षमपि त्वदिष्टप्रमाणम् । अयं बुद्ध्यात्मवादोऽपि न युक्तः, मूर्खादौ तस्या अभावेऽपि जीवनोपलम्भात् जडेषु तदसत्वेऽपि जीवनस्य स्पष्टमुपलब्धेः । अत्र जैनानां नये पुद्गलपदार्थतः सृष्टिः तत्र स्याद्वादस्य विडम्बनया कस्यापि मतस्यानिश्चिततत्वात् सिद्धान्ते निश्चयेन प्राणवत्वात् तैः सह चर्चापि मूर्खताया आमन्त्रणम् । एषां मते गौरपि गर्भिणी वृषभोऽपि गर्भवान्, तेषां सिद्धान्ते कियद् अस्तित्वमिति सुधियो विभावयन्तु । तथागतानां शून्यवादस्यापि इयं दशा तन्मते शून्यात् सर्वं भवति, तर्हि ते आकाशात् आम्रफलं कथं नोत्पादयन्ति ? समस्तचेष्टा शून्ये पुरुषशवे कथं न भाषणादि कथं न चित्रचित्रित नरेण सह न भाषणादि एवं क्षणिकवादोऽपि प्रलाप एव । क्षणे क्षणे अत्मनां विनाशात् पुरानुभूतानां विषयाणां स्मरणानुपत्तेः । न च पूर्वजन्मस्मरणस्य जन्मान्तरेऽपि सत्वान्नदोषः । इति व्व्यम्, तथासतितु समाग्राः पुनर्जन्मवादः तर्हि क्षणे क्षणे पुनर्जन्मापेक्षया यथाकालं मातृजठरे गर्भधारणसिद्धान्त एव वरः, क्षणिकत्ववाद कल्पने अविरतजननमरण-कल्पनायामनवस्थादोषः । विज्ञानवादे तावत् भवतां मते जडत्वं चेतनत्वं चेत् अस्मन्मतं जडत्वं चेत् तत्र विज्ञानानापत्तिः । एवं नास्तिकमतं नभः पुष्पबन्ध्यापुत्रशशशृङ्गादिरिव कपोलकल्पितमात्रम् ।

इदानीमुच्यत आस्तिकमतविषये — आस्तिकेषु सांख्याः शरीरव्यतिरिक्तमात्मानं मन्यन्ते । तेषां मते जीवात्मा ज्ञपदार्थः स च पुष्करपलाशवन्निर्लेपः, विशुद्धचेतनः किन्तु स्वयं सृष्टिरचनायामसमर्थः प्रकृत्या सहयुज्मानः सृष्टिरचनायां निमित्तहेतुत्वमाटीकते । **द्यावाभूमीजनयन्देव एकः** इतिश्रुतेः । **मयाध्यक्षेण प्रकृतिः सूयतेसचराचरम्** गी० ९.१० इतिस्मृतेः । सच्चेतनायाः प्रकृतिसंपर्कबाध्यत्वं तत्र चस पंगुरिवसमर्थः भिन्नभिन्नयोनिषु भिन्नभिन्नस्वभावोपलम्भात् जीवात्मनामनेकत्वमेकत्वे सति एकस्मिन् जाते सर्वेषां जीवनम् एकस्मिन् मृते सर्वेषां मरणम् एकस्मिन् विकले सर्वेषां विकलता एकस्मिन् प्रसन्ने सर्वेषां संप्रसादः, किंतु न तथात्र दृश्यते । **अतः प्राहुः पग्वंधवदुभयोरपि संयोगस्तत् कृतः सर्गः** यद्यपि **यः सर्वज्ञः स सर्ववित् यस्य ज्ञानमयं तपः एषसर्वेश्वरः सर्वस्य वशी सर्वस्येशानः** इत्यादि श्रुतिभिः आत्मनः सर्वसामर्थ्यसर्वज्ञत्वादि-सद्गुणेषु साधितेषु सत्सु **असंगो नहि सज्यते** इत्यादिश्रुतिभिश्च तस्यासङ्गत्वे चोपपादिते सांख्यस्येमे पक्षाः नैवादरर्तव्याः । श्रुति व्याकोपात् मातृभक्त्या वयं सोढुं शक्नुमो व्याकोपं परमात्मनः पितृस्थानीयस्य न तु मात्रस्थानीयानां श्रुतीनां, जीवात्मबहुत्वे श्रुतयोऽपि सांख्येन सह संम्मताः **नित्योनित्यानां चेतनश्चतेनां एको बहूनां यो विदधाति कामान् रूपं रूपं प्रतिरूपो भूव इन्द्रो मायाभिः पुरुरूप ईयते इत्यादयः** शताधिकाः ।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नत्वेवाहं जातुनाशं नत्वं नेमे जनाधिपाः ।**
**न चैव न भविष्यामः सर्वे वयमतः परम् ।।**

(गी० २.१२)

इति स्मृतेश्च । स्वामभिमतिं तु पश्चान्निदर्शयिषामः । सांख्ये पक्षद्वयं निरीश्वरवादः सेश्वरवादश्चेति पाश्चात्याः, वस्तुतस्तु सेश्वरवाद एव, इदं सांख्यप्वचनभाष्ये श्रीविज्ञानभिक्षुपादैः स्पष्टं प्रतिपादितम् । योगेऽपि चतुर्विंशंतितत्वात्मके ईवरात् पृथग्जीवस्य सत्ता, तस्य च सुखदुःखादि भोक्तृत्वं पंचक्लेशवसंवदत्वं कर्मविपाकैः पापच्यमानत्वात् आशयमलिनत्वाच्च नितरामक्षमत्वम् । एतन्निखिलानर्थनिवर्हणाय ध्यातृध्येयपृथक्त्वा परिकल्पने परमेश्वरे ध्येयत्वं जीवे च ध्यातृत्वं समर्थयति योगः । तत्रहि सूत्रम् **कायक्लेशकर्मविपाकाशमैरपरामृष्टः** पुरुषविशेष ईश्वरः । यद्यपि अनुभवप्रधानत्वात् योगदर्शनं परमात्मनो निकट मन्यन्ते, परन्तु श्रुतिप्रमाणपक्षपातैकचक्षुष्ट्या वेदान्तं परमान्तरङ्गतममिति वयम् । अथ काणादाः सप्तपदार्थज्ञानेनमोक्षमामनन्ति, नैयायिकाश्च प्रमाणादि षोडशपदार्थज्ञानेनैव मोक्षं निश्चिन्वन्ति । तेषां नये धर्मोऽभ्युदयनिःश्रेयससिद्धिद्वारं **यतो भ्युदयनिः श्रेयससिद्धिः स धर्मः इति हि** तत्रत्यं सूत्रम् इमेऽपि जीवात्पृथक् परमात्मानं स्वीकुर्वन्ति । अतो नवषुद्रव्येषु आत्मानमष्टमं परिगणयन्तः ज्ञानाधिकारणमात्मा सद्विविधो जीवात्मा परमात्मा चेति तत्रेश्वरः सर्वज्ञो विभुर्नित्यश्च जीवात्मा प्रतिशरीरं भिन्नो विभुर्नित्यश्च एवं हि तत्र कारिकावली —

**आत्मेन्द्रियाद्यधिष्ठाताकरणं हि स कर्तृकम्**

(का०प्र० रवा० ४७)

अत्र नैयायिकाः सुखदुःखादि समवायिकरणतावच्छेदकत्वात्मत्वमिति जातित्वमामनन्ति, जातिश्च एका नित्या सती चानेकसमवेता । यद्यपि आत्मनि सुखादि धर्मता वेदान्ते न स्वीक्रियते, स हि अपहतपाप्मा, सत्यकामः, विजरो, विशोको, विमृत्युः, अविजित्सः, अपिपासः इति पूर्ववर्णित अष्टलक्षणलक्षितत्वेन आत्मनि तथात्वानुपपत्तेः । किंतु नैयायिकानां नव्यानां मतमस्माकमपि वैष्णवानामानुकूलं जीवात्मा कर्मपरतन्त्रत्वात् सुखादिसमवायिकारणतावच्छेदको भवतु नाम, अत एव तु स अपहतपाप्मा, पाप्मनि समागते सति तस्यापहननम् आगमनाभावे तस्याप्यपहननस्याप्यसंभवः । एवं विजरः विमृत्युरित्यादि भगवत्कैंकर्यं प्राप्तवतो नित्यमुक्तस्वरूपस्थजीवात्मनो यद्यपि पार्श्वे समागच्छन्ति सुखदुःखादयः, किंतु तानि भगवद्भजने पाप्मरुपतया विहन्यन्ते भगवद्‌महिम्नेति वयम् । अत एव ते प्रमाणत्वावच्छिन्नप्रतियोगिकताकाभावेन ईश्वरे जातिं न स्वीकुर्वन्ति, यद्यपि नैयायिकनयेऽपि शरीरस्य न चैतन्यमित्यादिना शरीरे, आत्मवादोनिराकृतः । तथहि —

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः ।
तथात्वं चेदिन्द्रियाणामुपघाते कथं स्मृतिः ।।

(का० प्र०४८)

अस्यार्थः पुरैव व्याख्यातः । तथापि नैयायिकानां नये शरीरेषु मृतेषु व्यभिचारः स्यात् आत्मा हि विमृत्युः मृत्युवर्जितः जरारहितश्च एवं शोकरहितः क्षुत्पिपासाभ्यां वर्जितः शरीरे इमे सर्वे दोषाः । तथाहि शीर्यते इतिशरीरम्, आत्मा अशीर्यः, शरीरे बालकौमारतारुण्यजरावस्थाः आत्मात्वेकरसः । इति चेत् विज्ञानमात्मा सुखदुःखादीनां तदाकारत्वात् । विज्ञानं हि द्विधा नीलपीतत्वादि सविशेषपदार्थावलम्बि, इदं पीतमिदं नीलमिदं श्वेतमित्यादि । आलय विज्ञानं तु सकलविशेषणशून्यत्किंचित् वस्तुमात्रावलम्बि अहमस्मि इत्यादि । तथा चाहुः—

तत्स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तस्मात्प्रवृत्तिविज्ञानं नीलपीतादिके भवेत् ।।

पूर्वपूर्व संस्काराणामुत्तरोत्तरं स्मरणात् । इति चेन्न, उद्बोधकमन्तरेण प्रसुप्त-संस्काराणां संस्मरणानुपपत्तेः । यथोक्तं कालिदासेन शाकुन्तले—

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान् ।
पर्युत्सुको भवति यत् सुखितोऽपि जन्तुः ।।
तच्चेतसा स्मरति नूनमबोधपूर्वं ।
भावस्थिराणि जननान्तरसौहृदानि ।।

(शा० ५/२४)

एवं हि समवायसंबन्धेन नित्यज्ञानवत्वमित्यामनन्ति । जीवात्मनो भेदपक्षे तु तार्किकान् श्रुतयोऽनुरुन्धन्ति । ज्ञानाधिकरणत्वपक्षे सत्यं ज्ञानमनन्तं ब्रह्म इत्यादि श्रुतीनां व्याकोपः सोढव्यस्तैरपि । ब्रह्मशब्दस्य हि त्रीणि इमानि विशेषणानि सत्यं, ज्ञानम् अनन्तं समानाधिकरण्यश्चैकविभक्तिन्ष्ठिाया प्रथमान्तानाम्, अमीषां त्रयाणां प्रथमान्तेन ब्रह्म इति विशेष्येण, एवं नामार्थयोरभेदातिरिक्तसंबन्धो न व्युत्पन्नः इति गदाधरभट्टमतानुरोधेन त्रीण्यपि ब्रह्माभिन्नानि । तथाहि नीलोघट इत्यत्र नीलाभिन्नो घट इव सत्याभिन्नं ब्रह्म ज्ञानाभिन्नं ब्रह्म अनन्ताभिन्नं । एवं सत्येन सत् ब्रह्मेति ज्ञानेन चित् अनन्तशब्देन अनन्तत्वादानन्दस्य आनन्दमिति सच्चिदानन्दब्रह्मेति पर्यवसितम् । एवं यद्यात्मा ज्ञानाधिकरणं तदा ज्ञानं ब्रह्मेति प्रथमान्तप्रयोगो नोपपद्येत नहि व्यधिकरणयोर्द्वयोः पदार्थयोः समानविभक्तिकत्वरूपसामानाधिकरण्य, यद्यपि एतस्याः शंकायाः निराचिकीर्षुणा मया ज्ञानमित्यत्र ज्ञानम् अस्ति अस्मिन् नित्यम् इति व्युत्पत्तौ आकृतिगणत्वेन अर्श

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आदित्वात् अर्थं इति समाहितम् । एवं समवायसंबन्धेन नित्यज्ञानवत्वम् ईश्वरत्वं ब्रह्मत्वमिति पर्यवसितं, साधुत्वार्थमच् प्रत्ययः वैयधिकरण्यपरिहारार्थं मतुबेर्थमोसे स्वरूपे इतिमदीयं समाधानम् एवं ज्ञानस्वरूपं ज्ञानाधिकरणं च ब्रह्म इति पर्यवसितम् । मीमांसकास्तु धर्मप्रधाननिरूपणतया ईश्वरस्य चर्चामेव प्रायेण न कुर्वन्ति । तथापि तत्तद्देवता प्रधानमन्त्राणां विनियोगेन कल्पयितव्यः स ईश्वरः । एवं पञ्चस्वप्यास्तिकदर्शनेषु भेदवादो जीवात्मपरमात्मनोर्मध्ये वेदान्ते च अभेदप्रतिपादकश्रुतीनामनुरोधेन शंकरमते त्वभेदवादः । षण्णां चास्माकं वैष्णवानां मते च भेदवादः ! श्रुतीनांसंगतमे चाभेदं स्वीकुर्मः सम्बन्धतः न तु स्वरूपतः ।।श्रीः।।

अथ प्रकृतमात्मतत्वं निरुपयितुं श्रुतेरुपक्रमः —

**कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति पुरुषः स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव स हि स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ।।७।।**

अथ येषु देहेन्द्रियमनोबुद्धिषु कतमः अयमात्मा किं जातीयकः देहो मानसऐन्द्रियः बौद्धो वा ? याज्ञवल्क्य आह–नैतेषु कतमोऽपि, एतद् विषये व्याख्यातचरत्वात् , साम्प्रतं हि प्रादेश्यमात्रं—पत्नीपुत्रदेहादौ नात्मबुद्धिः, तदभावेऽपि जीवितस्य सत्वात्, देहस्यापि विकृतानां केषाञ्चिदवयवाना स्वयं पातदर्शनात् केशनखदन्तादीनां, केशाञ्चिच्च शल्यक्रियाद्वारेण समुच्छेददर्शनात् आत्मन्यपि तथात्वापत्ते । देहस्य प्रतिक्षणं परिवर्तन-शीलत्वदर्शनेन, उपचयापचयधर्मत्वप्रसिद्धेश्च, उपचयार्थकदिह धातोरेव देहशब्द निष्पत्तेश्च, तत्र कौमारयौवनजराणां समारोपापत्तौ भगवद्भजनविरोधः । तथोक्तम्—

**देहिनोऽस्मिन् यथा देह कौमारं यौवनं जरा ।**
**तथा देहान्तरः प्राप्तिःस्थीरस्तत्र न मुह्यति ।।**

(गीता २/१३)

देहानामन्तवत्वस्य जीवात्मनो नित्यत्वाविनाशित्वाप्रमेयत्वादिधर्माणां श्रवणस्मरणानुरोधेन देहे न तथात्वम् ।

**अजो नित्यः शाश्वतोऽयं पुराणः**

(क०उ० १/३/१८)

**अन्तवन्त इमे देहा नित्यस्योक्ता शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ।।**

(गीता २/१८)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवमात्मत्वे मनसः तस्मिन्नपि सुखदुःखादि धर्माणां समुपलब्धिप्रसंगः मनस इव तत्र चञ्चलत्वापत्तिः, इष्टापत्तेरिति चेन्न, श्रीगीतासु भगवद्वचनविरोधात् तथा हि पार्थं प्रति षष्ठे मनो दुर्निग्रहं चलम् (गीता ६/३५) आत्मानां प्रति द्वितीये अचलोऽयं सनातनः मनसः इन्द्रि त्वेन तद्दर्शनस्य क्वापि श्रुतिस्मृतिषु दृष्टत्वेनानुपलम्भात्। तथात्वे आत्मनोऽपि तथात्वापत्तौ **आत्मा वा अरे द्रष्टव्य** (वृ०उ० ३/५) इत्यादि श्रुतीनाम् **आश्चर्यवत्पश्यति कश्चिदेनं** (गीता २/२९) **यः पश्यति तथात्मानं** (गीता १३/२९) इत्यादि स्मृतीनां च वैयर्थ्यापत्तिः। ननु आत्मनः प्रत्यक्षे किं मानम्? इति चेत् **मनसैवानुद्रष्टव्यम्** इति श्रुतिरेव प्रमाणत्वेन गृह्यताम्। अत एव **आत्मा वा अरे द्रष्टव्यः** इत्यत्र विधेयत्वेन दर्शनं वर्णितम्। ननु **त्यदादिषु दृशोऽनालोचने कञ् च** (पा०अ० ३/२/६०) इति सूत्रे दर्शनभिन्नार्थे अनालोचने कञ् प्रत्यय विधानात् दृश् धातोः दर्शनभिन्नार्थस्यापि पाणिनिनैव प्रदिपादित्वात् तस्य ज्ञानार्थतायाः स्वीकारे **आत्मा वा अरे द्रष्टव्यः** इत्यत्र यत्प्रत्ययाश्रयस्य ज्ञानार्थत्वोपपत्तौ स्मृतिष्वपि तथैवार्थानुसन्धाने आत्मनः प्रत्यक्षस्य निर्मूलत्वमेव इति चेन्न। **आत्मा वा अरे द्रष्टव्यः** इति श्रुतौमन्तव्यः इति ज्ञानार्थकस्य प्रयोगात् द्रष्टव्य इत्यस्य दर्शनार्थकत्वस्यैवौचित्यात् तत् प्रत्यक्षस्य प्रामाणिकत्व सन्देहप्रसारावसरानौचित्यात्? चेत् **आत्मा वा अरे द्रष्टव्यः** इत्यत्र प्रयुक्तस्य तव्यप्रत्ययान्तस्य द्रष्टव्यः इत्यस्य ज्ञातव्यः इत्येवार्थो विवक्षितः स्यात्। तदा तस्यैवार्थस्य प्रतिपादनामय अवबोधनार्थक मन् धातोस्तव्यत् प्रत्ययान्तस्य मन्तव्यः इत्यस्य श्रुत्या कथं पुनरुक्तिः क्रियेत। न हि एकस्यार्थस्य विधित्वेन प्रतिपिपादयिषया द्विर्वचनं क्रियते। अज्ञातज्ञापिका हि श्रुतिः विज्ञातज्ञापकत्वे तस्यामपूर्वतानापत्तौ, द्रष्टव्य इत्यस्य प्रत्यक्षविषयीकरणीय इत्येवार्थः शास्त्रीयः। न च **अभ्यासे** (पा०धा०पा० ९२९) इत्यभ्यासार्थकस्य म्ना धातोरेव मन्तव्य इति प्रयोगे मन्तव्य इत्यस्य अभ्यस्तव्य इत्यर्थे कृते न पौनरूक्त्यापत्तिरिति वाच्यम्। म्ना धातो मन्तव्य इति प्रयोगस्यानिष्पत्तौ तस्य दोषस्य वज्रायमाणत्वाद्। अथ म्ना धातोः तव्यति तत्र र **पाघ्राध्मा** इति सूत्रेण मन आदेशे कृते मन्तव्यः इति प्रयोगः स्यादेव? मैव जल्पीः तस्य सूत्रस्य शिति प्रये एवं विधानात्। तव्यस्य च तथात्वाभाववत्वस्य च शास्त्रतः सिद्धन्तितत्वात्। तथा हि सूत्रम् **पाघ्राध्मा स्थाम्नादाण् दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठ मन यच्छ पश्यर्च्छ धौशीय सीदाः** (पा०अ० ७/३/७८) अत्रत्या वृत्तिः पादीनां पिबादयः स्युरित्संज्ञक शकारादौ प्रत्यये परे एवं **ष्ठिवु क्लमु चमां शिति** ५(७/३/७५) इत्यस्माद् शिति इत्यनुवर्तते, न च **बहुलं छन्दसि** इत्यनेन अशित्यपि मनादेश इतिवाच्यम्? तथा स्वच्छन्दा चारित्वे सति शब्दानुशासनभङ्गे शास्त्रीयमर्यादानापत्तेः। **बहुलं छन्दसि** इत्यत्र प्रयुक्तो बहुल शब्दः शिष्टकृतप्रयोगाणामेवानुशास्ता न त्वन्यथाकृतानाम्। अत एव हि बहून् अर्थान् लातीति बहुलम् इति तत्र भाष्यव्युत्पत्तिः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अयं बहून् अथान् लाति न तु बहूननर्थान। वस्तुतस्तु बहूननर्थान् लुनाति छिनत्ति इति बहुलम्। तस्मात् पूर्वाचार्याः आमनन्ति—

**क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।**
**शिष्टप्रयोगादनुसृत्य लोके चतुर्विधं बाहुलकं वदन्ति॥**

न खलु कुत्रापि पादीनां पिवादयः दृश्यन्ते, शित् प्रत्ययान्तभिन्ने, सर्वत्र हि पानं घ्राणं स्थानं दर्शनमित्यादि श्रूयते न तु पिबनम् जिघ्रणं तिष्ठनं पश्यनमित्यादि। किं बहुना मनः शब्दोऽपि अवबोधनार्थकमनुधातोरेव निष्पद्यते, भगवति श्रुतिरेवात्र व्युत्पत्तौ प्रमाणम् द्विरुच्चारयन्ती **यन्मनसा न मनुते, येनाहुर्मनो मतम्**। (के०उ० १/१/५) ननु प्रत्यक्ष हीन्द्रियेण यतो हि प्रतीताः अक्षाः यस्मिन् तत् प्रत्यक्षम् इति निरुक्तौ विषयाणाञ्च इन्द्रियग्राह्यत्वे सिद्धे इन्द्रियविषयेसंयोगजन्यज्ञानस्यैव प्रत्यक्षपदार्थत्वात् मनस इन्द्रियत्वं वाच्यम्, असति तस्मिन् तेन कथम् प्रत्यक्षमात्मनः ? इति चेत् उच्यते **मनसैवानु द्रष्टव्यम्** इति श्रुतिरेव परमं प्रमाणं। तत्र **इन्द्रियाणां मनश्चास्मि** (गीता १०/२२) इति स्मृतेः। यत्तु वेदान्तपरिभाषायां मनसो नेन्द्रियत्वमुक्तम्, तन्न **इन्द्रियाणां मनश्चास्मि** इत्युक्तौ तज्जातीयानामेव निर्धारणस्य समौचित्यात्। न च इन्द्रियाणां मध्ये इन्द्रियभिन्नं मनोऽहमितिवाच्यम्, तथा सति भयङ्कराशास्त्रीयत्वापत्तिः तत्रत्य पौर्वापर्यप्रसंगविरोधश्च, यथा पूर्वम् **आदित्यानामहं विष्णुः** (गीता १०/२९) इत्यत्र ये द्वादशादित्याः विवश्वदादिविष्ण्वन्ताः परिगणिताः तेषामेव मध्ये तज्जातीय द्वादशो विष्णुनामा आदित्योऽहमस्मि, एवमन्यत्रापि, न हि कोऽपि निर्धाणावधिभूतानां मध्ये विजातीयः निर्धार्यते, तथा सति निधारणमेव न स्यात्, निर्धारणं हि जात्या भवति। तथा **वृष्णीनां वासुदेवोऽस्मिपाण्डवानां धनञ्जयः** (गीता १०/३७)। इत्यत्र किं वासुदेवो वृष्णिजातीय भिन्नः किंवा धनञ्जयोऽपाण्डवः, एवं सर्वत्र विभूतियोगे निधारणावधिभूतनिर्धार्यमाणमध्ये सजातीयता सुनिश्चितैव। तस्मात् मनसः इन्द्रियत्वं निश्चितमेव शास्त्रतः तेनात्मनः प्रत्यक्षे नाशास्त्रीयत्वापत्तिः। न च **इन्द्रियाणि दशैकञ्च** (गीता १३/५) इत्यत्र इन्द्रियतः पृथक् पृथगुपादानान्मनसोनेन्द्रित्वमितिवाच्यम्, ब्राह्मणवशिष्ठन्यायेन तस्य पृथक्त्वेऽपि तज्जातीयत्वमक्षतमेव। न खलु सर्वे ब्राह्मणाः भुज्यन्ताम् वशिष्ठोऽपि भुज्यताम् इत्यत्र ब्राह्मणतः पृथग् वशिष्ठशब्दोपादाने वशिष्ठस्य ब्राह्मणत्वं परिहृतं प्रत्युत् विशेषितमेव, एवमिहापि इन्द्रियाणि दश सामान्यानि चैकं मुख्यं, दशानां मध्ये प्रत्येकं सहभूतत्वयस्यावश्यकत्वात्, यथा न केवलं चक्षुषा कोऽपि रूपं पश्यति, अन्यत्रमना अभूवम् अतो नादर्शमिति श्रुतेः। एवम् मनःसंयुक्तया रसनया रसः समनस्केन, श्रोत्रेण शब्दः समनस्केन, घ्राणेनगन्धः समनस्कया त्वचा स्पर्शः प्रत्यक्षतां नीयते। अस्मिन् वाह्यकरणतान्तःकरणतेत्युभयधर्मत्वम्। ननु यन्मनसा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

न मनुते (केन १/१/५) इति श्रुतिवि धात् कथं मनसा आत्मनः प्रत्यक्षम् ? नैषदोषः इदं खलु सकलोपाधिविवर्जितपरव्योमाधिपतिसाकेताधीशसर्वव्यापि श्री सीतारामाभिधेयपरब्रह्मवर्णनपरम् । तथा च तत्र श्रुतिः—

**यन्मनसा न मनुते येनाहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।।**

(के०उ० १/१/५)

तस्मान्मानसे प्रत्यक्षे शास्त्रतः सिद्धे, तथात्वे चात्मनः मनसोऽणुत्वात् तत् प्रत्यक्षासम्भवे नात्मा मनः । एवम् नेन्द्रियाणि तेषा नाशवत्वस्य दर्शनात् । अविनाशित्वाच्चात्मनः नात्मनो वियोगे कोऽपि क्षणं जीवति । चक्षुरादीनां वियोगे तु जीवत्येवेति प्रत्यक्षतः सिद्धम् । नापि बुद्धिः **दृश्यते त्वग्र्या बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः** इति श्रुतौ । बुद्धेः कृते हेत्वन्त प्रयोगदर्शनात् । अत्र हि कारकद्वयम् आत्माहि दर्शनविषयकर्मदर्शनाश्रयाः सूक्ष्मदर्शिनः कर्तारः दर्शनहेतुश्चबुद्धिः, हेतुकर्मणोर्भेदस्तु आपामराणां सिद्धः । एवं ज्ञानमपिनात्मा तत्र ज्ञानक्रियेच्छया सविषयपदार्था इति ज्ञानमात्मा, तर्हि तस्य विषयो वाच्यः, अथ जगदेव विषय इति चेत्, तत्र सर्वज्ञत्वापतिः, इष्टापत्तेरिति चेत् । तथात्वे बन्धमोक्षव्यवस्था निरर्थिस्यातउपदेशपरंपरा च मोघा । जीवात्मनामल्पज्ञता तु प्रत्यक्षसिद्धा, न हि पशवो वेदं वाचयन्ति सत्यप्यात्मवत्वे, नानधीतवेदः ब्राह्मणोऽपि सस्वरं पठितुमर्हः । यः सर्वज्ञ सर्ववित् इति श्रुतिस्तु ब्रह्मपरा, भेदं च जीवात्मपरमात्मनोरसकृदवोचाम यद्यल्पविषस्तर्हि कृपया उच्यतां तस्य नाम, को विषयो ज्ञानरूपजीवात्मनः निर्विषय इति चेत्, असंभवात्, न हि कोऽप्याकाशात् शब्दमपाक्रष्टुं प्रभवति, तथैव ज्ञानाद् विषयम् । तस्मात् देहेन्द्रियमनोबुद्धिविज्ञानवर्जितः विशुद्धबोधविग्रहः कश्चन पुरुष एवात्मा विनिगमनं चात्र श्रुतिरेव । तथा च काठके पठन्ति—

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।**
**मनसस्तु पराबुद्धिर्बुद्धेरात्मा महान्परः ।।**

(क०उ० १/३/१०)

एवमेतेषु विप्रतिपन्नेषु कतमः आत्मा इति जनकस्य प्रश्नः । अथ याज्ञवल्क्यः ससमारोहमुत्तरयति—यः प्राणेषु अन्तः हृदि ज्योतिः सः अयं विज्ञानमयः पुरुषः इत्यन्वयः । प्राणेषु हृदि इत्युभयत्र औपश्लेषिकी सप्तमी । यः प्राणान् हृदश्च अन्तः अपश्लिष्य तिष्ठति स एव पुरुषः, पिपर्ति सम्पूर्णं करणजातं पूरयंति । एवं पञ्चमहाभूतानि पञ्चविषयान् पञ्चप्राणान् चतुर्दशकरणानि च सदैवतानि पिप्राणः पुरुषाकारः ज्योतिः ज्योतिस्स्वरूपः परमप्रकाशवान् विज्ञानमयः, विज्ञानं प्राचुर्येण यस्मिन् तथाभूतः । अत्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मयट् प्राचुर्यार्थे **तत् प्रकृतिवचने मयट्** इति सूत्रेण विज्ञानस्य प्राचुर्ये सति अन्येषामपि केषांचित् सद्भाव इति चेत् ओम् । अचिन्त्यानेककल्याणगुणगणानां सौन्दर्यैश्वर्यभक्तवात्सल्यकारुण्यतारुण्यसौलभ्यप्रेमृतीनां, यद्वा विज्ञानपदमत्र समस्तभगवदीयगुणानामुपलक्षणं विज्ञायते समस्तभगवन्महिमा येन तद् विज्ञानं परमात्मगुणगणनिकरं तन्मयः । यत्तु ब्रह्मणो निर्धर्मत्वरिरक्षिषया स्वरूपार्थे मयट् इति व्याचक्षते तत्र तैरिदं वक्तव्यम् यद् विज्ञानशब्दस्य नपुंसकत्वे प्रकृत्यर्थप्रत्ययार्थयोरभेदात् विज्ञानमयः इति पुँस्त्वं कथम् । पुनश्च स्वरूपार्थे मयट् विधानाय त्रयाणामपि मुनीनां एकतमस्य कस्यचिदनुशासनेन केनचित् भवितव्यम् , न खल्वनुशिष्टो मयट् भवतुमर्हति । यत्तु चिदेव चिन्मयम् इति व्युत्पाद्य स्वरूपार्थे मयडुक्तं श्री दीक्षितैः सिद्धान्तकौमुद्यां तत्तु एतदीयवासनानुरोधेनैव । यच्च **नित्यं वृद्धिशरादिभ्यः** इत्यत्रानुवृत्तं मयट् शब्दं केचनानुवर्तयितुं कुमनीषितं समीहन्ते तदपि न विनिगमना भावात् । किं बहुना विज्ञानमयः इत्यादि मयडन्तशब्दनानामौपनिषदानां ब्रह्मविषयानां स्वरूपार्थतां प्रसिाधयति स्वयं भगवान् बादरायणः । तथा हि ब्रह्मसूत्रस्य अक्षराणि **आनन्दमयोऽभ्यासात्** (ब्र०सू० १/१/१२) अत्र विकारे मयटः शंकां निरस्यन् स्वयमेवासूत्रयत् । विकारशब्दादिति चेन्न प्राचुर्यात् । एवमुपनिषन्निगूढमर्ममहामहौ निधिपारदृश्वा भगवान् बादरायणो यदि प्राचुर्यं प्राह तर्हि क इमे वराकास्तत्पक्षक्षपणकौणपप्रयासाः । सोऽयं विज्ञानमयः अखण्डबोधसम्पनः । यथोक्तं गोस्वामि तुलसीदासमहाराजैः । **विशुद्धबोधविग्रहं समस्तदूषणापहम्** । (मानस ३/४/५) यथा कस्यच्छिरीरं पार्थिवं सत् पृथिवी प्रचुरं शेषणि चत्वारि गौणानि । एवमिहापि तस्यपुरुषस्य किं कार्यमित्याह—स समानः समः शत्रुमित्रत्वादि द्वन्द्वरहितः उभौ लोकौ शरीरे लोकं पुनः शरीराद्विमुक्तः नित्यभगवत्परिकतामुपेत्य भगवदीयसाकेत लोकं च सञ्चरति । गतागतं कुरुते, स एव स्वप्नः भूत्वा स्वप्नावच्छिन्नो भूत्वा स्वप्नावस्थाम् आपद्यमानोः इति भाव, मृत्योः रूपगाणि मरणधर्मिणः शरीरस्य रूपाणि देवमानवतिर्यक् प्रभृतियोनीमि बालकौमार्ययुवाजरारूपाणि अतिक्रामति क्रमेणानुभवन् गच्छति । यद् वा मन्त्रोऽयं प्रत्यगात्मपरोऽपि, अयं भगवन्नित्यपरिकरो जीवात्मा विज्ञानमयः बुद्धिसम्पन्नः अन्तः प्रकाशः, परमात्मानं ध्यायन् खेलन्निव भगवदाज्ञां पालयन्, उभौ लोकौ इहलोकपरलोकौ संचरति, भगवच्चिन्तनबलेन मृत्योःरूपाणि समतिक्रम्य परमेश्वरमेति एवं विज्ञानप्राचुर्ये तस्मिन् हर्षादयोऽपि न्यूनतयावगन्तव्याः ।।श्रीः।।

अथ पुरुषातिक्रमणं निरूपयति—

**स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः स सृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ।।८।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं स्वरूपः विज्ञानप्रचुरः ज्योतिराकारः पुरुषः भगवद्विमुखतया पूर्वकृतकर्मानुसारं पितृरेतः प्रविष्टः मातरि गर्भाधानक्रियया जायमानः जन्मगृह्णन् सार्धनवभिर्मासैः मातृगर्भ एव इश्वरेण निर्मितं निजकर्मविपाकरूपं शरीरं अभिसम्पद्यते अभिनवतया प्राप्नोति नूतनवस्त्रमिव । पुनर्मात्रा प्रसूतः पाप्मभिः, अत्र पाप्म शब्दः शुभाशुभकर्मफलरूपः तथाभूतैः भगवद्भजनप्रतिबन्धकरूपैः धनधान्यसुखदुःखप्रतिकूलानुकूलसकलार्थानर्थ-समन्वित। सकलविषवम प्रपञ्चशीलैः "स ँ सृज्यते संश्लिष्टो भवति सूत्रं सृजेव यसोक्तं श्रीमानसे भगवता श्रीरामेण श्री लक्ष्मणं प्रति,

**भूमि परत भा डाबर पानी । जिमि जीवहिं माया लपटानी ।।**

(मानस ४/१४/६)

रूपान्तरम् —

**भूम्यां पतनमात्रेण, मालिन्यमगमज्जलम् ।**
**जायमानं यथा जीवं माया समसृजदद्रुतम् ।।**

एवं कर्मफलानि भुक्त्वा म्रियमाणः पाप्मनः क्रियमाणकर्मफलानि सञ्चितानि च विजहाति त्यजति, "न तु प्रारब्धानि आगामि जन्मनो हि प्रारब्धमयत्वात् ।।श्रीः।।

अथ जीवात्मनः लोकपरलोकसंसरणप्रकारमाह । अत्र परलोकशब्दः सुखभोगात्मकस्वर्गादिपरः जीवस्य हि प्रतिदिनं प्रलयो भवति, स च दैनन्दिनः प्रलयइत्युच्यते जागर्ति तदा प्रातःकाले जायते इवं स्वपिति तदा मृतप्रायो भवति । इदं गौणमरणमपि कथ्यते तदेतर्दित व्याख्यायते—

**तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीय ँ स्वप्नस्थानं तस्मिन्सन्ध्ये स्थाने तिष्ठन्नेते उभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दा ँ श्च पश्यति स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयं ज्योतिर्भवति ।।९।।**

एवं दैनन्दिनं प्रलयं प्रतिपद्यमानस्य शरीरावाच्छिन्नस्य एतस्य विज्ञानमयत्वेन प्रसिद्धस्य तस्य पुरुषस्य इदम् अयं लोकः परलोकं स्वर्गं च इमे द्वे स्थाने स्थीयते, ययोस्तथाभूते सति निवृत्यधिकरणे भवतः । तृतीयं स्वाप्नं संन्ध्यं कथयति सन्धिमर्हति जाग्रत्सुषुप्त्योर्योगं तदेव सन्ध्यं तस्मिन् तिष्ठन् जागरं सुषुप्तिं च पश्यति, अत्राजागर एव इह लोकः सुषुप्तिश्च परलोक इति । एवं यथाक्रमं परलोकाभिमुखो भूत्वा सुषुप्तः पाप्मनः अशुभकर्मफलानि अशुभस्वप्नरूपेण शुभकर्मफलानि च शुभस्वप्नरूपेणानुभवति परलोकमाक्रममाणः । ममविचारेण इयं सुषुप्त्यवस्थापि दैनन्दिनपरलोकः, जागृदवस्था

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भूर्लोक:, स्वप्नावस्था च भुवर्लोक इति। इमे सर्वेऽपि दैनन्दिना: नैवात्यन्तिका:। एवं शुभकर्मफलानुसारमानन्दमनुभवति, यदि तेन भगवद्भक्तिशुभाशुभकर्मव्यतिरिक्तमपि किमपि कृतं तदपि स्वप्ने पश्यति। यथा भगवती मीरा स्वानुभूतिं प्राह—

**माई म्हाने सपने में वरी गोपाल।**
**श्यामस्वरूप मनोहर मोहन मेंहदी रची रसाल।**
**हँसि हँसि मोसंग भाँवर फेरि सिंदुर भरि दै भाल।**
**मीरा भई सुहागिनी अब तो बर मिल्या नन्दलाल।**

रूपान्तरम् —

**मातस्ते प्रवदामि रात्रिसमये स्वप्नोऽद्य दृष्टो मया।**
**यस्मिन् श्यामसरोजदामसुभगो गोपालको मामिलत्॥**

**आलक्तं रचितञ्च तेन करजे दत्ता मया भ्रामरी।**
**सिन्दूरं किल मस्तके प्रियवधूर्मीराभवद् बर्हिण:॥**

एवं मृत्यो: सर्वानवतीति सर्वावत्, तस्यलोकस्य मात्रामुपादाय अपहृत्य जाग्रत् संस्कारान् व्यपोह्य निर्माय च स्वयमेव निजकर्मविपाकानुरूपाणि समुपभोगसामग्रीविशेषाणि पश्चात् स्वेनरूपेण स्वेनैव ज्योतिषा प्रकाशेन सह स्वयंज्योति: विस्मृतसकल-प्राक्तनक्रियाकलाप: प्रस्वपिति, अतएव तस्य प्रस्वापमाचक्षते ॥श्री:॥

स्वप्ने किमपि न भवति, तत्र पुरुषेण स्वयंसृज्यते इत्यत आह—

**न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान्रथयोगान्पथ: सृजते न तत्रानन्दा मुद: प्रमुदो भवन्त्यथानन्दान् मुद: मुद: सृजते न तत्र वेशान्ता: पुष्करिण्य: स्रवन्त्यो भवन्त्यथ वेशान्तान् पुष्करिणी: स्रवन्ति सृजते स हि कर्ता॥१०॥**

तत्र सुषु प्तिकाले रथा: रथोपलक्षितानि वाहनानि रथे युज्यन्ते इतिरथयोगा: अश्वा: तदुपलक्षितानि वाहनोपकरणानि पन्थान: मार्गास्तत्र न भवन्ति, पुरुष: स्वयमेव एतानि रचयति, एवं पूर्वत: अर्तमानान् आनन्दान् आनन्दयुक्तपदार्थान् प्रमुद: प्रसन्नतापरिणामा:, एवं वेश: नेपथ्य एव यासामन्त: तथा भूत: स्रवन्ती: नि:स्यन्दमाना: पुष्करिणी: सृजति रतयति तत्र स्वयमेव स कर्त्ता भवति ॥श्री:॥

अथ पुरुष व्यापारं स्नेहबद्धं करोति—

**तदेते श्लोका भवन्ति। स्वप्नेन शरीरमभिप्रहत्याऽसुप्त: सुप्तानभिचाकशीति। शुक्रमादाय पुनरेति स्थानँ हिरण्मय: पुरुष एकँ हस:॥११॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तत् तस्मिन् विषये एते श्लोकाः पद्यमयदछन्दोविशेषाः भवन्ति श्रुतीनामपौरुषेयत्वात्, न कैश्चिद्रचिताः प्रत्युत् अनादिकालतः भगवन्नि श्वासभूताः विराजन्ते । एकः हिरण्मयः प्राप्तभगवत्सारूप्यः पीतावासाः अथवा हिरण्यं ज्योतिः भगवद्रूपं तन्मयः तस्यैवाविकृतपरिणामरूपः यद्वा हिरण्यं ज्योतिरेव तन्मयः, पुरुषः पुरः शरीराणि उ निश्चयेन शिनोति बध्यनाति, सवति पालयति, स्यति तनुं करोति तथा भूतः पुरि शरीरे, उ निश्चयेन शीयते कर्मबन्धनेन बध्यते, यस्तथाभूतः, एक हंसः एकः सन् हन्ति गच्छति सुषुप्तिरूपं परलोकं जाग्रतरूपम् इमं लोकं च यस्तथा भूतः, स्वप्नेन निजस्वापेन स्वपोनङ् इति सूत्रेण अत्र भावे नङ् । इदं शरीरमपहत्य निश्चेष्टं विधाय स्वयमसुप्तः ज्योतिस्स्वरूपत्वात् सुप्तान् सर्वानपि स्थूलसूक्ष्मशरीरावयवान् अभिचाकशीति प्रकाशयति निरीक्ष्यते अुभवति च । पुनः शुक्रं दृष्टश्रुतवासनारूपं भावं पूर्वकर्मफलपरपिाकं वा आदाय जाग्रत्स्थानं पुनरेति, आवागमने अस्योपमा हंसस्यहंसो यथा मौक्तिकान् जघत्सुः विह्नित्य कमलवने पुनर्नीडं याति विश्रामाय तथैव जीवात्मापि श्रान्तः स्वपिति पुनर्जागरे भोगवासनया जगर्ति प्रवर्तते ।।श्रीः।।

तामेवोपमां विशिनष्टि—

**प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा । स ईयतेऽमृतो यत्र कामँ॒ हिरणमयः पुरुष एकहँ॒सः ।।१२।।**

अयं पुरुषरूपो हंसः अवरं स्थूलत्वात् निम्नतरं कुलाकुलानि पक्षकुटुम्बानि आययति गमयति विश्रामाय यत्तथाभूतं जाग्रत्शरीररूपं नीडं प्राणेन निजश्वासनिःश्वासेन रक्षन् न विनाशमापादयन् , अत एव अमृतः न प्राणैर्वियुक्तः श्वसन्त विलोक्य सुषुप्तस्यापि जीवनधारणोपलम्भात् बहिः कुलायात् शरीरात् बहिर्देशे अनेकदेशान् प्रदेशाञ्च चरित्वा भ्रमणविषयान्विधाय पुनः ज्योतिर्मयः एक हंसः निरुपममरालः यत्र कामं संसार वासनोपभोगाः सन्ति, तत्र ईयते कर्मभिरेव प्राप्यते ।।श्रीः।।

पुनः स्वप्नव्यापारं वर्णयति—

**स्वप्नान्त उच्चावचमीयमानो रूपाणि देव कुरुते बहूनि । उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन् ।।१३।।**

स्वप्नस्य अन्ते मध्ये उच्चावचं शुभाशुभं कर्मफलैरीयमानः देवः बहूनि कर्मपरिणामतारतम्यानुरूपाणि निर्मिनोति । कदाचित् स्त्रीभिः स्वर्गसुन्दरीभिःमोदमानः कदाचित् कानिचित् विकृतानि दृष्ट्वा यक्षत् हसन् भक्षयन् वा, अत्र **जक्षत्यादयः षट्** इत्यनेन अभ्यस्त संज्ञायां **नाभ्यस्ताच्छतुः** इत्यनेन नुम् निषेधः । भयानि भयकारणान्यपि सिंहव्याघ्रादि पश्यन् भवति ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ स्वप्नावस्थायाः विषये विमतिप्रकारमाह—

**आराममस्य पश्यन्ति न तं पश्यति कश्चनेति । तं नायतं बोधयेदित्याहुः । दुर्भिषज्यँ् हास्मै भवति यमेष न प्रतिपद्यते । अथो खल्वाहु र्जागरितदेश एवास्यैष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षाय ब्रूहीति ।।१४।।**

आरमति क्रीडति यस्मिन् स आरामः, अस्य जनाः आरामं पश्यन्ति क्रीडास्थलं तं कोऽपि न पश्यति । यत्रायं शेते तत्र आहुः आयतं न चेष्टमानं सुप्तं न बोधयेत् । तत्र इन्द्रिये इमं न प्रतिपद्यते नाडीसंचारतो नवेत्ति तत् तदङ्ग दुर्भिषज्यं दुःखेन चिकित्सनीयं भवति । अत एव केचन अस्य जीवात्मनः जाग्रत देशे स्थूलशरीर एवस्थितिं आहुः तन्नोचितं, स्वप्नेऽप्यं स्वयं ज्योतिः प्रकाशमयो भूत्वा देहलीदीपकन्यायेन उभयमपि जाग्रत्स्थानं सुषुप्स्थानं प्रकाशयति । इत्युक्तवति याज्ञवल्क्ये विदेहराजो जनकः मुमुक्षां प्रकटयन् जिज्ञासते सोऽहं भगवत् इत्यादिना । भगवते पूज्याय अहं गोः सहस्रं ददामि श्रद्धेयं नतु प्रलोभनम् , इतोऽप्यधिकं विमोक्षाय उभाभ्यां लोकपरलोकाभ्यां जाग्रत्सुषुप्तिभ्यां समतिक्रान्ताभ्यां जीवात्मा परिभूतो विमोक्षाय विशेषो मोक्षः, विमोक्षः वैशिष्ट्यञ्च एकान्ततश्चात्यन्तश्च कर्मबन्धनक्षयः । यद्वा विष्णुप्राप्तिरेव मोक्षः तस्मै विमोक्षाय ।

अथ मोक्षस्य किं स्वरूपम् ? मोक्षो नाम सेव्यसेवकभावरूपमिथःसम्बन्धज्ञानपुरः सरं जीवात्मनः ब्रह्मसाक्षात्कारः । ननु मोक्षे द्वित्वाभावे कः कं पश्येत् ? इति चेन्नः स्वरूपतो जीवस्य नास्ति ब्रह्मणासहाभेद इत्यसकृदवोचाम । द्वित्वाभावे द्रष्टृदृश्ययोरेकत्वे कथं भगवत् साक्षात्कारः ? इति चेदुच्यते—यथा सत्यत्वाभावेऽपि निर्धर्मिब्रह्मवादिनां सत्यस्वरूपं ब्रह्म तिष्ठति तथापि तुष्यदुदुर्जनन्ययेन द्वित्वाभावेऽपि ब्रह्मजीवेति व्यक्तिद्वयं तिष्ठत्येव । द्वित्वं हि नित्यं नित्यो नित्यानाम् इति श्रुतेः । तद् विनाशस्य ब्रह्मणापि कर्तुमशक्यत्वात् मन्मते तु सर्वं सुसंगतमेव ।।श्रीः।।

अथ सुषुप्तेर्भोगतो नासज्यते आत्मेति प्रतिपादयति—

**स वा एष एतस्मिन्संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ।।१५।।**

सः पुरुषः एतस्मिन् संप्रसादे सम्यक् प्रसीदति कृतविश्रामत्वात् श्रमापनोदनसाधनत्वात् सुषुप्तिः संप्रसादः, लोकेऽपि गाढनिद्रायां सुखं सुचिरं शयनं विधाय सम्यक् प्रसीदति । एवं सम्यक् प्रसन्नताधिकरणे सुषुप्तिकाले रत्वा रमणं विधाय पुण्यं पापं च दृष्ट्वा साक्षात्कृत्य, चरत्विा पुनः न्यायं न्यायं प्रतिन्यायं प्रतिशरीरं प्रतियोनि निजकर्मानुसारं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

देवतिर्यङ्नरादिषुकतममपि आगत्य पुनः स्वप्नाय आद्रवति सुषुप्ति भोगानन्वागतः असम्प्राप्तः, तस्मादयम् असङ्ग कथ्यते अतोऽप्यूर्ध्वं ब्रह्मवरणं येन मम विशेषो मोक्षः स्यादिति ।

अथ जाग्रतो ब्रह्मणः व्यापारमाह—

**स वा एष एतस्मिन्स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किंचित्पश्यत्यनन्वागत स्तेन भवत्यसङ्गो ह्ययं पुरुष इत्येवमेवैतद्याज्ञवल्क्य सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीति ।।१६।।**

बुद्धान्ताय जागराय स्वप्न सुखेभ्योऽसङ्गजागराय पुनराद्रवति, इतोऽप्यधिकं जनको जिज्ञासते ।।श्रीः।।

जाग्रद्व्यापारं वर्णयति—

**स वा एष एतस्मिन्बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ।।१७।।**

बुद्धस्य जाग्रदवस्थायाः अन्तः मध्यः तस्मिन् , शेषं समानम् ।।श्रीः।।

अथ महामत्स्येन पुरुषसंचालनं दृष्टान्तयति—

**तद्यथा महामत्स्य उभेकूलेऽनुसंचरति पूर्वंचापरं चैवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नातं च बुद्धान्तं च ।।१८।।**

**महामत्स्यो यथा कूले उभे चरति वेगतः ।**
**एवं बुद्धश्च स्वप्नश्च पुरुषो विचरत्यसौ ।।श्रीः।।**

अथान्येन दृष्टान्तेन आत्मनो विश्रामस्थानं सुषुप्तिं दृष्टान्तयति—

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्त सँ्हत्य पक्षौ संलयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो नं कंचन कामं कामयते न कंचन स्वप्नं पश्यति ।।१९।।**

सुपर्णो गरुडः, अत्रश्येनोपमः बुभुक्षुः, सुपर्णोपमश्च मुमुक्षुः—

**श्येनो यथा व्योमगतः सुपर्णोः श्रान्तश्च संहत्य निजौ च पक्षौ ।**
**नीडं प्रविष्टः पुरुषस्तथैव विष्टः सुषुप्तिं नहि वेद किञ्चत् ।।श्रीः।।**

अथ पुरुषस्य कर्मदुर्विपाकं वर्णयति—

**ता वा अस्यैता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नस्तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रद्भयं**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पश्यति तदत्राविद्यया मन्यतेऽथ यत्र देव इव राजेवाहमेवेद ँ् सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ।।२०।।**

अस्य केशाः इव सहस्रधा अनेकधा प्रविभक्ताः ति सूक्ष्माः, हितानाम्न्यो नाडयः तिष्ठन्ति, ताः शुक्लादिरसैः पूर्णाः ताभिराच्छदितोऽयं यत्र कष्टमनुभवति तदेव नरकादिकमस्य, यदा आनन्दोऽनुभूयते स एव परमः लोकः ।।श्री।।

सुषुप्तौ जीवात्मनः आनन्दमयं स्वरूपं वर्णयति—

**तद्वा अस्यैतदतिच्छन्दा । अपहतपाप्माऽभय ँ् रूपम् । तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्य किं वेदचननान्तरं तद्वा अस्यैतदाप्तकाममात्मकाममकाम ँ् रूप ँ् शोकान्तरम् ।।२१।।**

तदेव एतस्य पुरुषस्य, अतिच्छन्दं छन्दः बन्धनं तत् अतिक्रान्तम् अतिच्छन्दं स्वतन्त्रं **छन्दः पद्ये प्रतीऽबन्धे इति** कोशात् । अपहताःपाप्मानः सुखदुखादयो येन तत् अपहतपाप्म, न भयं यस्मिन्नित्यभयं तच्च तच्च तच्चेति त्रयाणां कर्मधारयः । यथा प्रियया मनोऽनुकूलया भार्यास्त्रिया परिष्वक्तः समालिङ्गितः बाह्यमान्तरं न किंचिद् जानाति तथैव अयं जीवात्मापि प्राज्ञेन प्रकर्षेण आसमन्तात् जानाति इति प्राज्ञः, यद्वा पिपर्त्ति भक्तानां कामं पूरयति यः स प्रः, अह्नोति सर्वं व्याप्नोति इति अः, जानाति निखिलं वस्तुजातं यः सः ज्ञः, प्र एव अः स एव ज्ञः इति प्राज्ञः तेन परिष्वक्तः मित्रेण बाह्यमन्तरं न किंचित् वेद, सुषुप्तिकाले परमात्मनैव परिष्वज्य आनन्दमात्रयैव विदूरित श्रमत्वात् । नन्वसंगतेयमुपमा परमात्मनः भार्योपमेयत्वं कथं घटेत् ? न षदोषः, प्रियाया अपि मित्रस्थानीयत्वात् हितैषित्वात् श्रमापनोदकत्वाच्च । अतएव मानसकारेणापि आनन्दातिशये विस्मरणशाम्येन सैवोपमा प्रस्तुता—

**कामिहि नारि पियारि जिमि लोभिहि प्रिय जिमि दाम ।**
**तिमि रघुननाथ निरन्तर प्रिय लागहु मोंहि राम ।।**

(मा० ७/१३० ख)

रूपान्तरम्—

**कामिने च यथा नारी प्रिया द्रव्यञ्च लोभिने ।**
**तथा निरन्तरं मे स्याः प्रियोराम रघूत्तम ।**

एतस्य इदमेव आप्ताः कामाः येन तथा भूतम् । अधिगतसमस्तकामम् अकामं कामनालेशरहितम्, आत्मकामम् आत्मने परमात्मने कामः इच्छा यस्य तथाभूतम्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अशोकान्तरं नास्ति शोकः इष्टजनितवियोगदुःखं अन्तरं छिद्रं दोषो वा यस्मिन् तथा भूतमेतस्यरूपम् ।।श्रीः।।

अस्यामवस्थायां पुरुषः सकलाञ्जाग्रद्धर्मान् अत्येति इदमेव प्रपञ्चयति—

**अत्र पिताऽपिता भवति माताऽमाता लोका अलोका देवा अदेवा वेदा अवेदाः । अत्र स्तेनोऽस्तेनो भवति भ्रूणहाऽभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणोऽश्रमणस्तापसोऽतापसोऽनन्वा गतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति ।।२२।।**

जाग्रत्काले यः पिता स एव अपिता पितृधर्मविहीनः माता अमाता एवं प्राकृतनान् सर्वान्धर्मान् अत्येति सर्वस्य ह्यस्थशोकस्य पारं निस्तीर्णो भवति । श्रमणः ब्रह्मचारी । पुल्कसोऽन्त्यजः ।।श्रीः।।

अथ तत्र द्वितीयाभाव निवारयति—

**यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपपिलोपो विद्यतेऽविनाशिस्त्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत् ।।२३।।**

यद्वस्तु अयं न पश्यति तत्र दृष्टेरभावोनास्ति कारणं, कथन्नपश्यतीति आह— अविनाशित्वहेतोः तत्तद्दृष्टेः विपरिलोपः विनाशो नहि, यतो हि तत्र तत् विजातीयं किमपि द्वितीयं वस्तु नास्ति अतः पश्यन्दृष्टिव्यापारं कुर्वन्नपि न पश्यति नितान्त-मेकाकित्वात् ।।श्रीः।।

एवमेव शेषाणां सप्तानामग्राहकत्वं निवारयति—

**यद्वै तन्न जिघ्रति जिघ्रन्वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ।।२४।।**

**यद्वै तन्न रसयते रसयन्वै तन्न रसयित् नहि रसति् रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वान्नतु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्रसयेत् ।।२५।।**

**यद्वै तन्न वदति वदन्वै तन्न न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ।।२६।।**

**यद्वै तन्न शृणोति शृण्वन्वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ।।२७।।**

**यद्वै तन्न मनुते मन्वानो वै तन्न मनुते नहि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ।।२८।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यद्वै तन्न स्पृशति स्पृशन्वै तन्न स्पृशति नहि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्वितीयमस्ति ततोऽन्यद्विभक्तं यत्स्पृशेत् ।। २९ ।।**

**यद्वै तन्न विजानाति विजानन्वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वान्न तु तद्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजा नीयात् ।। ३० ।।**

**घ्राणादीनां क्रियां कुर्वन् न तान् गच्छति गोचरान् ।**
**तन्नित्यशक्तिमत्वेऽपि द्वितीयप्रतिषेधतः ।।श्रीः।।**

पूर्वोक्तमेव प्रपञ्चयति—

**यत्र वान्यदिव स्यात्तत्रान्योऽन्यत्पश्ये-दन्योऽन्यज्जिघ्रेदन्योऽन्यद्रसयेदन्यो-द्वदेदन्योऽन्यच्छृणुयादन्योऽन्यन्मन्वीतान्योऽन्यत्स्पृशेदन्योऽन्याद्विजानीयात् ।। ३ २।।**

यत्र जीवात्मनो व्यतिरिक्तं स्यात् तदा अन्यसमवेताः चक्षुः घ्राणवाक्-श्रवणमननस्पर्शनविज्ञानादिक्रियाः संपादयेत् । इह तु विषयाश्रयाणामभावात् सलिले जले दृष्टमद्वैतमेकीभावो यस्य तादृशोऽयं, संबन्धतः परमात्मना सह एकीभूतः ।।श्रीः।।

इदमेवाग्रे प्रपञ्चयति—

**सलिल एको द्रष्टाऽद्वैतो भवत्येष ब्रह्मलोकः सम्राडिति हैनमनुशशास याज्ञवल्क्य एषास्य परमागतिरेषास्य परमा सम्पदेषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ।। ३ २।।**

हे सम्राट् ! सलिले जले इव तस्मिन् परमात्मनि सुषुप्त्यिवस्थायामेकः द्रष्टा अचिन्त्यदर्शनमयः, अद्वैतः स्वविजातीयकार्यकारणसंघातवर्जितः परमात्मना सायुज्यमाप्तः एष एव परमात्मा सुषुप्तस्य जीवात्मनः ब्रह्मवर्धनस्थानं लोकः । इत्येव जनकं याज्ञवल्क्यः अनुशा सास समुपदिष्टावान् । पुनर्निर्णयमाह—

एषा इयं परमेश्वरप्राप्तिरेव एतस्य परमागतिः परमगन्तव्यम्, इयमेतस्य परमा संपत्, यत् सुषुप्तौ समागतं परमात्मानमनुभवेत् । परन्तु दौर्भाग्यमप्येतस्य यत् तस्मिन् दृष्टे प्रवाधत इमं प्रगाढनिद्रा, एष एव एतस्य लोकः एषः परमात्मैव एतस्य जीवस्य परमानन्दः, तस्यैव परमानन्दभूतस्य आनन्दस्य मात्रां यत्किंचित् सीकरमेव उपजीवन्ति अन्यानि भूतानि उपयुज्यप्राणन्ति प्राणिनः ।।श्रीः।।

अथ आनन्दंतारतम्यं याज्ञवल्क्यभयश्च दर्शयति—

**स यो मनुष्याणाँ राद्धः समृद्धो भवत्यन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दोऽथ ये शतं मनुष्याणामानन्दाः स**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**एकः पितृणां जितलोकानामानन्दोऽथ ये शतं पितृणां जितलोकनामानन्दाः स एको गन्धर्वलोक आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्म देवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्तेऽथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथ ये शतं प्रजापतिलोक आनन्दाः स एक ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतोऽथैष एव परम आनन्द एष ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददाम्यत ऊर्ध्वं विमोक्षायैव ब्रूहीत्यत्र ह याज्ञवल्क्यो बिभयांचकार मेधावी राजा सर्वेभ्यो माऽन्तेभ्यः उदरौत्सीदिति ।।३३।।**

एवं कृतपरमात्मसाक्षात्कार एव मनुष्याणां मध्ये राद्धः संसिद्धः समृद्धः धनवान् भवति । एवं मनुष्यानन्दमारभ्य ब्रह्मलोकपर्यन्तानन्दाः पूर्वस्मात् पूर्वस्मात् उत्तरोत्तराः शतगुणिताः, ब्रह्मानन्द एव आनन्दानां परिसीमा । अतः एष वै ब्रह्मलोकः इति याज्ञवल्क्यः, आनन्दतारतम्यमुपसहरति । विमोक्षाय ब्रूहीति जिज्ञासमानात् जनकात् विभयाञ्चकार, अयं मेधावीराजा मां तेभ्यः समस्तेभ्यः उत्तरेभ्यः उदरोत्सीत बद्धं कृतवान् ।।श्रीः।।

अथ अकृतभगवद्भजनः पुनर्जागरितो भवति—

**स वा एष एतस्मिन्स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यांय प्रतियोन्याद्रवाति बुद्धान्तायैव ।।३४।।**

स एष जीवात्मा स्वप्नस्य निद्रायाः अन्ते तत्र पुण्यं पापं अनुभूय भुक्त्वा, बुद्धान्तायैव जागराभिमुखो भवति इदमेव तु तस्य संसरणम् । तद्यथा—

**जागर्त्ति भाति परिकर्मकरोति चात्ति ।**
**तिष्ठत्यथो विवदतेर्जयतेर्धनानि ।।**
**पत्न्याव्यवायमथपुत्रसुखं जराधिम् ।**
**यात्यात्मनोऽप्यहह संसरणं दुरन्तम् ।।श्रीः।।**

अनो दृष्टान्तेन निगमयति—

**तद्यथाऽनः सुसमाहितमुत्सर्जद्यायादेवमेवाय ँ शारीर आत्मा प्राज्ञेनात्मनान्वारूढ मत्सर्जन्याति यत्रैतदूर्ध्वोच्छ्वासी भवति ।।३५।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यथा अनः शकटमारूढः सुसमाहितः सकलसामग्रीभाररूपः यात्रां यातरं करोति जीर्णं सत् उत्सर्जजन गच्छति । एवं शकटीभूतमिदं शरीरं भगवद्भजनविमुखेन्द्रियानड्वद्युक्तं जरया भग्नकूबरं त्यक्त्वा उच्छ्वासी भवति ।।श्रीः।।

अथ शरीरत्यागं दृष्टान्तयति—

**स यत्रायमणिमानं न्येति जरया वोपतपता वाणिमानं निगच्छति तद्यथाम्रं वौदुम्बरं वा पिप्पलं वा बन्धनात्प्रमुच्यत एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ।।३६।।**

जरायाः तापतः यदायमणिमनं शक्तिक्षीणतामेति नितरां याति, तदा आम्रम् औदुम्बरं पिप्पलमिव पक्वफलं बन्धनात् प्रमुच्य जीर्णशरीरं त्यक्त्वा गच्छति । अनन्तरं पुनर्जन्मगृहीतुं प्राणायैव द्रवति धावति ।।श्रीः।।

अथदेहान्तरग्रहणं प्रकरोति—

**तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिल्पन्तेऽयमायात्वयमागच्छतीत्येवँ्हैवं विदँ्सर्वाणि भूतानि प्रतिकल्पन्त इदं ब्रह्मायातीदमागच्छतीति ।।३७।।**

यथा आयान्तं राजानं प्रति ग्रामनिवासिनः सूताः सारथिनः अन्ये च परिजनाः अन्नैः पानैः आवसथैः विश्रामस्थलैः प्रत्युद्गच्छन्ति अभिनन्दयन्त्द्रि एवं ब्रह्मसम्बद्धम् आयान्तं जीवात्मानं सर्वाणि भूतानि इन्द्रयरूपैरश्वैः मनःप्रग्रहेण बुद्धिसारथिना शरीररूपेण रथेन अन्याभिश्च सामग्रीभिः समुपयन्ति ।।श्रीः।।

प्राणानां देहान्तरप्रकारमाह—

**तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्त्येवमेव— ममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ।।३८।।**

यथा राजानं भूपतिं, प्रकर्षेण यातुमिच्छति इति प्रयियासति प्रयियासतीति प्रयियासन् तं प्रयियासन्तं प्रस्थानं चिकीर्षन्तम् एवं प्रतिसूताः ग्रामिण्यः समायन्ति ग्राममुख्याः, एवं जीवात्मानं शरीरानिर्गच्छन्तं सर्वे प्राणादयः तमनुगच्छन्ति ।।श्रीः।।

**इति श्रीबृहदारण्यकोपनिषदिराघवकृपाभाष्ये चतुर्थाध्याये आत्मस्वरूपवर्णनमं नाम तृतीयं ब्राह्मणं सम्पूर्णम् ।**

**।। राघवः शन्तनोतु मे ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। चतुर्थब्राह्मणम् ।।

### मङ्गलाचरणम्

अमूमुचद्योदशवक्त्रमृत्योर्विभीषणं भक्त विभूषणञ्च ।
तं भ्रू विजृम्भोच्छवसिताम्बुराशि सीतापतिं राममुपैमि तुर्ये ।।

अथ संसारसागरमहोर्मिमालापरीवर्तपरिश्रमजिहासितजीर्णपाञ्चभौतिककलेवरस्य प्रकृत्या विनश्वरस्यापि शरीरावच्छेदेन प्रतिक्षणं क्षयिष्णुतया नश्वरस्य देहान्तरग्रहणसमातुरस्य भयातुरस्य जीवात्मनो मरणगतिं निर्वर्णयति । निर्वेदार्थं जननमरणचक्रभीतो हि प्रपित्सुः स्यात् पतितपावनपरमेश्वरपादारविन्दमकरन्दम् । तदनु विशुद्धजीवात्मनः स्वरूपं, तत् साक्षात्कारप्रकारश्च सविस्तरं निरूपयितव्य इति समग्रवेदान्तसाररूपः बृहदारण्यकोपनिषदान्तर्गतचतुर्थाध्यायमध्यवर्तिचतुर्थब्राह्मणं प्रारभ्यते । तत्र पारिशेष्यात् प्रथमं तृतीयब्राह्मणपरिशेषमाह —

**स यत्रायमात्माऽबल्यं न्येत्य संमोहमिव न्येत्यथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति ।।१।।**

स यदा यस्मिन् काले जीवात्मा अबल्यं नास्तिबलं यस्मिन् सोऽबलः अबलस्य भावः आबल्यं निर्बलतां न्येति नितरां गच्छति । तदा सर्वे प्राणाः एनम् अभिमुखी भवन्ति, अयं च तेषां तेजोमात्राः गृहीत्वा हृदये एव अन्वाक्राम्यति सकलव्यापार-वर्जितस्तिष्ठति, तदा चाक्षुषेण पुरुषेण सह रूपज्ञः रूपज्ञानविहीनो भवति ।।श्रीः।।

अथैकीभवनप्रकारमाह—

**एकी भवति न पश्यतीत्याहुरेकी भवति न जिघ्रतीत्याहुरेकी भवति न रसयत इत्याहुरेकी भवति न वदतीत्याहुरेकी भवति न शृणोतीत्याहुरेकी भवति न मनुत इत्याहुरेकी भवति न स्पृशतीत्याहुरेकी भवति न विजानीत्याहुस्तस्य हैतस्य हृतयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामत ँ सर्वे प्राणा अनूत्क्रामन्ति स विज्ञानो भवति सविज्ञानमेवान्ववक्रामति । तं विद्याकर्मणो समन्वारभेते पूर्वप्रज्ञा च ।।२।।**

न एकः अनेकः अनेकः एकः भवति इत्येकीभवति । यदा चक्षुरादिक्रियाभिर्विवर्जितो भवति, वस्तुतः अनेक एवायं इति श्रौतोऽभिप्रायः । तस्य जीवात्मनः शरीरस्य

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हृदयस्य अग्रभागः प्रद्योतते प्रकाशमानो भवति । तेनैव प्रद्योतितेन सह देहस्य कस्माच्चिदङ्गान् निष्क्रामति नेत्राद् वा शिरसो वा, अनन्तरं प्राणाः तमनुगच्छन्ति अयं विज्ञानमयो भवति, पश्चात् पूर्वप्रज्ञा अविद्या च तमनुक्रमेते। भगवद्भक्तस्य भक्तिभ्राष्ट्रभर्जितभववासनाबीजतया नैव पूर्वसंस्काराः बाधन्ते । एकीभवनमेवात्र विशिष्टाद्वैतवादप्रकारः । शरीरा नवच्छिन्नः स्वरूपतोऽपि परमात्मनो विशेषणं भूत्वा सम्बन्धननिबन्धनमे क्यं लभते ।।श्रीः।।

अथ योकदृष्टान्तमाह, यथा तृणजले युका जलचारी तृणच्छन्नः कीटविशेषः एकं तृणम् अधिसृत्य द्वितीयमाक्रम्य आत्मानं शरीरमुपसंहरति —

**यद्यथा तृणजलायुका तृणस्यान्तं गत्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरत्येवमेवायमात्मेदꣳ शरीरं निहत्याऽविद्यां गमयित्वाऽन्यमाक्रममाक्रम्यात्मानमुपसꣳहरति ।।३।।**

तथैव प्राक्तनं शरीरमधिष्ठाय समाक्रममाणो नवीनं जीवात्मदेहान्तरमुपैति ।।श्रीः।।

अथ स्वर्णकारदृष्टान्तेन आत्मनो नवीनशरीरनिर्माणं दृष्टान्तयति —

**तद्यथा पेशस्कारी पेशसो मात्रामपादायान्यन्नवतरं कल्याणतरꣳ रूपं तनुत एवमेवायमात्मेदꣳ शरीरंनिहत्याऽविद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वाऽन्येषां वा भूतानाम् ।।४।।**

तन्नवीनशरीरनिर्माणे को हेतुरित्यत् आह– यथा येन प्रकारेण पेशस्कारी पेशः सुवर्णं तत् करोति तच्छीलः सुवर्णकारः, पेशसः मात्रां सुवर्णस्य अंशम् अपादाय गृहीत्वा ततोऽपि नवतरं नवीनं कल्याणतमं कटककुण्डलादिकं तनोति । एवमेव परमात्मा जीवात्मनः प्राक्तनाविद्यामात्रां कर्मफलानि चापादाय ततोऽपि नवतरं नूतनतरं देवसम्बन्धिनं पितृभ्यो हितं मानुषम् इत्यादि जीवकर्मफलानुकूल शरीराणि निर्मिमीते । यत्वद्वैतवादिनः जीवात्मनः एव शरीरनिर्माणं स्वीकुर्वन्ति तदनुचितम् । शरीरनिर्माणे तस्य सामर्थ्याभावात् । **द्यावाभूमी जनयन् देव एकः** इत्यादि श्रुतिविरोधाच्च ।।श्रीः।।

अथात्मनः कर्मफलवशगत्वं निरूपयति —

**स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयस्तद्यदेतदिदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन। अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते ।।५।।**

एवं लब्धशरीरः स आत्मा विज्ञानमयः, विज्ञानं बुद्धिः एवं तत्तत्कर्मविपाकेन विज्ञानाद्यन्तः करणपञ्चप्राणचक्षुरादिप्राचुर्यं प्राप्य कर्माणि अनुसरति। तथोक्तं साधुकारी साधुर्भवति श्रेष्ठकर्मानुसारं पापकारी पापचरणशीलः अग्रे जन्मनि पापी भवति। एवं कर्मभिः सम्बध्यमानः संसरति संसारे ।।श्रीः।।

अथ सकामनिष्कामकर्मविभागेन बन्धमोक्षगतिं विवृणोति —

**तदेष श्लोको भवति। तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य। प्राप्यान्तं कर्मणस्तस्य यत्किंचेहकरोत्ययम्। तस्माल्लोकात्पुनरैत्स्मैलोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ।।६।।**

तत् तस्मात् जीवात्मनः कर्ममीमांसायामेषः श्लोकः पद्यमयः भवति, अनादिकालतो वर्तते परमेश्वरस्य श्वासभूत इति भावः। अस्य लिङ्गं लीनमर्थं गमयति तथाभूतम् अस्य जीवात्मनः, मनः यत्र यस्मिन् सक्तं एष जीवात्मा कर्मणा सह तदेव एति प्राप्नोति। तस्य कर्मणः अन्तं परिपाकं प्राप्य अयम् यत्किञ्चित् करोति शुभाशुभमाचरति। तस्मात् लोकात् परलोकात् कर्मणा हेतुभूतेन अस्मै लोकाय मर्त्यलोकाय पुनः भूय एति आगच्छति। इदं सकामानां वर्णनं किन्तु यः अकाममयः अकामयमानः कामना विवर्जितः समस्ताः कामाः येनाप्ताः यश्चात्मने कामयते आत्मानं वा यश्च अकामः लौकिककामनाशून्यः तस्य प्राणाः न उत्क्रामन्ति न शरीरान्तरं गच्छन्ति। स च ब्रह्मणे एव इति ब्रह्मैव अत्र "सुपांसुलुक" इत्यनेन विभक्ति लोपः वृद्धिः। यद्वा ब्रह्मणः एव सन् ब्रह्मणि अप्येति। अत्रापि सप्तम्या लुक् साधनिका पूर्वदृशा ।। श्रीः।

अथ ब्रह्मज्ञस्यानुत्क्रमणं प्रतिपादयति —

**तदेष श्लोको भवति। यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदिश्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ।। तद्यथाऽहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदँ शरीरँ शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ।।७।।**

यदा यस्मिन् काले अस्य मुमुक्षोः, हृदि मनसि, स्थिताः सर्वे कामाः स्त्री-कलत्रधनादिविषयाः प्रमुच्यन्ते त्यक्ताः भवन्ति, अथ अनन्तरमेव, मर्त्यः मरणधर्माय

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जीवः अमृतः मरणरहितः भवति । अत्रैव भगवतो नित्यपरिकरो भूत्वा ब्रह्म समश्नेतु, प्राप्य तत् आश्वादयति इति, यथा ब्रजाङ्गना, अत्र दृष्टान्तमाहः तद्यथा निर्ल्वयनी निर्गता ल्वयनीः उपरितना त्वक् यस्य कञ्चुकीरहितः सर्पः तस्य वा त्वक् निर्ल्वयनी स वाल्मीके मृता प्रत्यस्ता विपर्यस्ता शयिता एवं शरीरं शेते अथ च उत्थाय अशरीरः शरीररहितः अमृतः मरणवर्जितः अप्राणः प्राणरहितः ब्रह्म सामान्यं गतः तेजोमात्रं पर्यवशिष्यते । अथ जनक आह भगवते गोसहस्रं ददामि अतः ऊर्ध्व मुउपरि विमोक्षाय ब्रूहि उपदिश ।।श्रीः।।

अथ ब्रह्मविदां लोकं वर्णयति —

**तदेते श्लोका भवन्ति अणुः पन्था विततः पुराणो माँ स्पृष्टोऽनुवित्तो मयैव । तेनधीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः ।।८।।**

तस्मिन् विषये इमे श्लोकाः छन्दोमयाः मन्त्राः सन्ति । ब्रह्मविदनुभूतिं प्रकाशयति– एषः पुराणः पुरातनः पुरापि नवो वा, अणुः सूक्ष्मतरः पन्था मार्गः विततः विस्तृतः । स च कुत्र वर्तते ? अतः करुणावती श्रुतिः आह– स च पन्था मां श्रुतिं ब्रह्मविदं वा स्पृष्टः परिष्वक्तः अत एव इममहमेव जानामि यतो हि मयैव अनुवित्तः आनुकूल्येन प्राप्तः, तेनैव धीराः तेन मार्गेण विमुक्ताः कर्मबन्धनेभ्यः सर्वथैव मुक्ताः ब्रह्मविदः ब्रह्मज्ञाः अस्मात् शरीरादूर्ध्वं स्वर्गंलोकमपियन्ति गच्छन्ति ।। कुत्र ? इत्यत आह स्वर्गं, नन्वासङ्गतमेतत् 'न स पुनरावर्तते इत्यादि श्रुतिषु । **यत्गत्वा न निवर्तन्ते तद्धम परमं मम** (गीता १५/६) इत्यादि स्मृतिषु च **इतो गत्वा ब्रह्मविदः पुनरावृत्तेरनूतत्वात् स्वर्गिणां च पुण्योचितो हि लोको क्षीयते इत्यायादिषु श्रुतिषु आब्रह्मभुवनाल्लोकान् पुनरावर्तिनोऽर्जुन** (गीता ८/९) इत्यादि स्मृतिषु च पतनस्यैव विधानात् ब्रह्मविदामावागमनशीले तस्मिंल्लोके गमनं पुनरावर्तनपरमिति चेन्नेदंदूषणम् प्रतिलक्ष्यं लक्षणं भिद्यते इति नियमात् । अत्रत्य प्रकरणानुरोधाच्च स्वर्गशब्दोऽत्र परमव्योमरूप साकेतस्यैवार्थग्राहकः । तथा च कोशे स्वः स्वर्ग इत्यनयोरपि देवलोकार्थकत्वप्रसिद्धेः । **''स्वरव्ययं स्वर्गनाकौ''** इत्यमरकोषानुरोधाच्च, प्रकृतेऽपि स्वर शब्दः देवलोकवाची अव्ययः, तस्मात् उपपदात् गै धातोः बाहुलकेन क प्रत्यये स्वः देवलोके गीयते सङ्कीर्त्यते ब्रह्मादि देवलोकवासिभिः यः सः स्वर्गः साकेतलोकः, तं नित्यभगवत्कैङ्कर्यभावं प्राप्य भगवत्सेवोपयोगिरूपालङ्कारवस्त्र–स्वभावद्युपेताः अपि निश्चयेन यन्ति गच्छन्ति ।।श्रीः।।

अथ मोक्षमार्गविषये विप्रतिपत्तीराह —

**तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलँ हरितं लोहितं च । एष पन्था ब्रह्मणा ब्रह्मवित् पुण्यकृत्तैजसश्च हानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्च ।।९।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मिन् ब्रह्मलोके केचन सत्वावच्छिन्ना: शुक्लं वर्णं रजोगुणस्वभावा: पीतं, तमोगुणिनस्तु नीलं वर्णमाहु: । वस्तुतस्तु निर्गुणत्वात् नैते त्रयो वर्णा:, क्रमश: चन्द्र, सूर्यपावकेषु त्रयाणामुपलम्भात् तत्र चामीषाम् अवभासकत्वासम्भवात् तथाहि काठके पठन्ति **न तत्र सूर्यो भाति न चन्द्र तारकम् । नेमा विद्युतो भान्ति कुतोऽयमग्नि:** (क०उ०१/३/१४) अतस्तान्निराकृत्य आह एष इत्यादि, वस्तुत: एष: तैजस: तेजोमय: ब्रह्मणा परमात्मना श्रीरामाख्येन अनुवित्त: भक्तानामानुकूल्येन प्राप्त: अथवा ब्रह्मणा वेदेन अनुवित्त: अनुशिष्य विचारित:, तेनैव पुण्यकृत् पुण्यं भगवन्नामजपादिकं, तथाचोक्तं श्रीगोस्वामितुलसीदासेन विनयपत्रिकायां —

**तेन तप्तं हुतं दत्तमेवाखिलं तेन सर्वंकृतं कर्मजालमयेन श्रीरामा नामामृतं पानकृत मनिषमनवद्यमवलोक्य कालम्** ।( विनय० प० ४६) । पद्यमेतत् श्रीतुलसीदास– महाराजै: संस्कृत एव निबद्धमतो रूपान्तरं नापेक्षते तादृशपुण्यकर्म करोति इति पुण्यकृत् ब्रह्मवित्, एति गच्छति ।।श्री:।।

अथ विद्याविद्ययोरुपासकानां गतिं निरूपयति—

**अन्धंतम: प्रविशन्ति येऽविद्यामुपासते ।**
**ततो भूय इव ते तमो य उ विद्याया ँ् रता: ।।१०।।**

ये अविद्यां सकामोपासनामुपासते तेन अन्धं तम: गाढमन्धाकारं प्रविशन्ति, किन्तु ततोऽपि भूय: अधिकतरमन्धं तम: एव ते प्रविशन्ति ये विद्यायां त्रयीविहित तत्तद् गुणविशिष्टदेवोपासनायां रता: ।।श्री:।।

अथ भगवद्विमुख गतिं निरूपयति —

**अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृता: ।**
**ता ँ् स्ते प्रेत्याभिगच्छन्त्यविद्वा ँ् सोऽबुधो जना: ।।११।।**

ते अनन्दा न नन्दयन्ति तथा भूता:, नितरांदु:खवन्त: अन्धेन तमसा कोटिकोटिसूर्यैरपि नाशयितुशक्येन गाढेनान्धकारेण आवृता: तान् लोकान् रौरवादीन् पुराणेषु नरकनाम्ना प्रसिद्धान् ते गच्छन्ति । ये अविद्वांस: ये न जानन्ति ब्रह्म, ये जना अबुध: नावुध्यन्ते निजस्वरूपं भगवत् कैङ्कर्यभावं ये ते अबुध: । अत्र क्लीबन्ताद् हलन्त प्रथमाबहुवचनान्तरूपम् ।।श्री:।।

एतद्विपरीतम् आत्मज्ञस्य निश्चिन्त स्वभावमाह —

**आत्मनं चेद्विजानीयादयमस्मीति पूरुष: ।**
**किमिच्छकस्य कामाय शरीरमनुसंज्वरेत् ।।१२।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पूरुषः **अन्येभ्योऽपि दृश्यते** इति दीर्घः, परमेश्वरभजनरसेन पूर्णकामः अयं श्रीरामदासरूपः आत्मा देहेन्द्रियमनोबुद्धिरतिक्रान्तः विशुद्धविज्ञानमयो ज्योतिस्वरूपः आत्मा भगवत् कैङ्कर्याय तच्चरणारविन्दयोः तदाज्ञया अन्यत्र च सेवां विधातुं सततगमनशीलः हनूमानिव । ननु आत्मनो भगवद्दासत्वे किं मानम् ? इति चेत् **ब्रह्मदासा ब्रह्मदासा ब्रह्मदासा हि कितवः** इति श्रतिरेव । एवं **दासभूतास्त वै सर्वेह्यात्मानः परमात्मनः । अहं दासो हरिः स्वामी स्वभावं च सदास्मर** इति हारीतस्मृतिरपि । एवमयं नित्यभगवतकिङ्करः अहमस्मि इत्येंव रूपेण चेत् यदि विजानीयात् तदा कस्य कामाय कस्याभिलाषाय, अथवा कं सुखं तस्याभिलाषाय अथवा कं सुखं सेति खण्डयति इति कस्य, ब्रह्मसुखखण्डकः, कश्यश्चासौ कामश्चेति कस्यकामः तस्मै, समवाप्तसमस्तकामत्वात् किमर्थमेतादृशसकलानर्थमूलभीषणशूलरूप–निन्दिताभिलाषाय अभिलषन् किं वस्तु वा अभिलषन्, किं निन्दितं शरीरमनुलक्ष्य संज्वरेत् संजूर्ति युक्तो भवेत् । तापमनुगच्छेत् वा, न तावत् स तु भगवच्चरणारविन्दशरणमासाद्य वीतसमस्तशङ्कापङ्ककलङ्कः शशाङ्क इव शशिभूषण–भालमाभूषयति । यद्वा किमिच्छतीति किमिच्छकः तस्य किमिच्छकस्य, अथवा इच्छतीति इच्छकः तस्य इच्छकस्य अभिलाषयुक्तस्य कामाय किं शरीरं संज्वरेत् न कथंचित् ।।श्रीः।।

आत्मनो महिमानं वर्णयति —

**यस्यानुवित्तः प्रतिबुद्ध आत्मास्मिन् संदेह्यो गहनेऽ प्रविष्टः । स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव ।।१३।।**

अस्मिन् प्रत्यक्षं दृश्यमाने सन्देह्यो सन्देहमये, अथवा सम्यग्देहमर्हति तथा भूतः, तस्मिन् उपचयात्मके जननमरणादिभीषणजत्तुमये संसारकान्तारे गहने प्रगाढ–तिमिरमये अप्रविष्टः असंसृष्टः यस्य आत्मा । प्रतिबुद्धः आचार्यैर्जागरितः सन् परमेश्वरभजनाय स जागरः समुद्यतः, स एव यस्य अनुवित्तः अत्र कर्तरि षष्ठी । येन कर्त्रा लब्धः अथवा वित्तं धनमनुकूलम् अनुपमं वा वित्तम्, अनन्तम् अद्भुतम् अखण्डम् अविनाशि वा वित्तमनुवित्तमत्र **व्यव्ययो बहुलम्** इत्यनेन पुंल्लिङ्गव्यत्ययः । अस्मिन् पक्षे यस्येति सम्बन्धे षष्ठी । येन वित्तम्स रक्षितमति भावः । तस्यैव परमलोभपरमप्रेम्णोरास्पदत्वात् स एव विश्वकृत् ब्रह्मेव वन्दनीयो भवति । विश्वकृत् ब्रह्म यथोक्तं श्री भागवते —

**न भारती मेऽङ्ग मृषोपलक्ष्यते न वै क्वचिन्मे मनसो मृषाः गतिः ।**
**न मे हृषीकाणि पतन्त्यसत्यपथे यन्मे हृदौत्कण्ठ्यवता धृतो हरिः ।।**

(भा० पु० २-६३३)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स एव लोकस्य कर्ता निजलोकस्य निर्माता भवति कर्तृत्वं चात्र समर्जनरूपं तस्यैव ब्रह्मविदः उ निश्चयेन सलोकः साकेतो भवति ।।श्रीः।।

श्रुति जीवेन सहात्मनमपि समवेततया सम्बोध्य प्राहः —

**इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदिर्महती विनष्टिः । ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति ।।१४।।**

वयं जीवाः इहैव अस्मिन्नेव शरीरे पाञ्चभौतिके अस्मिन्नेव वा संसारे सन्तः मृत्योः पूर्वं ब्रह्म विद्म तदा महान् लाभः, इह संसारे सन्तः चेदिमं स्वस्य परमाराध्यत्वेन अवेदीः अत्र उत्तम पुरुषबहुवचनार्थे व्यत्ययान्मध्यमपुरुषैकवचनम । नावेदिस्म इति भावः, तदा महती विनष्टि अपूरणीया क्षतिः एतद् ये विदुः जानन्ति निजसेव्यत्वेन ते अमृता भवन्ति जननमरणरूपसंसारधर्मवर्जिताः नित्यं भगवत् परिकरभावं प्राप्नुवन्ति । यं प्रशंसति आलवन्दारवर्यो यामुनाचार्य स्वयमेव —

**धिगशुचिमविनीतं निर्दयं मामलज्जं**
**परम पुरुष योऽहं योगिवैराग्रगण्यैः ।**
**विधिशिवसनकाद्यैर्ध्यामत्यन्त दूरं**
**तव परिकरभावं कामये कामवृत्तः ।।**

(आलवन्दार स्तोत्र– ५०)

अथ एतद्विपरीताः इतरे अनात्मज्ञाः भगवद्विमुखाः दुःखमेव दुःखरूपसंसार–मेव अपियन्ति निश्चयेन प्राप्नुवन्ति ।।श्रीः।।

अथ आत्मदर्शिनः सकल जुगुप्साराहित्यं वर्णयति —

**यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते ।।१५।।**

यदि मुमुक्षु साधकः अञ्जसा ऋजुना भक्तिमार्गेण भूतभव्यस्य अतीतानागतस्य यद्वा भूतभव्यस्य भूतेभ्यः प्रेतपिशाचेभ्यो भव्यः भूतभव्यः, अथवा भूतेभ्यः सकलप्राणभृभ्यो भव्यः स्मर्तृभ्यः इति भूतभव्यः शिवः । यथा च प्राह शिवमहिम्नस्तोत्रे पुष्पदन्ताचार्यः —

**स्मशानेष्वाक्रीड स्मरहरपिशाचा सहचरा –**
**निश्चताभस्मालेपो स्त्रगपि नृगरोहिपरिकरः ।**
**अमङ्गल्यं शीलं तव भवतु नामैवमखिलं**
**तथापि स्मर्तृणां वरद परमं मङ्गलमसि ।।**

(शिवमहिम्न २५)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्यैव भूतभव्यस्य स्मर्तृभ्यो भव्यरूपस्य ईशानस्यापि शिवस्य ईशानं नियामकम् आत्मानं सर्वव्यापकं देवं परमात्मानं श्रीरामाभिधेयं ब्रह्म अनुपश्यति अनुकूलमनुक्षणम् अनुकणं च पश्यति, ततो तस्मादेव हेतोः न विजुगुप्सते नैवनिन्दितं कर्म कुरूते ।।श्रीः।।

अथायुर्नाम्ना ब्रह्मणो निरूपणम—

**यस्मादर्वाक्संवत्सरोऽहोभिः परिवर्तते ।**
**तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम् ।।१६।।**

यस्मात् अर्वाक् नीचैरेवा अहोभिः पञ्च षष्ठ्यधिकत्रिशतसंख्याकैः संवत्सरः परिवर्तते, तदेव ज्योतिषां सूर्यादिप्रकाशानामपि ज्योतिः परमपरायणभूतं प्रकाशं ब्रह्मभिधेयं श्रीरामं, देवः आयुः निहत्य रावणादीन् आयुर्दातृत्वेन देवानां आयुर्बुद्ध्या उपासते भजन्ते ।।श्रीः।।

विदुषो ब्रह्मणा सहाभेदं प्रतिपादयति —

**यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः ।**
**तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम् ।।१७।।**

यस्मिन् पञ्चपञ्च जनाः पञ्चैव महाभूतानि पृथिव्यादीनि, पञ्चैव प्राणाः पञ्चैव तन्मात्राः, पञ्चैव ज्ञानेन्द्रियाणि, पञ्चैव कर्मेन्द्रियाणि च इमे सर्वे, आकाशः आकाशरूपो अव्याकृतरूपो जीवात्मा इमे सर्वे, प्रतिष्ठिता तमेव आत्मानं परमात्मानं मन्ये अवधारयामि इति विद्वान् जानन् महापुरुषः अमृतः भवति जननमरणरूपसंसारतो दूरं भवति ।।श्रीः।।

भूयोऽपि तमेवार्थं विशिनष्टि —

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः। ते विचिक्युर्ब्रह्म पुराणमग्र्यम् ।।१८।।**

ये प्राणस्यापि प्राणं परायणं, चक्षुषः नेत्रस्यापि चक्षुः द्रष्टारं, श्रोत्रस्यापि श्रोत्रं नियामकं, मनसोऽपि मनः मन्तारं, सकलकारणानां करणत्वेन विदुः ज्ञातवन्त, त एव अग्र्यं सर्वश्रेष्ठं पुराणं पुरापि नवं पुराणि शरीराणि वा आनयति जीवयति तत्पुराणं ब्रह्म श्रीरामं निचिक्युः अन्विष्टवन्त निश्चितवन्तो वा ।

अथ ये अनेकानि दैवतानि ब्रह्मबुद्ध्या पश्यन्ति तेषां दुर्गतिं वर्णयति, यत्त्वत्र शङ्कराचार्यः अद्वैतं सिसाधयिषयति तत्तु तदीयः प्रमादएव श्रुत्यात्र ब्रह्मपरकनानात्व दर्शनात् । तथाहि —

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मनसैवानु द्रष्टव्यं नेह नानास्ति किंचन ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ।।१९।।**

एतद् ब्रह्म मनसा भगवद्भक्तिभागीरथीविधूतसकलकल्मषेण विशुद्धेन चेतसा मानसेन चक्षुषा अनुद्रष्टव्यमनुक्षणं साक्षात्कर्तव्यम् । इह तस्मादतिरिक्तं किञ्चन नाना न यद्वा इह तत् नाना तदन्तरेण किञ्चिदपि नहि, यथोक्तं श्रीमानसे– **स्वरग नरक अपवर्ग समाना जहँ । तहँ दीख धरे धनु बाणा ।।**

(मानस २-१२९-७)

रूपान्तरम् —

**स्वर्गे नर्केऽपवर्गे च सामान्येन व्यवस्थितः ।**
**यत्र तत्रैव दृश्येत धनुर्बाण धरो हरिः ।।**

यः इह संसारे नाना इव पश्यति, ब्रह्म व्यतिरिक्तान् विविधान् भावान् विभावयति, अथवा यः नाना अनेकानपि जीवान्, इव ब्रह्मसमानान् पश्यति सः मृत्योः मृत्युं जननमरणशीलं संसारमाप्नोति, इत्यनेन अद्वैतवादः निरस्तः ।।श्रीः।।

अथ इदं ब्रह्म कथं दृश्येत ? इति विधिसमाना आह श्रुतिः —

**एकयैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ।**
**विरजः पर आकाशदज आत्मा महान्ध्रुवः ।।२०।।**

इदमप्रमेयं श्रुत्यतिरिक्तप्रमाणागोचरमेतद् ब्रह्म एकधा **संख्यायाविधार्थे धा'' इत्यनेन धा प्रत्ययः** । अर्थात् एकेनैव प्रकारेण **अहं दासो हरिः स्वामी** इत्याकारकेण सेव्यसेवकभावेन अनुद्रष्टव्यम् अनुक्षणं साक्षात्करणीयम् । तस्य स्वरूपमाह– स च नेत्रविषयीभविषयन् परमात्मा, विरजः रजो गुणात् परीभूतः अथवा विशिष्टं श्रीमदयोध्यायाः रजः यस्मिन् स विरजः, परः त्रिगुणातीतः, आकाशः सर्वं भूतानामवकाशः आकाश इव नीलवर्णः यत्र ज्योतिर्मण्डलमिव भूषणानि विराजन्ते, एवमाकाशादपि सूक्ष्ममहाभूतात् परः अजः अजन्मा सर्वव्यापकः महान् ध्रुवः निश्चलः परं ब्रह्म परमात्मा विराजते ।।श्रीः।।

अथ ब्रह्मनिष्ठां दृढयति —

**तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।**
**नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनꣳ हितत् ।।२१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धीरो ब्राह्मणः, तं परमात्मानमेव निजनाथरूपेणविज्ञाय तत्रैव प्रज्ञां कुर्वीत भगवदीयशास्त्रबहिर्भूतान् बहून शब्दान् वात्स्यायनशास्त्रदीन् न अनुध्यायेत्, हि यतो हि तद् वाचः विग्लापनं, वाण्याः ग्लानिप्रापकम् ।।श्रीः।।

अथ ब्रह्मज्ञान विवित्सन्ती श्रुतिः तदङ्गत्वेन परिन्व्राजमपि वर्णयति : —

**स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽनतर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी सर्वस्येशानः सर्वस्यधिपतिः सान साधुना कर्मणा भूयान्नो एवासाधुना कनीयानेष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुविधरण एषां लोकानामसंभेदाय र्निमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽ नाशकेनैतमेव विदित्वा मुनिर्भवति ।**

**एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । एतद्ध स्म वैतत्पूर्वे विद्वा ँ स प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणेमे ह्येते एषणे एव भवतः । स एष नेति नेत्यात्माऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यतेऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यत्येतमु है वैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमि त्युभे उ है वै ष एते तरति नैनं कृताकृते तपतः ।।२२।।**

एवं महत्वादिगुणविशिष्टः यः प्राणेषु हृदयावर्त्या काशे च शेते स एव सर्वस्य लोकस्य वशी नियन्ता शासकः, सः साधुना कर्मणा न अधिको भवति, न वा असाधुना कर्मणा कनीयान् भवति । तं शुभाशुभकर्माणि न लिम्पन्तीति भावः । **नमां कर्माणि लिम्पन्ति** इति स्मृतेः । एष एव परमात्मा सर्वेश्वरः सर्वेषाम् ईश्वराणामीश्वरः अयं सर्वेषामधिपतिः भूतानां पालः, असम्भेदाय सम्भेद्रोऽपि नाशः तदभावाय, लोकानां विधारणः धारणकर्ता सेतुः । एवं गुणविशिष्टमिमं ज्ञातुं मिकर्थमिच्छा नोज्जगर्ति ? अत आह– तमेतं परमात्मानं ब्राह्मणा वेदानुवचनेन वेदानाम् अनुवचनं स्वाध्यायः तेन करणीभूतेन यज्ञेन मखानुष्ठानेन तपसा इष्ट प्राप्तये चान्द्रायणादिना, यद्वा गीतोक्तेन त्रिविध तपसा अनासकं विषयाणामनशनं तेन ब्राह्मणा विवि दिषन्ति । एवं वेदानुवचनं यज्ञो दानं तपः अनासकमिमानि साधनानि ब्रह्मविविदिशायां हेतुभूतानि, एभिरनुष्ठीयमानैः पावनेषु मनःसुब्रह्मविविदिष जागर्ति । अतः प्राह भगवान् गीतायाम् —

**यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।।१८-५**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं जाग्रतायां विविदिषायां तं परमात्मानमेतमतिसन्निहितं विदित्वा निजनाथत्वेन ज्ञात्वा मुनिर्भवति मौनमालम्ब्ते । प्रकर्षेण व्रजन्ति तच्छीला: इति परिव्राजिन: एतमेव लोकम् इच्छा विषयं कुर्वन्त: भगवत: प्राप्तये सर्वं त्यजन्ति पुत्रपौत्रादिकम् । अस्मै एव पूर्वे विद्वांस: प्रजां न कामयन्ते स्रम ऊर्ध्वरेतस्कत्वात् सनकादय: वैराग्यमूलमाह– किं प्रजया पुत्रादिभि: करिष्याम: साधयिष्याम: एषां सम्बन्धीतया अयमात्मा लोकश्च नाध्यवसीयते अतएव एषणात्रयात् उत्थाय उपरत: भवन्ति । लोकैषणा द्वयोरेषणयो: मध्यवर्तित्वात् द्वयोरेव अन्तर्भूता एवं पुत्रैषणां वित्तैषणां लौकेषणां च परित्यज्य विरज्यन्त इति हार्दम् । त्यक्त सर्वपरिग्रहासन्त: भिक्षाचर्यं भिक्षुवृत्तिं चरन्ति आश्रयन्ते । यद्यपि आद्यशंकराचार्य: अत्र भिक्षाचरणे वैराग्यमेव मूलमाह, परन्तु भगवाञ्छुकाचार्य: एतस्य वैराग्यस्य भगवत्कथामेव मूलामाह । तथा हि भ्रमरगीते—

**यदनुचरितलीलाकर्णपीयूषविप्रुट्**
**सकृदशनविधूतद्वन्द्वधर्मा विनष्टा: ।**
**सपदि ग्रहकुटुम्बं दीनमुत्सृज्य दीना**
**बहव: इव विहंङ्गा भिक्षुचर्यां चरन्ति ।**

(भागवत १०-४७-४०)

एते किमर्थं सर्वं त्यजन्तीत्याह– व्याख्यातोऽयमंश: । एवं शुभाशुभे एनं न तरत: अथ च कृताकृते कर्तव्याकर्त्तव्ये एनं न तपत: न क्लिष्यत: ।।श्री:।।

भूयो ब्रह्ममहिमानं वर्णयति—

**तदेतदृचाभ्युक्तम् । एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान् ।। तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षु: समाहितो भूत्वाऽऽत्मन्येवामात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवत्येष ब्रह्मलोक: सम्राडेनं प्रापितोऽसीति होवाच याज्ञवल्क्य: सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्यायेति ।।२३।।**

तदेव एतत् सिद्धान्तरूपं प्रस्तूयमानया ऋचा उक्तम् । एष: अयमेव ब्राह्मणस्य नित्य: सार्वकालिक: महिमा यत् कर्मणा शुभेन न वर्धते, अशुभेन वा कनीयान्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लघीयान् न भवति। एतत्पदं विदित्वा तस्य एव तदीय एव स्यात् पापकेन अघवता कर्मणापि न लिप्यते न संसृज्यते इति शब्दो वाक्यपरिसमाप्तौ। अतएव भिक्षाया: अन्त: नियमपरिसमाप्ति: तस्मिन् शान्त: शमोपेत: दान्त: इन्द्रियदमनशील: उपरतिमान् विषयेभ्य:, तितिक्षु: मात्रास्पर्शानां सहनशील: **ताँस्तितिक्षस्व भारत** (गीता २-१४) समाहित: इन्द्रियाणां समाधानवान्, आत्मनि परमात्मने, सर्वं सर्वत्र कथमिति चेत् **सुपां सुलुक्** इत्यनेन 'ङि' विभक्ते: 'सु' आदेशे अमी सर्वं त्यक्त्वा ब्रह्मभूतं भवति। हे सम्राट्! एवं विधं सकलानर्थरहितं ब्रह्मलोकं मया प्रापितोऽसि। जनक: पुन र्जिज्ञासते सोऽहं भगवते इत्यादिना। हे प्रभो, अद्याहं भगवते समग्रान् विदेहान् ददामि मां चापि दास्यामि एभि: सह ।।श्री:।।

एवं फलश्रुतिमाह—

**स वा एष महानज आत्माऽन्नादो वसुदानो विन्दते वसु य एवं वेद ।।२४।।**

अयमात्मैव सकलचराचर भक्षणशील: एवं य: जानाति स वै वसुदान: भवति ।।श्री:।।

भूयोऽपि फलश्रुति माह—

**स वा एष महानज आत्माजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभय हि वै ब्रह्म भवति य एवं वेद ।।२५।।**

अयमात्मा अजर: जरारहित:, अमर: मरणवर्जित:, अभय: भयरहित:, य एनं ब्रह्म अभयं य एवं पूर्वोक्तं इदं ब्रह्मप्रतिपादनं वेद सोऽपि अभयं ब्रह्मप्राप्य अभयो भवति।

**सकृदेव प्रपन्नाय तवास्मीति च याचते।**
**अभयं सर्व भूतेभ्यो ददाम्येतद् व्रतं मम।।**

इति भगवदुक्ते: ।।श्री:।। वाल्मिकी रामायण (६-१८-३४) ।।

**इति श्री बृहदारण्यकोपनिषदि चतुर्थाध्याये श्रीराघवकृपाभाष्ये आत्मस्वरूपनिर्धारणनाम चतुर्थब्राह्मणम्।**

**।। श्रीराघव: शन्तनोतु ।।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। पञ्चमब्राह्मणम् ।।

### मङ्गलाचरणम्

**कलिन्दजानीरसमानसौभगं महीसुतामण्डितमञ्जुविग्रहम् ।**
**मनोजमोहास्पदसुस्मिताधरं रघूत्तमं ब्रह्म गृणामि पञ्चमे ।।**

मन्त्राणामालस्याभावात् अभ्यासाय च पौनः पुन्येन आत्मत्वस्य अमृतरूपस्य परमात्मसाक्षात्कृतेस्तदुपयोगिनांच श्रवणमनननिदिध्यासनानां वर्णितचरोऽपि किञ्चिदानुपूर्वि वैलक्षण्येन पुनर्याज्ञवल्क्यमैत्रेयीसंवादः प्रारभ्यते—

**अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवहुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्री प्रज्ञैव तर्हि कात्यायन्यथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपादकरिष्यन् ।।१।।**

याज्ञवल्क्यस्य मैत्रेयी कात्यायनी इति द्वे भार्ये बभूवतुः पाणिगृहीत्या वोऽभवतां तत्र मैत्रेयी ब्रह्मवादिनी ब्रह्म वेद तत् वदति तच्छीला कात्यायनी च स्त्रीप्रज्ञा गृहासक्ता आसीत् । अन्य वृतिं तुरीयाश्रमम् ।।श्रीः।।

**मैत्रेयीति होवाच याज्ञवल्क्यः प्रव्रजिष्यन्वा अरेऽहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ।।२।।**

हन्त इति हर्षे । प्रव्रजिष्यन् संन्यासं ग्रहिष्यन्, अस्मात् स्थानात् एतस्मात् गृहात्, अरे इति सम्बोधनम् ।।श्रीः।।

**सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वापृथिवी वित्तेन पूर्णा स्यात्स्यां न्वहं तेनामृताऽऽहो३ नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैवै ते जीवितँ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ।।३।।**

मह्यं मैत्रेय्यै अमृता मरणधर्मरहिता—

**समंद्रमेखलां पृथ्वीं लब्ध्वापि स्यां न चामृता ।**
**आशाऽत्र नैव कार्येति याज्ञवल्क्यो न्यवारयत् ।।श्रीः।।**

अमृतत्वं पृच्छति मैत्रेयी—

**सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहीति ।।४।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किमनेन नाथ वित्तेन कुर्यां स्यां येन नामृता ।
यद्वेद ब्रूहि भगवन् भवेयं येन चामृता ।।श्रीः।।

याज्ञवल्क्यः समाधत्ते—

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधद्धन्त तर्हि भवत्येतद्वयाख्यास्यामि ते व्याचक्षणस्य तु मे निदिध्यासस्वेति ।।५।।

अवृधद् अवर्द्धयत्, व्याचक्षाणस्य व्याख्यान विषयं कुर्वतः ।।श्रीः।।

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवति । न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति । न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति । न वा अरे वित्तस्य कामाय वित्तं प्रियं भवत्यात्मनस्तु कामाय वित्तं प्रियं भवति । न वा अरे पशूनां कामाय पशवः प्रिया भवन्त्यात्मनस्तु कामाय पशवः प्रिया भवन्ति । न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवत्यात्मनस्तु कामाय ब्रह्म प्रियं भवति । न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवत्यात्मनस्तु कामाय क्षत्रं प्रियं भवति । न वा अरे लोकानां कामाय लोकाः प्रिया भवन्त्यात्मनस्तु कामाय लोकाः प्रिया भवन्ति । न वा अरे देवानां कामाय देवाः प्रिया भन्त्यात्मनस्तु कामाय देवाः प्रिया भवन्ति । न वा अरे वेदानां कामाय वेदाः प्रिया भवन्त्यात्मनस्तु कामाय वेदाः प्रिया भवन्ति । न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्त्यात्मनस्तु कामाय भूतानि प्रियाणि भवन्ति । न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदँ्सर्वं विदितम् ।।६।।

दृष्टेः साक्षात् कृते, श्रुते श्रुतिस्मृतिवाक्यैः श्रवणविषयतां नीते, मते अवबुद्धे विज्ञाते विज्ञानविषयीकृते ।।श्रीः।।

ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद क्षत्र तं परादाद्योऽन्यात्रात्मनः क्षेत्रं वेदा लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान्वेद देवास्तं परादुर्योऽन्यत्रात्मनो देवान्वेद वेदास्तं परादुर्योऽन्यत्रात्मनो वेदान्वेद भूतानि तं परादुर्योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेदेदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानीदँ् सर्वं यदयमात्मा ।।७।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अन्यत्र अन्यस्मिन् स्थाने, ब्रह्मत्वादयो धर्मा आत्मा च हृदयरूपसमानाधिकरण इति भावः ।।श्रीः।।

**स यथा दुन्दुभेर्हन्यमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ।।८।।**

**स यथा शङ्खस्य ध्मायमानस्य न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ।।९।।**

**स यथा वीणायै वाद्यमानायै न बाह्याञ्छब्दाञ्छक्नुयाद्ग्रहणाय वीणायैतु ग्रहणेन तु वीणा वादस्य वा शब्दो गृहीतः ।।१०।।**

इमानि दृष्टान्तानि व्याख्यातानि, दुन्दुभिरूपः बुभुक्षुरात्मा, शङ्खोपमानो मुमुक्षुः मुक्तात्मा च वीणया तुलितः ।।श्रीः।।

भूयस्त्रीणि दृष्टान्तानि—

**स यथार्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्त्येवं वा अरेऽस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानीस्टँ् हुतमाशिनं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निश्वसितानि ।।११।।**

**स यथा सर्वासामपाँ् समुद्र एकायनमेवँ् सर्वेषाँ् स्पर्शानां त्वगेकायनमेवैँ् सर्वैषां गन्धानां नासिके एकायनमेवँ् सर्वेषाँ् रसानां जिह्वैकायनमेवँ् सर्वेषाँ् रूपाणां च चक्षुरेकायनमेवँ् सर्वेषाँ् शब्दानाँ् श्रोत्रमेकायनमेवँ् सर्वेषाँ् संकल्पानां मन एकायनमेवँ् सर्वासां विद्यानाँ् हृदयमेकायनमेवँ् सर्वेषां कर्मणाँ् हस्तावेकायनमेवँ् सर्वेषामानन्दानामुपस्थ एकायनमेवँ् सर्वेषां विसर्गाणां पायुरेकायनमेवँ् सर्वेषामध्वनां पादावेकायनमेवँ् सर्वेषां वेदानां वागेकायनम् ।।१२।।**

**स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मा–ऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञाऽस्तीत्यरे ब्रवीमीति होवाच याज्ञवल्क्यः ।।१३।।**

व्याख्या—आर्द्रेन्धनं हरितकाष्ठं तेन अभ्याहितस्य दहनाय संयोजितस्य, अपां जलानां प्रेत्य गत्वा न तस्य संज्ञास्ते लौकिक नाम्नः परिलीनत्वात् । अत्र त्रिभिर्दृष्टान्तैः

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जन्मस्थितिलयाः परमात्ममूलाः निर्दिष्टाः जीवस्य यथा हरितकाष्ठैः संयुक्तादग्नेः धूमाः पृथग्भवन्ति । तथैव योगमाया समन्विता परमात्मनः तन्निःश्वासभूत-वेदसहितानि सर्वभूतानि । यथा जलं जलनिधिना पाल्यते तथेश्वरेण भूतानि । यथा सैन्धवशिलाखण्डः जलेनिक्षिप्तः न कामपि संज्ञां व्यवस्थापयितुं प्रभवति तथैव दृष्टे परमात्मनि ।।श्रीः।।

**सा होवाच मैत्रेय्यत्रैव मा भगवान्मोहान्तमापीपिपन्न वा हमिमं विजानामीति स होवाच न वा अरेऽहं मोहं ब्रवीम्यविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा ।।१४।।**

मोहं सन्देहं माम् आपीपिपन् प्रापितवान् आप्तृधातोः ण्यन्त लुङ् लकारे प्रथमपुरुषैक वचने आपीपिपत् । याज्ञवल्क्यः प्रोवाच-अरे मैत्रेयि अहं मोहं न ब्रवीमि समुद्रं प्राप्य यथा सैन्धवशिलायाः यथा नामरूपे न तथैव परमात्मानमेत्य जीवात्मा लौकिकनामरूपाभ्यां विमुक्तः भगवदीयनामरूपाभ्यामेव युज्यते ।।श्रीः।।

प्रकरणस्योपसंहारः—

**यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति तदितर इतरं जिघ्रति तदितर इतरँ रसयते तदितर इतरमभिवदति तदितर इतरँ शृणोति तदितर इतरं मनुते तदितर इतरँ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्तत्केन कँ रसयत्तत्केन कमभिवदेत्तत्केन कँ शृणुयात्तत्केन कं मन्वीत तत्केन कँ स्पृशेत्तत्केन कं विजानीयाद्येनेदँ सर्वं विजानाति तं केन विजानीयात्स एष नेति नेत्यात्मा ऽगृह्यो न हि गृह्यतेऽशीर्यो न हि शीर्यते ऽसङ्गो न हि सज्यतेऽसितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादित्युक्तानुशासनासि मैत्रेय्येतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यो विजहार ।।१५।।**

द्वैतमिव सम्बन्धतया भेदः विज्ञातारं चराचरज्ञं परमात्मानं केन तद्व्यतिरिक्तेन विजानीयात् इत्थम् उक्तानुशासना असि, उक्तमुपदिष्टम् अनुशासनम् अमृतत्वप्रवचनं यस्यै तथा भूता इत्थमुक्त्वा समग्रं धनं कात्यायन्यै दत्वा मैत्रेय्यै ब्रह्मविद्यां समुपदिश्य तां तत्रैव कुटी रेत्यक्त्वा याज्ञवल्क्यः परिव्राजको भूत्वा विजहार स्वच्छन्दो ब्रह्मणा सह चिक्रीड ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि चतुर्थाध्याये श्रीराघवकृपाभाष्ये याज्ञवल्क्यमैत्रेयीसंवादनाम ।**

**।। पञ्चम ब्राह्मणं सम्पूर्णम् ।।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। षष्ठ ब्राह्मणम् ।।

हे राम रामाप्रिय रावणारे हे मैथिलीनेत्रचकोरचन्द्र ।
संसार कान्तार विनष्ट शान्तिं पशुं सुरज्वा विनियक्ष षष्ठम् ।

अथ याज्ञवल्कीयवंशपरंपरा वर्णयति—

**अथ व ँ् शः पौतिमास्यात्पौतिमाष्यो गोपवनाद् गौपवनः पौतिमाष्यात्पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात्कौशिकः कौण्डिन्यात्कौण्डिन्यः शाण्डिल्याच्छाण्डिल्यः कौशिकाच्च कौतमाच्च गौतमः ।।१।।**

**आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद् गौतमः सैतवात्सैतवः पाराशर्यायणात्पाराशर्यायणो गार्ग्यायणाद् गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनान्माध्यन्दिनायनः सौकरायणात्सौकरायणः काषायणात्काषायणः सायकायनात्सायकायनः कौशिकायनेः कौशिकायनि ँ् ।।२।।**

**घृतकौशिकाद्घृतकौशिक पाराशर्यायणात्पाराशर्यायणः पाराशर्यात्पाराशर्यो जातूकर्ण्याज्जातू कर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणे-स्त्रैवणिरौपजन्धनेरौपजन्धनिरासुरेरासुरिर्भारद्वाजाद्भारद्वाज आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्याच्छाण्डिल्यः कैशोर्यात्काप्यात्कैशोर्यः काप्यः कुमारहारितात्कुकुमारहारितो गालवाद्गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपादो वाभ्रपाद्वत्सनपाद्वाभ्रवः पथः सौभरात्पन्थाः सौभरोऽयास्यादाङ्गिरसादयास्य आङ्गिरस आभूतेस्त्वत्वाष्ट्रादाभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्राद्विश्वरूपस्त्वास्ट्रोऽश्विभ्यासश्विनौ दधीच वर्णाछि ध्यङ्गाथर्वणो दैवादथर्वदैवो मृत्योः प्राध्वं ँ् सनान्मृत्युः प्राध्व ँ् सनः प्रध्व ँ् सनात्प्रध्व ँ् सन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्वृष्टिः सनारोः सनारूः सनातनात्सनातनः सनगात्सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ।।३।।**

पौतिमास्य समारम्भं घृकौशिकमध्यमम् ।
परमेष्ठिब्रह्मपर्यन्तं स्तौति वंशं द्विजन्मनाम् ।।श्रीः।।

इति श्रीचित्रकूटस्थ सर्वाम्नाय श्रीतुलसीपीठाधीश्वरश्रीमज्जगद्गुरु श्रीरामानन्दाचार्य श्रीरामभद्राचार्य प्रणीते बृहदारण्यकोपनिषदि श्रीराघवकृपाभाष्ये चतर्थोऽध्यायः सम्पूर्णः ।

।। श्रीराघवः शन्तनोतु ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। पञ्चमः अध्यायः ।।

### ।। प्रथमब्राह्मणम् ।।

**सदा परिव्राजक योग्विृन्दै–र्तोष्टूयमानाङ्घ्रिसरोजयुग्मम् ।**
**सीतासहायं विगतान्तरायं तद् ब्रह्मपूर्णं स्मर पञ्चमं भोः ।।**

अध्यायद्वितयेन यन् निरुपाधिकं ब्रह्म निखिलजीवनिकायसेव्यं नेति नेति विज्ञाय प्रज्ञां कुर्वीतं आत्मावा अरे द्रष्टव्यः इत्यादिभिर्विशिष्टैर्वचनैर्व्याख्यातं तदेव पुनरभ्यासाय संसारगतंविभिन्नजागतिकपदार्थदृष्ट्या व्याख्यातुं खिलभागस्य पञ्चम–षष्ठाभिधेयस्य अध्यायद्वितयस्य प्रारम्भः ।

तत्र प्रथमं ब्राह्मणम्—

**ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदोऽयं ब्रह्मणा विदुर्वेदेनेन यद्वेदितव्यम् ।।१।।**

ॐ इति भगवन्नामस्मरणम्, अदः परोक्षं सर्वकारणं ब्रह्म पूर्णम् । इदं प्रत्यक्षाभूतं सगुणं ब्रह्मपूर्णम् । अमुष्मात् निर्गुणात् पूर्णात् ब्रह्मणः इदं पूर्णम् उदच्यते उत्कृष्टतया पूज्यते, यत्तु उदच्यते इत्यस्य उद्गच्छति इति व्याचक्षते मायावदमदिरामदान्धास्तन्नितरामसङ्गतम् । उत्पूर्वको लुप्तनकारकोऽञ्चधातुः कर्मवाच्ये प्रयुक्तः एक यः कस्तत्रैवोपपत्तेः । उदुपसृष्टत्वात् उदच्यते इत्यस्य पूज्यते इत्येवार्थः शास्त्रीयः, न हि केनापि दृश्यते इत्यस्य विलोकयतीत्यर्थः कर्तुं शक्यते, विस्तरस्तु उपनिषद प्रारम्भे व्याख्यातः, तस्य पूर्णस्य पूर्णं कृपाप्रसादमादाय इदं जीवात्मातत्वमपि पूर्णं पूर्णकाममवशिष्यते नकेनापि नाशयितुं शक्यमिति भाव । अत आहुः **आशीर्यो न हि शीर्यतेऽसङ्गो नहि सज्यतेऽसितो न व्यथते नरिष्यति** । (व०उ० ४/५/१५)

**नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।**
**न चैनं क्लेदयन्त्यापो न शोषयति मारूतः ।।**

(गीता २/२४)

**इति बृहदारण्यकोपनिषदि पञ्चमाध्याये श्रीराघवकृपाभाष्ये पूर्णब्रह्मनाम प्रथमं ब्राह्मणं सम्पूर्णम् ।**

**।। श्रीराघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। द्वितीयब्राह्मणम् ।।

अथ दमदानदयानां वर्णनाय आख्यायिका प्रारभ्यते त्रयाणामपि ब्रह्मोपासने समुपयोगात् ।

**त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊण्चुर्ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञाशिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ।।१।।**

प्राजाप त्याः प्रजापतेर्ब्रह्मणोऽपत्यानि त्रयाः । त्रयोः अवयवा येषां ते त्रयाः देवाः मनुष्याः असुराः सत्वरजस्तमो बहुलाः पितरि प्रजापतौ ब्रह्मणि जनकेः अत्र सामीप्ये सप्तमी उपश्लेषस्य सामीप्यार्थकत्वात् ब्रह्मचर्यम् एतन्नियमम् ऊषु वसन्ति स्म । उषित्वा नियमं समाप्य उपदेष्टुं विज्ञातः तेभ्यः देवेभ्यः द इति एकाक्षरमुवाच व्यज्ञाशिष्ट विज्ञातवन्तो यूयम् इति पृष्टा देवाः प्रोचुः व्यज्ञासिष्म विदितवन्तो वयम् । किमिति द इत्यनेन दाम्यत इति प्राह भवान् अस्मान् भोगबहुलेभ्योऽस्मभ्यम् इन्द्रियाणां दमः महानुपदेशः ब्रह्मणापि व्यज्ञाशिष्ट विदितवन्तोऽभूत इति सन्तोषः प्रकाशितः ।।श्रीः।।

अथ मनुष्यज्ञानं प्राहः—

**अथ हैनं मनुष्या ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैत देवाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दत्तेति न आत्थेत्योमिति होवाच व्यज्ञासिष्टेति ।।२।।**

तैः प्रार्थितः द इत्युवाच तेऽपि पूर्ववत् दध्वम् इत्यर्थं ज्ञात्वा व्यज्ञासिष्म इति पितरं प्राहुः दध्वमिति त्वमात्थ दानेनैवास्माकं कल्याणम् आमिति सन्तुष्टो ब्रह्मा ।।श्रीः।।

अथासुर ज्ञानं वर्णयति—

**अथ हैनमसुरा ऊचुर्ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा ३ इति व्यज्ञासिष्मेति होचुर्दयध्वमिति न आ़त्थेत्योमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रय ँ शिक्षेद्दमं दानं दयामिति ।।३।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असुषु रमन्ते इत्यसुराः तैः प्रार्थितः एकाक्षरं द इत्युवाच तेऽपि पितरं प्राहुः द इत्यक्षरेण भवान् दयध्वमित्याह वयं क्रूरस्वभावाः तस्माद् भूतेषु दयां करवामहै ओमिति सन्तोषं प्रकटयत् ब्रह्मा । इदमेव दैवी वाक् मेघगर्जनेन द द द इत्यनु वदति देवाः दाम्यत मनुष्यादध्वम् असुराः दयध्वमिति दमं दानं दयां च त्रिगुणावच्छिन्नः अनुशिक्षेत एभिस्त्रिभिः सत्यं ज्ञानमनन्तं ब्रह्मेति विशेषणत्रयावच्छिन्नं ब्रह्माधिगन्तुं प्रभवेत् इति शास्त्रार्थः ।।श्रीः।।

**इति बृहदारण्यकोपषिद्भाष्ये पञ्चमाध्यायेश्रीराघवकृपाभाष्ये द्वितीयं प्राजापत्यं ब्राह्मणं सम्पूर्णम् ।**

**।। श्रीराघवः शन्तनोतु ।।**

## ।। तृतीयब्राह्मणम् ।।

अथ हृदय ब्रह्मोपास्तिं निरूपयति—

**एष प्रजापतिर्यद्धृदयमेतद् ब्रह्मैतत्सर्वं तदेतत्त्र्यक्षर ँ हृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यमित्येकमक्षरमेति स्वर्गं लोकं य एवं वेद ।।१।।**

एषः प्रजापतिः परमात्मैव हृदयं प्रत्यक्षरं ब्रह्म वर्णयति । हृ-द-य इति त्रीण्यक्षराणि तत्र त्रीण्यपि ब्रह्मनामानि व्युत्पत्या ब्रह्मार्थत्वं दर्शयति । हरन्ति गमयन्ति सम्पूर्णानि पदार्थान् भूतानि यस्मै इति हृ ददति बलिं जीवाः यस्मै तद्दम् । एति स्वर्गं येन तत् यं हृ एव दम् एव यम् इति हृदयमिदं तु प्रादेशमात्रमन्यापि व्युत्पत्तिः । एवं भूता कर्तुं शक्यते यथा हरति भक्तानां कष्टं यत् तत् हृ, ददाति भक्तेभ्यः सम्पूर्णानि कामानि यत्तत् दं, यापयतिं स्वभक्तान् रावणादीनपि स्वेन समरनिहतान् यत् तत् यं, एवं वेद स स्वर्गं याति ।।श्रीः।।

**इति बृहदारण्यकोपनिषद्भाष्येपञ्चमाध्याये श्रीराघवकृपाभाष्ये हृदयब्राह्मणं नाम तृतीय ब्राह्मणं सम्पूर्णम् ।**

**।। श्रीराघवः शन्तनोतु ।।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। चतुर्थब्राह्मणम् ।।

अथ सत्यब्रह्मोपासनां वर्णयति—

**तद्वै तदेतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् जित इन्न्वसावसद्य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ।।१।।**

तदेतत् हृदयमेव आस किं रूपम् अतआह—सत्यं, सद्भ्योहितं सत्यं सत् एव सत्यं प्रथमजं परमेश्वरस्य प्रथमावताररूपं यक्षमिज्यते पूज्यते सद्भिः संगम्यते असुरनाशार्थं च उपामन्त्र्यते इति यक्षम् एवं यः देवसः इमाल्लोकाञ्जयति भूरादीन् ब्रह्म पर्यन्तान् एवम् असौ शत्रुः जितस्तेन मानसः कामादिः असच्च यतो हि सत्यमेव प्रथमावतारं यत्तु सच्च त्यच्च इति व्याचक्षते तद्मायावाददुर्वासनामलीमसमानसतया व्याकरणानभिज्ञत्वाच्च स्वकल्पितमतस्थापनसन्निपातवसंवदत्वाच्च ।।श्रीः।।

इति बृहदारण्यकोपनिषदि पंचमाध्याये चतुर्थ ब्राह्मणं संम्पूर्णम् ।
।। श्रीराघवः शन्तनोतु ।।

## ।। पंचमब्राह्मणम् ।।

भूयस्तदेव विशिनष्टि—

**आप एवेदमग्र आसुस्ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्तेदेवाः सत्यमेवोपासते तदेतत्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैवं विद्वाꣳसमनृतꣳ हिनस्ति ।।१।।**

आपः जलाभिमानिदेवता आसुः बभूवुः ब्रह्मद्रवपरिणामभूता इति भावः, ताः प्रथमं सत्यं रचितवत्यः सत्यमित्यत्र वर्णत्रयं स त् य सकारो यकारश्च सत्यवाचकौ तकारश्च अनृतवाचकः द्वाभ्यां परिभूत बलत्वात् तत् सत्यबहुलं, यः एवं वेद सः सत्यमेव सत्यभूयं सत्यत्वं प्राप्तो भवति येनं अन्तम् असत्यं न हिनस्ति न नाशयति ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथान्योन्यत्र प्रतिष्ठितं सत्यरूपं ब्रह्म आदित्यमण्डलस्थचाक्षुषपुरुषतया प्रतिपादयति—

**तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषस्तावेतावन्योन्यस्मिन्प्रतिष्ठितौ रश्मिभिरेषोऽस्मिन्प्रतिष्ठितः प्राणैरयममुष्मिन् स यदोत्क्रमिष्यन्भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ।।२।।**

इदं सत्यस्वरूपं ब्रह्म द्वेधाविभक्तमेकम् आदित्यमण्डलपुरुषरूपमपरं दक्षिणाक्षिपुरुषाकारम् उभावपि परस्परस्मिन् प्रतिष्ठितौ रश्मिभिः सूर्यमण्डलस्थः दक्षिणनेत्रे अयञ्च प्राणैस्तत्रं एवं विद्वांस परलोकं गच्छन्तं सूर्यरश्मयः न प्रत्यवायरूपाः भवन्ति ।।श्रीः।।

पुरुषावयवं विशिनष्टि—

**य एष एतस्मिन्मण्डले पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ।।३।।**

सूर्यमण्डलस्थपुरुषस्य भूरिति एकाक्षराव्याहृतिः, शिरः भुवः इति व्याहृतेः उभे अक्षरे द्वौ बाहू, स्वः इति द्वे अक्षरे द्वे प्रतिष्ठे द्वौ चरणौ, अहः इति तस्य उपनिषत् रहस्यमन्त्रव्युत्पत्तिं संकेतयति य इत्यादिना—एवं विदुषः पाप्मानं हन्ति एष संकेतः व्युत्पत्तिश्च अम् अघं हन्ति इति अहः ।।श्रीः।।

अथ चाक्षुष पुरुषस्यावयवान् विशिनष्टि—

**योऽयं दक्षिणेऽक्षन्पुरुषस्तस्य भूरिति शिर एकँ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ।।४।।**

दक्षिणाक्षपुरुषस्य भूःशिरः भुवः बाहू, स्वः चरणौ अहमिति उपनिषद् अत्र व्युत्पत्तिद्वयम् अघं हन्ति इति अहम् अघं जहाति त्यजति वा ।।श्रीः।।

**इति बृहदारण्यकोपनिषदि पंचमाध्याये श्रीराघवकृपाभाष्ये सत्यब्रह्मसंस्थानं नाम पंचमं ब्राह्मणं सम्पूर्णम् ।**

**।। श्रीराघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। षष्ठब्राह्मणम् ।।

मानसपुरुषोपासनां निरूपयति—

**मनोमयोऽयं पुरुषो भाः सत्यस्तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च ।।१।।**

अयं पुरुषः मनोमयः मनःप्रचुरचैतन्यः भाः प्रकाशरूपः सत्यः व्रीहि यव इव स्थितः हृदयन्तः अयमेव सर्वस्य वशी नियन्ता ईशानः शासकः यत्किंच स्थावर जंगमम् इदं सर्वं प्रशास्ति अधिकरोति । अनेनैव ब्रह्मणश्चिदचिद् विशिष्टत्वं सूचितम् ।।श्रीः।।

**।। इति षष्ठ ब्राह्मणः ।।**

**।। श्रीराघवः शन्तनोतु ।।**

## ।। सप्तमब्राह्मणम् ।।

अथ विद्युद् ब्रह्मभजनीयत्वेन वर्णयति—

**विद्युद्ब्रह्मेत्याहुर्विदानाद्विद्युद्विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युदेव ब्रह्म ।।१।।**

विद्युद् ब्रह्मरूपं तदनुरुपां व्यत्पत्तिं प्रदर्शयति विदानिति विशेषेण द्यति खण्डयति पापानियासा विद्युत ।।श्रीः।।

**।। इति सप्तम ब्राह्मणः ।।**

**।। श्रीराघवः शन्तनोतु ।।**

## ।। अष्टमब्राह्मणम् ।।

वाचं धेनुमिव वर्णयति कोशेऽपि गौरितिवाक् पर्यायः—

**वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारस्तस्यै द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं च मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अत्र रूपकं गोरिव वाचः पार्श्वेऽपि स्वाहावषट्हन्तस्वधा इति चत्वार स्तनाः दुग्धमिव फलं प्रयच्छन्ति। तत्र देवेभ्यः स्वाहावषट् रूपौ, पितृभ्यः स्वधारूपः कव्यं, मनुष्याय हन्त इति उत्साहरूपः कर्मफलम् अन्येषा कृते वामनिष्फला इति भावः ।।श्रीः।।

।। इति अष्टमब्राह्मणम् ।।
।। श्रीराघवः शन्तनोतु ।।

## ।। नवम ब्राह्मणम् ।।

वैश्वानरं निर्वक्ति—

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन्भवति नैनं घोषँ शृणोति ।।१।।**

विश्वेषां नराणाम् अयं सम्बन्धिभूतः इति वैश्वानरः नरे च संज्ञायामिति दीर्घः। सैषिकश्चाण् प्रत्ययः। यथोक्तं श्रीगीतासु—

**अहं वैश्वानरः भूत्वा प्राणिनां देहमाश्रितः ।**
**प्राणाःपानसमायुक्तः पचाम्यन्नं चतुर्विधं ।।श्रीः।।**

**(गीता १५/१४)**

।। इति नवमब्राह्मणम् ।।
।। श्रीराघवः शन्तनोतु ।।

## ।। दशमब्राह्मणम् ।।

अन्योपासनाभ्यः प्राप्तां गतिं निरूपयति—

**यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छत्यशोकमहिमं तस्मिन्वसति शाश्वतीः समाः ।।१।।**

एतत् लोकं त्यक्त्वा वायुः विजिहीते गमयति, शेषं सरलं, एवं वायुसूर्य चन्द्रमसां साहा य्येन क्षयिष्णुलोकं प्राप्य पुनरावर्तत इति भावः ।।श्रीः।।

।। इति दशमब्राह्मणम् ।।
।। श्रीराघवः शन्तनोतु ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। एकादशब्राह्मणम् ।।

व्याधौ श्मशाने च तपोदृष्टिं कुर्वन् तद् दुःखेन न खिद्येत इत्याह—

**एतद्वै परमं तपो यद्व्याहितस्तप्यते परमँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमरण्यँ हरन्ति परमँ हैव लोकं जयति य एवं वेदैतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमँ हैवं लोकं जयति य एवं वेद ।।१।।**

**व्याधितः क्लेशनं यद्धि तत् तस्य परमंत पः ।**
**श्मशाने पावकाधानं ततोऽप्यतितरां तपः ।।**

**एवं विद्वान् महाभागो जरामरणतापतः ।**
**न बिभेति विचारेण श्रुतिवाक्यमनुस्मरन् ।।श्रीः।।**

।। इत्येकादशब्राह्मण् ।।

।। श्रीराघवः शन्तनोतु ।।

## ।। द्वादशब्राह्मणम् ।।

अथ प्रकरणात् अन्नप्राणयोर्ब्रह्मदृष्टिमाह—

**अन्नं ब्रह्मेत्येक आहुस्तन्न तथा पूयति वा अन्नमृते प्राणात्प्राणो ब्रह्मेत्येक आहुस्तन्न तथा शुष्यति वै प्राण ऋतेऽन्नादेते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतस्तद्ध स्माह प्रातृदः पितरं किँ स्विदेवैवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति स ह स्माह पाणिना मा प्रातृद कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति तस्मा उ हैतदुवाच वीत्यन्नं वै व्यन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन्भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ।।१।।**

केचन अन्नं ब्रह्म आहुः तत् न, प्राणं विना तत् पूयति दुर्गन्धियुक्तं भवति, प्राणोऽपि अन्नमन्तरेण शुष्यति अतः प्रातृदः स्वपितरम् ऋषिं निर्णयाय पृच्छति सनिषिध्यति यतः एकैकं न ब्रह्म निषेध मुखेन व्याचष्टे विरम शान्तो भव इति निषेधः । व्याख्यानं तु वि इति अन्नम् अत्र सर्वाणि भूतानि विष्टानिरम इति प्राणः अत्र सर्वाणि भूतानि रमन्ते ।।श्रीः।।

।। इति द्वादशब्राह्मण् ।।

।। श्रीराघवः शन्तनोतु ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। त्रयोदशब्राह्मणम् ।।

प्राणेष्वूक्थदृष्टिं व्याहरति—

**उक्थं प्राणो वा उक्थं प्राणो हीदँ सर्वमुत्थापयत्युद्धास्मादुक्थ-विद्वीरस्तिष्ठत्युक्थस्य सायुज्यँ सलोकतां जयति य एवं वेद ।।१।।**

उक्थं स्तोत्रविशेषः लोकानामुत्थापनात् प्राणोऽपि साधर्म्यम् उत्थापयति इत्युक्थमुत्तिष्ठंति अस्मात् इत्युक्थम् ।।श्रीः।।

**यजुः प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यँ सलोकतां जयति य एवं वेद ।।२।।**

युज्यन्ते सर्वाणि भूतानि अनेन संबध्यन्ते युज्यन्ते च उपयोगीनि भवन्ति चराचराणि यस्मै इति विग्रहाभ्यां यजुः साधारण्यं प्राणेन ।।श्रीः।।

**साम प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यँ सलोकतां जयति य एवं वेद ।।३।।**

समत्वात् सम्यगञ्चनाच्च प्राणसामान्यम् ।।श्रीः।।

प्राणेक्षत्रदृष्टिं निरूपयति—

**क्षत्रं प्राणो वै क्षत्रं हि त्रायते हैनं प्राणः क्षणितोः प्र क्षत्तमत्रमाप्नोति क्षत्रस्य सायुज्यँ सलोकतां जयति य एवं वेद ।।४।।**

प्राणः क्षत्रं स्वयं क्षतात् प्राणभृतं त्रायते प्राणं चापि प्राणभृतः क्षणितः शस्त्रेण वृणितोऽपि त्रायते त्रातुं यतते इत्युभयसामान्यम् ।।श्रीः।।

।। इति त्रयोदशब्राह्मणम् ।।

।। श्रीराघवः शन्तनोतु ।।

## ।। चतुर्दशब्राह्मणम् ।।

अथ गायत्र्युपासनां निरूपयति—

**भूमिरन्तरिक्षं द्यौरित्यष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ।।१।।**

गायत्र्याः मूलतश्चतुर्विंशतिरक्षराणि, पूर्वं प्रणवसहिताः त्रिव्याहृतयः पश्चात् चतुर्थो पादः स न सर्वसामान्यः अत्रपादत्रये क्रमेण प्रतिपादम् अष्टावक्षराणि भवन्ति प्रथमपादे तत, सवितु र्वरेण्यम् एवं भूमिः अन्तरिक्ष, दियौ द्यौ इत्यष्टौक्षराणि एवं प्रथमपादे त्रिलोकीमुपासीत ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ऋचो यजूँषि सामानीत्यष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ।।२।।**

गायत्र्याः द्वितीयं पदं भर्गो, दे, व, स्य, धी, म, हि, एवम्, ऋ, चः, य, जू, षि, सा, मा, नि, इत्यष्टाक्षराणि एवं द्वितीययपदे तृतीमुपासीनः त्रिवर्गं जयति ।।श्रीः।।

पुनस्तृतीयपादे—

**प्राणोऽपानो व्यान इत्यष्टावक्षराण्यष्टाक्षरँ ह वा एकं गायत्र्यै पदमेतदु हैवास्या एतत्सय यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेदाथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति यद्वै चतुर्थं तत्तुरीयं दर्शतं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपत्येवँ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ।।३।।**

गायत्र्यास्तृतीये पदे धि, यो, यो, नः, प्र, चो, द, या, त, तच्च प्रा, ण, अ, पा, न, वि, आ, न इत्यष्टाक्षरम् एवं तृतीयेपादे प्राणत्रयमुपीसत स यावत् प्राणं जयति एतस्याः तुरीयं पदं यन्निवृत्तिमार्गिणः पठन्त्यस्मदादयः परोरजा दर्शतं पदं दृश्यते इति दर्शतं तादृशं पदं यत्परोरजाः रजसः परिभूतं यशसाश्रिया प्रकाशते राजते इति रजाः इति हि तत्र त्युत्पत्तिः । एवं परः सन् रजाः दर्शतं यत् पुरा ऋषिभिर्ददृशे दर्शतु इति दृशधातोः भूतकाले क्तः अकारः गुंणश्च छान्दसौ ।।श्रीः।।

अथगायत्री प्रतिष्ठां वर्णयति—

**सैषा गायत्र्येतस्मिँस्तुरीये दर्शते पदे परोरजसि प्रतिष्ठिता तद्वै तत्सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्माद्यदिदानीं द्वौ विवदमानावेयातामहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एवं श्रद्दध्याम तद्वै तत्सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत्प्राणो प्रतिष्ठित तस्मादाहुर्ब ँसत्यादोगीय इत्येवम्वैषा गायत्र्ध्यात्मं प्रतिष्ठिता सा हैषा गयाँस्तत्रे प्राणा वै गयास्तत्प्राणाँस्तत्रे तद्यद्गया ँस्तत्रे तस्माद् गायत्री नाम स यामेवामूँ सावित्रीमन्वाहै षैव सा स यस्मा अन्वाह तस्यप्रणाँस्त्रायते ।।४।।**

एषा गायत्री तुरीये पदे प्रतिष्ठिता तत् ब्रह्मसस्ये सत्यं चक्षुषि तस्यैव सतयापनत्वात् तद्बले बलं च प्राणे एवं गीयन्ते स्तूयन्ते सर्वैरिन्द्रियैः इति गयाः प्राणाः प्राणस्तुतेः । प्रश्नोपनिषदि अत्रैव चोपलभ्ये ताँस्तत्रे रक्षितवती इति गायत्री, गयास्तत्र इति गयत्रा एव गायत्री इति हि तत्रवैयाकरणसम्मतव्युत्पत्तिः सवितास्य देवता तस्मादियं सावित्री सास्यदेवता इत्यनेन अण् ङीप्च यदि कस्मैचित् वटुकाय अष्टवर्षाय ब्राह्मण बालकाय यदि कोऽपि गायत्रीमाह उपदिशति तर्हि तस्य प्राणान्त्रायते ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ताँ हैतामेके सावित्रीमनुष्टुभमन्वाहुर्वागनुष्टुबेतद्वाचमनुब्रूम इति न तथा कुर्याद्गायत्रीमेव सावित्रीमनुब्रूयाद्यदि ह वा अप्येवंविद्बह्विव प्रतिगृह्णाति न हैव तद्गायत्र्या एकंचन पदं प्रति ।।५।।**

केचन इमामनुष्टुब्दृष्ट्या आहुः वाग् वै अनुष्टुप् यद्यपि अत्र गायत्री छन्दः तत्रानुष्टुभः प्रसर एव नहि परन्त्वत्र अनुष्टुपरूप वाग् दृष्टिं निवारयति । अर्थात् इमां सामान्यवाचः अतिरिक्तत्वेन अलौकिकी मत्वा उपासीतं ततः बहु प्रतिगृह्णन्नपि गायत्र्याएकपदमपि क्षिणोति पापं तत् ।।श्रीः।।

**स य इमाँ स्त्रींल्लोकान्पूर्णान्प्रतिगृह्णीयात्सोऽस्या एतत्प्रथमं पदमाप्नुयादथ यावतीयं त्रयी विद्या यस्तावत्प्रतिगृहणीयात्सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृहणीयात्सोऽस्या एतत्तृतीयं पदमाप्नुयादथास्या एतदेव तुरीयं दर्शतं पदं परोरजा य एष तपति नैवकेन चनाप्यं कुत उ एतावत्प्रतिगृहणीयात् ।।६।।**

**लीयते प्रथमेपादे त्रिलोक्यास्तु प्रतिग्रहः ।**
**त्रैविद्यायाः द्वितीयेतु प्राणानाञ्चतृतीयते ।**
**चतुर्थं यत् परीभूतं राजतेसर्वतोऽधिकं ।**
**तावत् प्रतिग्रहं कर्त्तुं केन शक्यं नरेण वै ।।श्रीः।।**

**तस्या उपस्थानं गायत्र्यस्येकपदी द्विपदी त्रिपदी चतुष्पद्यपदसि न हि पद्यसे । नमस्ते तुरीयाय दर्शताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यादसावस्मैकामो मा समृद्धीति वा न हैवास्मै स कामः समृद्ध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ।।७।।**

तस्या उपस्थानं वर्णयति इयं गायत्रीछन्दसोविमलर्षीकः परमात्मदैवतो मन्त्रः हे गायत्रिमातः । त्वं एकपदी त्रिलोकरूपा द्विपदी त्रयी उक्ता त्रिपदी प्राणमयी चतुष्पदी परोरजः इत्यंशयुक्ता, वस्तुतस्तुत्वम् अपद् असि नास्तिपादः यस्यास्ततथाभूता अखण्डस्फोटरूपा न प्राप्यसे अतस्ते तुरीयाय परोरजसे दर्शताय पदाय नमः । असौ अदः तत्पदं मा प्रापत न प्राप्तवान् अहम्, अथवा असौ शत्रुः अदः एतच्छरणं गतं मां मा प्रापत न स्प्रष्टुं प्रभवेत् इति अस्य उपस्थानस्य आभिचारिकोऽपि प्रयोगः संकेत्यते । इयं वै इत्यादिना यं शत्रुं द्विष्यात् द्वेषं कुर्यात् असौ मासमृद्धीत इति कामः, उपतिष्ठेत अस्म तदा स न समृध्यते अहमेतत् प्राप्नुयाम इति कामयमानः उपतिष्ठेत तदा प्राप्नोत्येव । नन्वत्र अध्यात्मविद्यायां के शत्रवः यान् प्रत्युपस्थानं विधीयते ? इति चेत् लोकतोऽपि भूयांसः कामादयोदुर्जयाः तान् प्रति असौ कामः कोधोवा मासमृद्धीत इति संकल्प्य उपतिष्ठेत चेत् नैव स समृध्यते इति श्रुतिवाक्ये विश्वासः करणीयः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथ गायत्र्याः मुखविधाने अर्थवादाः—

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविदब्रूथा अथ कथँ हस्तीभूतो वहसीति मुखँ ह्यस्याः सम्राण्न विदांचकारेति होवाच तस्या अग्निरेव मुखं यदि ह वा अपि वह्विवाग्नावभ्यादधति सर्वमेव तत्संदहत्येवँ हैवैवंविद्यपि वह्विव पापं कुरुते सर्वमेव तत्संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति ।।८।।**

विदेहराजो जनकः अश्वतराश्वस्य अपत्यं पुमांसम् आश्वतराश्विं वुडिलं हस्तिशरीर-प्राप्तं पप्रच्छ कथं गायत्रीविद्भूत्वा हस्तिशरीरं प्राप्य भारं वहसि, स आह राजन् अहं मुखं गायत्र्या न जानामि अतोहस्त्यभवं, जनकः प्राह गायत्र्या अग्निरेव मुखम् अग्नेरेन्धनानामिव अस्याः सकलप्रतिग्रह पाप्मनां दाहकत्वसामर्थ्यवत्वात् ।।श्रीः।।

।। इति चतुर्दशब्राह्मणम् ।।

।। श्रीराघवः शन्तनोतु ।।

## ।। पञ्चदशब्राह्मणम् ।।

अथ पञ्चदशेब्राह्मणे प्रवृत्तिमार्गिणां सूर्यवायुपावकप्रार्थनं विदधत्ते—

**हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखं । तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये । पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन्समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि । योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भष्मान्तँ शरीरम् ॐ क्रतो स्मर कृतँ स्मर क्रतो स्मर कृतँ स्मर । अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम ।।१।।**

इमे मन्त्राः ईशावास्योपनिषदि पञ्चदशात् अष्टादशं यावत् उपवर्णिताः, त एवात्र ब्राह्मणे गृहीताः बृहदारण्यकोपनिषदिः ते तत्रसविस्तर व्याख्यातचराः तत्रैव द्रष्टव्याः ।।श्रीः।।

**इति चित्रकूटस्थ सर्वाम्नायश्रीतुलसीपीठाधीश्वर जगद्गुरुरामानन्दाचार्या स्वामि रामभद्राचार्य प्रणीतं बृहदारण्यकोपनिषदि पञ्चमाध्याये श्रीराघवकृपाभाष्यं सम्पूर्णम् ।।**

**।। श्रीराघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। अथ षष्ठाध्यायः ।

## ।। प्रथमब्राह्मणम् ।।

### मंगलाचरणम्

नानाकर्मविपाकदावदहने दन्दह्यमानं द्रुतं ।
ताम्यन्तं तरुणतृत्रषा विकलितं प्रस्विन्नशुष्यन्मुखम् ।।
अन्विच्छन्तमथो त्वदीयकरुणाकादम्बिनीजीवनं ।
हे हे राघव पाहि पाहि विदृशं षष्ठ्येमां पापिनम् ।।

अथ असारसंसारतो वैराग्यसमुत्पादनाय संसारसंसरणं षष्ठे सविस्तरं निरूपणीयं, पञ्चमे ब्राह्मणेऽन्तिमे मरणकालस्थितिर्निरूपिता तदन्तरं ध्रुवजनितवात् सकामकर्माणि विवेच्यानीति संबन्धः —

**ॐ ।। यो वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवत्यपि च यैषां बुभूषति य एवं वेद ।।१।।**

प्राणाः ज्येष्ठाश्च श्रेष्ठाश्च प्राथम्यात् सद्गुणैरपि एवं विद्वान् कुले स्वस्मिन् ज्येष्ठः श्रेष्ठो भवेदिह ।।श्रीः।।

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवत्यपि च येषां बुभूषति य एवं वेद ।।२।।**

वासयति सर्वान् अर्थान् क्रोडीकरोति इति वसा अतिसयेन वसा इति वसिष्ठा वाण्यां संपूर्णानाम् अर्थानामन्तरभूतत्वात् ।।श्रीः।।

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे च य एवं वेद ।।३।।**

प्रतितिष्ठति सम्मानं लभते यया सा प्रतिष्ठा चक्षुर्हि साक्षात्हेतुतया सत्यप्रतिष्ठा ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यो ह वै संपदं वेद सँ हास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपच्छ्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः सँ हास्मै पद्यते यं कामं कामयते य एवं वेद ।।४।।**

श्रोत्रं हि शब्दसाक्षात्कारे हेतुः वेदाश्च शब्दमयाः ते श्रोत्रद्वारेणैव शब्दरूपतया संपद्यन्ते अतः श्रोत्रं संपत् ।।श्रीः।।

**यो ह वा आयतनं वेदायतनँ स्वानां भवत्यायतनं जनानां मनो वा आयतनमायतनँ स्वानां भवत्यायतनं जनानां य एवं वेद ।।५।।**

आयतनं नाम निवासः मनसि संस्काराणां निवासात् तथात्वम् ।।श्रीः।।

**यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभी रेतो वै प्रजातिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ।।६।।**

रेतसः प्रजननहेतुत्वात्प्रजापतिसामान्यं सर्वेषु अंगेषु तद्देवताधारणया रतिसमुपासनाविधानेन एषु देव बुद्धिं सूचयन्ति एषाम् अशास्त्रीयप्रयोगं वारयति इति मे मनीषितम् ।।श्रीः।।

**ते हेमे प्राणा अहँ श्रेयसे विवदमाना ब्रह्म जग्मुस्तद्धोचु को नो वसिष्ठ इति तद्धोवाच यस्मिन्व उत्क्रान्त इदँ शरीरं पापीयो मन्यते स वो वसिष्ठ इति ।।७।।**

अहं श्रेयः तस्मै विवदमानाः सर्वे प्राणपदार्थाः सर्वे चक्षुरादयः प्रजापतिं जग्मुः गतवन्तः प्रजापतिः उवाच वः युष्माकं मध्ये यस्मिन् उत्क्रामति गच्छति शरीरं पापीयः अशुभं प्रतीयते स एव वसिष्ठः ।।श्रीः।।

**वाग्घोच्चक्राम सा संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा कला अवदन्तो वाचा प्राणान्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँ सो मनसा प्रजायमाना रेत सैवमजीविष्मेति प्रविवेश ह वाक् ।।८।।**

अकलाः मूकाः वाचमृते सर्वेषां जीवनोपपत्तेः ।।श्रीः।।

**चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाऽन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाँ सो मनसा प्रजायमान रेतसैवमजीविष्मेति प्रविवेश ह चक्षुः ।।९।।**

दृष्टिमृतेऽपि जीवनोपलब्धेः ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रोत्रँ होच्चक्रामतत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथाबधिरा अश्रृणवन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाँसो मनसा प्रजायमाना रेतसैवमजीविष्मेति प्रविवेश ह श्रोत्रम् ।।१०।।

मनो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा मुग्धा अविद्वाँसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसैवमजीविष्मेति प्रविवेशह मनः ।।११।।

रेतो होच्चक्राम तत्संवत्सरं प्रोष्यागत्योवाच कथमशकत मदृते जीवितुमिति ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तचक्षुषा शृण्वन्तः श्रोत्रेण विद्वाँसो मनसैवम जीविष्मेति प्रविवेश ह रेतः ।।१२।।

एवं श्रोत्ररेतसोरप्यभावे जीवनस्य उपपत्तौ नेमे वसिष्ठाः ।।श्रीः।।

अथ ह प्राण उत्क्रमिष्यन्यथा महासुहयः सैन्धवः पड्वीशशङ्कून्संवृहेदेवँ है वेमान्प्राणान्संववर्ह ते होचुर्मा भगव उत्क्रमीर्न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ।।१३।।

उत्क्रमिष्यन् गमिष्यन् संववर्ह उत्पाटयामास महासुहयः महावेगशाली घोटकः । प्राणं विना जीवनस्य दुर्धरत्वात् ज्येष्ठता श्रेष्ठता वसिष्ठता प्रतिष्ठा सम्पत् समपदायतनत्वं सर्वं प्राण एव ।।श्रीः।।

सा ह वागुवाच यद्वा अहं वसिष्ठाऽस्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहँ संपदस्मि त्वं तत्संपदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनोयद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं वास इति यदिदं किंचाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न हवा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाँसः श्रोत्रिया अशिष्यन्त आचामन्त्यशित्वा चामन्त्येतमेव तदनमनग्नं कुर्वन्तो मन्यन्ते ।।१४।।

सुगमम् ।।श्रीः।।

।। इति प्रथमब्राह्मणम् ।।

।। श्रीराघवः शन्तनोतु ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। द्वितीयब्राह्मणम् ।।

अथ श्वेतकेतु प्रवाहण संवादं प्रारभते—

**श्वेतकेतुर्हवा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमारा ३ इति स भो ३ इति प्रतिशुश्रावानुशिष्टोऽन्वसि पित्रेत्योमिति होवाच ।।१।।**

कुमार अनुशिष्टः पित्राः अनुशिक्षितः ॐ इति स्वीकरोति श्वेति केतुः ।।श्रीः।।

अथ पञ्चप्रश्नान् समुत्थापयति—

**वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता ३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता ३ इति नेति हैवोवाच वेत्थो यथा सौलोकं बहुत्रिः पुनः पुनः प्रयद्‌भिर्न संपूर्णतया ३ इति नेति हैवोवाच वेत्थो यतिथ्यामाहुत्या ँ हुतायामाप पुरुषवाचोः भूत्वा समुत्थाय वदन्ती३ इति नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा यत्कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतम् । द्वे सृती अश्रृणवं पितृणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ।।२।।**

**प्रजानां गमनं तत्र प्रत्यागमनमेव च ।**
**अपूर्तिं तस्य लोकस्य पूर्यमाणस्य चान्वहं ।।**

**आहुतौ कतमायाञ्च आपोवाचोभवन्त्युत ।**
**याने च पितृदेवानां किं वेत्थद्विजसत्तम ।।**

**एषु नैकमहं वेद पञ्चप्रश्नेषु भूपते ।**
**इति तूष्णीं ययौ तातं श्वेतकेतुर्विलज्जितः ।।श्रीः।।**

**अथैनं वसत्योपमन्त्रयांचक्रेऽनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं त ँ होवाचेति वाव किल नो भवान्पुरानुशिष्टानवोच इति कथ ँ सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्ततो नैकंचन वेदेति कतमे त इतीम इति ह प्रतीकान्युदाजहार ।।३।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अथवसतये निवासाय आमन्त्रयाञ्चक्रे कुमारो न स्वीचकार राजन्यबन्धुः इति क्रोधपूर्णशब्दः न तु पारमार्थिकः प्रतीकान् नाममात्राणि ।।श्रीः।।

**स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किं च वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यंवत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैबलेरास तस्मा आसनमाहृत्योदकमाहारयांचकाराथ हास्मा अर्घ्यं चकार त ँ होवाच वरं भगवते गौतमाय दद्म इति ।।४।।**

पिता आश्वासयत् नः अस्मान् प्रैहि गच्छ या सह ब्रह्मचर्यं वत्स्यावह आराम विद्याशिक्षणार्थं शेषं सरलं ।।श्रीः।।

**स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचम भाष्यस्तां मे ब्रूहीति ।।५।।**

कुमारस्यान्ते समीपे यां वाचमभाषयाः तां पञ्चप्रश्नोत्तररूपां मे मह्यं ब्रूहि ।।श्रीः।।

**स होवाच दैवेषु वै गौतम तद्वरेषु मानुषाणां ब्रूहीति ।।६।।**

दैवेषु देवसंबन्धिषु मानुषाणां गवाश्वादीनां मध्ये किमपि ब्रूहि ।।श्रीः।।

**स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान्बहोरनन्तस्यापर्यन्तस्याभ्यवदान्योभूदिति सवै गौतम तीर्थेनेच्छासा इत्युपेम्यहं भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति स होपायनकीर्त्योवास ।।७।।**

अवदान्यः अदाता अन्यवरैःकिम् अहं भवन्तं तीर्थं मत्वा विद्यां गृह्णीयाम् इति वाङ्मात्रेण शिष्यतां स्वीचकार विद्यां जिघ्रक्षुर्ब्राह्मणः न खलु क्षत्रियं सेवते इति परम्परा ।।श्रीः।।

**स होवाच तथा नस्त्वं गौतम माऽपराधास्तव च पितामहा यथेयं विद्येतः पूर्वं न कस्मि ँश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ।।८।।**

स क्षमापयति मापराधाः मामपराधभाजनं मा मंस्थाः इतः पूर्वम् इयं विद्या न ब्राह्मणं गता किन्तु तुभ्यं यच्छामि ।।श्रीः।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गाबरा अवान्तर दिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ।।९।।**

अग्निरे बअयं लोकः तेषु देवाः श्रद्धां आस्तिक बुद्धि जुह्वति ।।श्रीः।।

**पर्जन्यो वाग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चिरशनिरङ्गारा ह्रादनयो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः सोमँ राजानं जुह्वाति तस्या आहुत्यै वृष्टिः संभवति ।।१०।।**

एवं द्वितीयाहुतिः पर्जन्ये यत्तु सोम एव हूयते ।।श्रीः।।

**अयं वै लोकाऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वाति तस्या आहुत्या अन्नँ संभवति ।।११।।**

तृतीयाहुतौ पृथिवीलोकाग्नौ वृष्टिर्भूयते ।।श्रीः।।

**पुरुषोवाऽग्निर्गौतम तस्य व्यात्तमेव समित्प्राणो धूमो वागार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति ।।१२।।**

चतुर्थे पुरुषाग्नौ अन्नं हूयते ।।श्रीः।।

**योषा वा अग्निर्गौतम तस्या उपस्थ एव समिल्लोमानि धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः संभवति स जीवति यावज्जीवत्यथ यदा म्रियते ।।१३।।**

**श्रद्धासोमस्तथावृष्टिः अन्नं रेत पंचमं ।**

**हूयमानं जलं चैभिः पुं वाचं जनयत्वित ।।श्रीः।।**

**अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित्समिद्धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विष्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भाष्वरवर्णः संभवति ।।१४।।**

अथान्तेऽष्टौ अग्नौ हूयमानः पुरुषः वास्तवीमाहुतिं प्रतिपद्याते ।।श्रीः।।

**ते य एवमेवतद्विदुर्ये चामी अरण्ये श्रद्धँ सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्य-माणपक्षाद्यान्षण्मासानुदङादित्य एति मासेभ्यो देवलोकं**

CC-0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्युतान्पुरुषो मानस एतत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु वसन्ति तेषां न पुनरावृत्तिः ।।१५।।**

अरण्ये वने ये श्रद्धामास्तिकबुद्धिमुपासते त एव अर्चिषः शुक्लपक्षं तस्माद्वायुं वायोरादित्यं तस्माद् वैद्युतं पुरुषं ततश्च मानसः भगवदीयपरिकरः ब्रह्मलोकं नयति तेषां पुनरावृत्तिर्न भवति ।।श्रीः।।

**अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति धूमाद्रात्रि ँ्रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति ताँ्स्तत्र देवा यथा सोम ँ्राजानमाप्यायस्वापक्षीयस्वेत्येवमेनाँ्स्तत्र भक्ष्यन्ति तेषां यदा तत्पर्य वैत्यथेममेवाकाश मभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान्प्रतयत्थायिनस्त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम् ।।१६।।**

एवं सकामाः यज्ञादिना लोकान्जित्वा धूमाद्रात्रि ततः कृष्णपक्षं ततः षड्मासान् ततश्चन्द्रमा ततः देवैर्भुज्यमानाः आकाशं पुनर्वायु वृष्टिं पुरुषं पुनर्योषां प्रपद्य जायन्ते य इदं श्रीगीतासु अष्टमे त्रयोविंशमारभ्य अष्टमपरिसमाप्तिं यावत् निपुणं निरूपिता भगवता तद्यथा ।

।। इति द्वितीयब्राह्मणम् ।।

।। श्रीराघवः शन्तनोतु ।।

## ।। तृतीयब्राह्मणम् ।।

अथ हवनविधानं निरूपयति, इदं कर्मकाण्डीयत्वात् स्वष्टत्वाच्च न व्याख्यायते ।

**स यः कामयेत महत् प्राप्नुयाभित्युदगवन आपूर्य माणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वौदुम्बरे कँ्से चमसे वा सर्वौषधं फलानीति सम्भृत्य परिसमुह्य परिलिप्याग्निमुपसामाधय परिस्तीर्यावृताज्यँ्सँ्स्कृत्य पुँ्सा नक्षत्रेण मन्थँ्सन्नीय जुहोति । यावन्तो देवास्त्वयि जातवेदस्तिर्यञ्चो घ्नन्ति पुरुषस्य कामान् । तेभ्यो भागधेयं जुहोमि ते मातृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा । या तिरश्ची निपद्यतेऽहं विधरिणी इति तां त्वा धृतस्य धारया यजे सँ्राधनीमहँ्स्वाहा ।।१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ् स्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सँ् स्रवमवनयति चक्षुषे स्वाहा सम्पदे स्वाहेत्यग्नौ हुत्वा मन्थे सँ् स्रवमवनयति श्रोत्राय स्वाहायतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सँ् स्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सँ् स्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सँ् स्रवमवनयति ।।२।।

आग्नेय स्वाहेव्यग्नौ हुत्वा मंथे सँ स्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति भू स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति ब्राह्मणे स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मंथे सँ् स्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मंथे सँ् सवमवनयति ।।३।।

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमस्येकसभमसि हिङ्कृतमसि हिङ्क्रियमाणमस्युद्गीयमस्युद्गीयमानमसि श्रवावितमसि प्रत्याश्रावितमस्याद्रे संदीप्तमसि विभूरसि प्रभूरस्यन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ।।४।।

अथैनमुद्यच्छत्यामँ् स्यामँ् हि ते महि स हि राजेशानोऽधिपतिः समाँ् राजेशानोऽधिपतिं करोत्विति ।।५।।

अथैनमाचामति तत्सवितुर्वरेण्यम् । मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः । भूः स्वाहा । भर्गो देवस्य धीमहि । मधु नक्तमुतोषसो मधुमत पार्थिवँ् रजः । मधु द्यौरस्तु नः पिता । भुवः स्वाहा । धियो यो नः प्रचोदयात् । मधुमान्नो वनस्पतिर्मधुमाँ् अस्तु सूर्यः । माध्वीर्गावो भवन्तु नः । स्वः स्वाहेति । सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदँ् सर्वं भूयासं भूर्भुवः स्वः स्वाहेत्यन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेक पुण्डरीकमस्यहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वँ्शं जयतिं ।।६।।

तँ् हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिन उक्त्वोवाचापि य एनँ् शुष्के स्थाणौ निषिञ्चेज्जायेरञ्शाखाः प्ररोहेयुः पलाशानीति ।।७।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिन उक्त्वोवाचापि य एनँ् शुष्के स्थाणौ निषिञ्चेज्जायेञ्शाखाः प्ररोहेयुः पलाशानीति ।।८।।

एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागावित्तेयऽन्तेवासिन उक्त्वोवाचापि य एनँ् शुष्के स्थाणौ निषिञ्चेज्जायेरञ्शाखाः प्ररोहेयुः पलाशानीति ।।९।।

एतमु हैव चूलो भागवित्तिर्जान्कय आयस्थूगायान्तेवासिन उक्त्वोवाचापि य एनँ् शुष्के स्थागौ निषिञ्चेज्जायेरञ्शाखाः प्ररोहेयुः पलाशानीति ।।१०।।

एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिन उक्त्वोवाचापि य एनँ् शुष्के स्थाणौ निषिञ्चेज्जायेरञ्शाखाः प्ररोहेयुः पलाशानीति ।।११।।

एतमु हैव सत्यकामो जाबालोऽन्तेवासिभ्य उक्त्वोवाचपि स एनँ् शुष्के स्थाणौ निषिञ्चेज्जामेरञ्शाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानन्तेवासिने वा ब्रूयात् ।।१२।।

चतुरौदुम्बरो भवत्यौदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्या उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खल्कुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चत्याज्यस्य जुहोति ।।१३।।

एवमस्मिन् ब्राह्मणे समस्ता अपि मन्त्राः कर्मकाण्डपराः । तत्तत् प्रशंसाविशेषणानि भगवद्विभूतितयैवोह्यानि । एतेषां वेदभाष्यावसरे व्याख्या करिष्यते ।।श्रीः।।

।। इति तृतीयब्राह्मणम् ।।

।। श्रीराघवः शन्तनोतु ।।

## ।। चतुर्थब्रह्मणम् ।।

एषां वै भूतानां पृथिवी रसः पृथिव्या आपोऽपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ।।१।।

स ह प्रजापतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियँ् ससृजे ताँ् सृष्टान उपास्त तस्मात् स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत्तेनैनामभ्यसृजत ।।२।।

तस्या वेदिरूपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवति य एवं विद्वानधोपहासं चरत्यासा ँ स्त्रीणा ँ सुकृतं वृङ्क्ते थ य इदमविद्वानधोपहासं चरत्यास्य स्त्रियः सुकृतं वृञ्जते ।।३।।

एतद्ध स्म वै तद् विद्वानुद्दालक आरूणिराहैतद्ध स्म वै तद्विद्वान्नको मौद्गल्य आहैतद्ध स्म वै तद्विद्वान कुमारहारित आह बहवो मर्या ब्राह्मणयना निरिन्द्रिया विसुकृतोऽस्माललोकात् प्रयनित य इदमविद्वा ँ सोऽधोपहासं चरन्तीति बहु वा इद ँ सुप्तस्य वा जाग्रो वा रेतः स्कन्दति ।।४।।

तदभिमृशेदनु वा मन्त्रयेत यन्मेऽद्य रेतः पृथिवीमास्तान्त्सीद यदोषदीरप्यसरद् यदपः । इदमहं तद्रेत आदहे पुनर्मामै त्विन्द्रियं पुनस्तेजः पुनर्भगः । पुनरिग्नधिष्ण्या यथास्थानं कल्पन्तामित्यनामिकाङ्गुष्ठाभ्यामदायन्तरेण स्तनौ वा मिभृज्यात ।।५।।

अथ यद्युदक आत्मानं पश्येत्तभिमन्त्रयेत मयि तेज इन्द्रियं यशो द्रविणँ, सुकृतमिति भीर्ह वा एष स्त्रिणां यन्मलोद्वासास्तस्मान्मलोद्वाससं यस्विनीमभिक्रम्योपमन्त्रयेत ।।६।।

सा चेदस्मै न दद्यात काममेनामवक्रीणीयात सा चेदस्मै नैव दद्यात काममेनां यष्टया वा पणिना वोपहत्यातिक्रा मेदिन्द्रियेण ते यशसा यश आदद इत्ययशा एव भवति ।।७।।

सा चेदस्मै यद्वादिन्द्रियेण ते यशसा यश आदधामीति यशश्विनामेव भवतः ।।८।।

स यामिच्छयेत् कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखपू संधायोपस्थमस्या अभिमृश्य जपेदङ्गादङ्गात संभवसि दधिजायसे । स त्वमङ्गकषायोऽषि दिग्धविद्धामिव मदयेमामम् मयीति ।।९।।

अथ यामिच्छेन गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुख ँ संधायाभ्रिप्राण्यापान्यादिन्द्रियेण ते रेतसा रेत आदद इत्यरेता एव भवति ।।१०।।

अथ यामिच्छेद दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखँ संधायावान्याभ्रिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति गर्भिण्येव भवति ।।११।।

अथ यस्य जरायै जारः स्यत्तं चेद् द्विष्यादाम पात्रेऽग्निमुपसमाधाय प्रतिलोम शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः प्रतिलोमा सर्पिषाक्ता जुडुयान्मम समिद्धेऽहौषीः प्राणापानो त आददेऽसाविति मम सामिद्धेऽहोषीः पुत्रपशु ँ स्त आददेऽसाविति मम समिद्धेऽहौषी रिष्टासुकृते त आददेऽसाविति मम

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति स वा एष निरिन्द्रियो विसुकृतोऽस्माल्लोकात् प्रैति यमेवंविद ब्राह्मणः शपति तस्मदेवंविच्छ्रोत्रियस्य दारेण नोपहासमिच्छे दुत ह्येवंवित परो भवति ।।१२।।

अथ यस्य जायामार्तवं विन्देत् त्र्यहं क ँ्से न पिबेदहतवासा नैनां वृशालो न वृषल्युप हन्यात त्रिरात्रान्त अप्लुत्य व्रीहिनवघातयेत् ।।१३।।

स य इच्छेत पुत्रो मे शुक्लो वेदमनुव्रवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्रीयातामिश्वरौ जनयितवै ।।१४।।

अथ य इच्छेत पुत्रो मे कपिलः पिङ्गलो जायेत द्वो वेदानुब्रवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नी यातामीश्वरौ जनयितव ।।१५।।

अथ य इच्छेत पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन वेदाननुब्रवीत सव्रमायुरियादित्यु दौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरो जनयितवै ।।१६।।

अथ य इच्छेद दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीशरौ जनयितवै ।।१७।।

अथ य इच्छेत पुत्रो मे पंडिप्तो बीगीतः समितिंगमः शुश्रुषितां वाचं भाषिता जायेत सर्वान वेदाननुब्रुवीत सर्वमायुरियादिति माँ सौदनं पाचयित्वा सर्पिष्मन्तमश्रीयातामीश्वरौ जनमितवा औक्षेण वार्षभेण वा ।।१८।।

अथाभिप्रातरेव स्थालीपाकामृतांजयं चेष्टित्वा स्थालीपाकस्योपधातं जुहोत्यग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रासवाय स्वाहेति हुत्वो दधृत्यप्राश्नाति प्राश्येतरस्याः प्रयच्छति प्राक्षाल्य प्राणीउदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षत्युत्तिष्ठातोविश्वासोन्यामिच्छ प्रपूर्त्यां सं जायं पत्यासहेति ।।१९।।

अथैनामभिपद्यतेऽमोऽहममिम सा त्व ँ्सा त्वमस्यमोऽहं सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वं तावेहि स ँ्रभावहै सह रेतो दधावहै पु ँ्से पुत्राय वित्तय इति ।।२०।।

अथास्या ऊरू विहापयति विजिहीथां द्यावापृथिवी इति तस्यामर्थं तिष्ठाय मुखेन मुख ँ्सन्धाय त्रिरेनामनुलोमामनुमर्ष्टि विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पि ँ्शतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां। पुष्करस्त्रजौ ।।२१।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ तं ते गर्भं हवामहे दशमें मासि सूतये । यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणौ । वायुदशां तथा गर्भं एवं गर्भ दधामि तेऽसाविति ।।२२।।**

**सोष्यन्तीमद्भिरभ्युक्षति । यथा वायुः पुष्करिणीँ समिङ्गयति सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा । इन्द्रस्यायं व्रजः कृतः सार्गलः सपरिश्रयः । तमिन्द्र निर्जहि गर्भेण सावराँ सहेति ।।२३।।**

**जातेऽग्निमुपसमाधायाङ्क आधाय कँ से पृषदाजयँ सनीय पृषदाजयस्योपघातं जुहोत्यस्मिन् सहस्रं पुष्यासमेधमानः रचे गृहे । अस्योपसन्धा माच्छेत्सीत् प्रजया पशुभिश्च स्वाहा । मयि प्राणाँ स्त्वयि मनसा जुहोमि स्वाहा । यत् कर्मणा त्यरीरिचं यद् वा न्यूनमिहाकरम् । अग्निष्टत्स्विष्टकृद् विद्वान् त्विष्टँ सुहुतं करोतु स्वाहा ।।२४।।**

**अथास्य दक्षिणं कर्णमभिनिधाय वाग् वागिति त्रिरथ दधि मधु धृतँ संनीयानन्तर्हितेन जातरूपेण प्राशयति । भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः स्र्वं त्वयि दधामिति ।।२५।।**

**अथास्य नाम करोति वेदोऽसति तदस्य तद गुह्यमेव नाम भवति ।।२६।।**

**अथैनं मात्रे प्रदाय स्तनं प्रयच्छति यस्ते स्तनः शशयो यो मयोमूर्यो रत्नधा वसुविद् यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति तमिह धातवे करोति ।।२७।।**

अथ जनायित्वा पुत्रं पिता स्तन्यपानविधौ बालस्य मातरमामन्त्र्यतेऽनेनमन्त्रेण—

**अथास्य मातरमभिमन्त्रयते । इलासि मैत्रावरुणी वीरे वीरमजीजनत् । सा त्वं वीरवती भव यास्मान् वीरवतोऽकरदिति । तं वा एतमाहुरति पिता बताभूरतिपितामहो बताभूः परमां बत काष्ठां प्रापच्छ्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रा जायत इति ।।२८।।**

हे मैत्रावरुणि ! मित्रावरुणयोः कृपातः प्राप्ता त्वम् इलासि, स्तुतियोग्या पृथिव्यसि । हे वीरे ! पुरुषार्थवती वीरवती वीरपुत्रमाता भव । यतो हि त्वं वीरं पुरुषार्थिनं पुत्रमजीजनत् । अत्र व्यत्ययात् मध्यमपुरुषेप्रथमपुरुषः । अनेन पुत्रेणास्मान् पितृनपि त्वं वीरवतः वीरपुत्रजनकान् अकरत् कृतवती अभूः । एवं कुर्वाणः बालकस्य पिता अतिपिता अतिशयितः पिता येन सोऽतिपिता पितामहः आयुषा श्रिया ब्रह्मवर्चसेन जुष्टो यशस्वी भगवद् भक्तश्च स्यात् । इति संक्षेपः ।।

**।। इति चतुर्थ ब्राह्मणम् ।।**

**।। श्रीराघवः शन्तनोतु ।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। पञ्चमब्राह्मणम् ।।

अथ वँ्शः । पौतिमाषी पुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्राद् गौतमीपुत्रो भारद्वाजीपुत्राद् भारद्वाजीपुत्रः पाराशरीपुत्रत् औपस्वस्तीपुत्रादौपाराशरीपुत्रपस्वस्तीपुत्रः. पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्रः ड्डलम्बीपुत्राच्च बैयाग्रपदीपुत्राच्च वैयाग्रयदीपुत्रः काण्वीपुत्राच्च काणीपुत्राच्च काणीपुत्रः ।।१।।

आत्रेयीपुत्रादात्रेयीपुत्रो गौतमीपुत्राद् गौतमीपुत्रो भारद्वाजीपुत्राद् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रे वात्सीपुत्राद्वात्सीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्राद् वार्कारुणीपुत्र आर्तभागीपुत्रादार्त भागीपुत्रः शौङ्गीपुत्राच्छौङ्गीपुत्रः सांस्कृतीपुत्रात् सांस्कृतीपुत्र आलम्बायनीपुत्रादालम्बायनी पुत्र आलम्बीपुत्रादालम्बीपुत्रो जायन्तीपुत्राज्जयन्तीपुत्रो माण्डूकायनीपुत्रान्माण्डू–कायनीपुत्रो माण्डूकीपुत्रान्माण्डूकीपुत्रः शाण्डिलीपुत्राच्छाण्डलीपुत्रो राथीतरीपुत्राद् राथीतरीपुत्रो भालुकीपुत्राद् भालुकी पुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्राद् वैदभृतीपुत्रः कार्शकेयीपुत्रात् कार्शकेयीपुत्रः प्राचीनोपयोगीपुत्रात् प्राचीनोपयोगीपुत्रः साञ्जीवीपुत्रात् साञ्जीवीपुत्रः प्राश्नीपुत्रादासुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ।।२।।

याज्ञवल्क्याद् याज्ञवल्क्य उद्दालकादुद्दालकोऽरुणरुण उपवेशेरूपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगाज्जिह्वावान् बाध्योगोऽसिताद् वार्षगणादसितो वार्षगणो हरितात् कश्यपाद्धरितः कश्यपः शिल्पात् कश्यपाच्छिल्पः कश्यपः कश्यपान्नैध्रुवेः कश्यपो नैध्रुविर्वाचो वागम्भिण्या अम्भिण्यादित्यादादित्यानीमानि शुक्लानि यजूँ्षि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ।।३।।

समानमा साञ्जीवीपुत्रात् साञ्जीवीपुत्रो माण्डूकायनेर्माण्डूकायनिर्माण्ड–व्यान्माण्द्रव्यः कौत्सात् कौत्सो माहित्थर्माहित्थिर्वामकक्षायणाद् वामकक्षायणः शाण्डिल्याच्छाण्डिल्यो वात्स्याद् वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनाद् यज्ञवचा राजस्तम्बायनन्तुरात् कावषेयात् तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयम्भु ब्रह्मणे नमः ।।४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवम्—

वंशश्च पौतिमासाद्यं ब्रह्मान्तं यदुदाहृतम् ।
ऋषीणां ब्रह्मकल्पानां वन्दे तान् ब्रह्मवादिनाः ।।

बृहदारण्यकनाम्नीमुपनिषदं दिव्यसिद्धान्ताम् ।
वेदान्तकामधेनुं श्रुतिचयनिकरां च षड्भिरध्यायैः ।।

श्रीराघवकृपाभाष्यभूषणेन विभूष्यताम् ।
सीताच्छायानिभां देवीं श्रीरामाय निवेदये ।।

सीतारामकृपावलम्बनबलः श्रीवैष्णवानामहमाचार्यः
श्रुतिपण्डितप्रतिभया शास्त्रोल्लसद्युक्तिभिः ।।
सिद्धान्तामृशालि राघवकृपाभाष्यं ह्यभाषे मुदे ।
श्रीरामस्य च रामभद्रलसिताचार्यो बुधप्रीतये ।।

श्रीराघवकृपाभाष्यं श्रीराघवकृपाफलम् ।
श्रीराघवमुदे भूयात् श्रीराघवकृपाकृतम् ।।

विशिष्टाद्वैतसिद्धान्त मण्डितं तुष्टपण्डितम् ।
बृहदारण्यके भाष्यं पीयन्तां विवुधाः सुखम् ।।श्रीः।।

इति श्रीचित्रकूट सर्वाम्नायश्रीतुलसीपीठाधीश्वर जगद्गुरु—

रामानन्दाचार्यस्वामिरामभद्राचार्यप्रणीतं बृहदारण्यकोपनिषदि षष्ठाध्याये श्री राघवकृपाभाष्यं सम्पूर्णम् ।

।। समाप्तश्चायं ग्रन्थः ।।

।। श्रीराघवः शन्तनोतु ।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

## ।। श्रीः ।।

ध्रुवमिदं, विश्वस्य विश्वेऽपि विचरकाश्चामनन्ति यज्जीवेनात्यन्तिकं सुखं नोपलब्धुं शक्यते केवलैः सांसारिकैर्भोगैः। तत्कृते तु तैः जगन्नियन्तुः परमात्मनः शरणमेवाङ्गीकरणीयम्। अनादिकालादेव सर्गेऽस्मिन् ब्रह्मजिज्ञासासमाधानपराः विचाराः प्रचलन्ति। विषयेऽस्मिन् सर्वे दार्शनिकाः सहमता यद्वेदस्य गूढरहस्यात्मकस्य परब्रह्मणः प्रतिपादनं सम्भवम्।

परब्रह्मणो निश्वासभूता अनन्तज्ञानराशिस्वरूपाः वेदाः ज्ञानकर्मोपासनाख्येषु त्रिषु काण्डेषु विस्कृताः सन्ति। एषां ज्ञानकाण्डाख्य उपनिषद्भागा वेदान्तापरनामधेया ब्रह्मविद्या वैशद्येन विर्वोचता व्याख्याता चास्ति। आसामुपनिषदां [illegible]ज्ञानेनैव ब्रह्मज्ञानं तेन च भवदुःखनिवृत्तिरित्युपनिषदां सर्वातिशायिमहत्वं राद्धान्तयन्ति मनीषिणः। आसु प्रश्नोत्तरात्मकातिरमणीयसुमम्यसरलशैल्या जीवात्मपरमात्मनोर्जगतश्च विस्तृतं व्याख्यानं कृतमस्ति। अनेकैर्महर्षिभिरनेकैः प्रकारैरुद्भावितानां ब्रह्मविषयकप्रश्नानां समाधानानि ब्रह्मवेतृणां याज्ञवल्क्यादिमहर्षीणां मुखेभ्य उपस्थापयन्त्युपनिषदः। भगवता वेदव्यासेन ब्रह्मसूत्रेषु भगवता श्रीकृष्णेन च श्रीगीतायामासामेव सारतत्वं प्रतिपादितम्।

भारतीयदर्शनानामाधारभूता इमे त्रयो ग्रन्थाः विभिन्नसम्प्रदायप्रवर्तकैराचरयैर्व्यख्याताः। एष्वद्वैतवादिन आद्यशङ्कराचार्याः प्रमुखा, अन्ये च द्वैतशुद्धाद्वैतद्वैताद्वैतशिवाद्वैतदिवादिनो विद्वांसः स्वस्वमतानुसारमुपनिषदः व्याख्यापयांबभूवुः।

अथ साम्प्रतिकभारतीयदार्शनिकमूर्धन्यैर्वेदवेदाङ्गपारङ्गतैर्धर्मध्वजधारिधौरेयैः श्रीरामानन्दाचार्यैः श्रीरामानन्दाचार्य श्रीरामभद्राचार्यमहाराजैर्विशिष्टाद्वैतसिद्धान्तमनुसृत्य कृतामिदमुपनिषदां **''श्रीराघवकृपाभाष्यम्''** सर्वत्रैवाभिनवविचारैर्व्युत्पत्तिभिश्चालङ्कृतं विभाति। भाष्येऽस्मिन्नाचार्यचरणैः शब्दव्युत्पत्तिचातुरीचमत्कारेण सर्वोपनिषदां प्रतिपाद्यः भगवान् श्रीराम एवेति सिद्धान्तितम्। मध्ये मध्ये गोस्वामिश्रीतुलसीदासग्रन्थेभ्यः ससंस्कृतरूपान्तरमुदाहृता अंशविशेषासुवर्णे सुरभिमातन्वन्ति। श्रीराघवपदपद्ममधुकराः भक्ता अत्रामन्दानन्दमाप्नुयुरिति भगवन्तं श्रीराघवं निवेदयति।

**डॉ. शिवरामशर्मा**
वाराणसी

CCO. Vasishtha Tripathi Collection: Digitized By Siddhanta eGangotri Gyaan Kosha